M-2873

| शिर्षक | ग्रंथकार | विषय | विस्तार (पुर्ण/अपूर्ण) | टिकाकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विकम सवंत) | Additional Particulars / Remark |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| शारीरकसूत्रभाष्ये रत्नप्रभायां प्रथमाध्यायस्य द्वितीयपाद | — | वेदांत | पूर्ण | — | 6/12 | 326 | संस्कृत | कागद | | | | |

श्रीगणेशायनमः॥ श्रीसरस्वत्यैनमः॥ श्रीरामंसिद्धमतारं गुहाशायिनमांतरं॥ अंतर्यामिणमज्ञेयंवैश्वानरमहंभजे॥१॥ पूर्वपा
देनोत्तरपादयोःसंगतिंवक्तुंवृत्तमनुवदति॥ प्रथमइति॥ जगत्कारणत्वोक्त्याव्यापित्वादिकमर्थात्सिद्धंतदुपजीव्योत्तरंपादद्वयंप्र
वर्त्ततइतिहेतुहेतुमद्भावःसंगतिः कथंपादभेदइत्याशंक्यपादानांप्रमेयभेदमाह॥ अर्थांतरेति॥ आकाशादिशब्दानांस्पष्टब्रह्म
लिंगैर्ब्रह्मणिसमन्वयोदर्शितः अस्पष्टब्रह्मलिंगवाक्यसमन्वयः पादद्वयेवक्ष्यते॥ प्रायेणोपास्यज्ञेयब्रह्मभेदात्पादयोरवांतरभे



ॐ नमः प्रथमेपादेजन्माद्यस्ययतइतिआकाशादेःसमस्तस्यजगतोजन्मादिकारणंब्रह्मेत्युक्तं॥
तस्यसमस्तजगत्कारणस्यब्रह्मणोव्यापित्वंनित्यत्वंसर्वज्ञत्वंसर्वशक्तित्वंसर्वात्मकत्वमित्येवं
जातीयकाधर्माउक्ताएवभवंति॥ अर्थांतरप्रसिद्धानांचकेषांचिच्छब्दानांब्रह्मविषयत्वहेतुप्रति
पादनेनकानिचिद्वाक्यानिस्पष्टब्रह्मलिंगानिसंदिह्यमानानिब्रह्मपरतयानिर्णीतानि॥ पुनरप्यन्या
निवाक्यान्यस्पष्टब्रह्मलिंगानिसंदिह्यंते॥ किंपरंब्रह्मप्रतिपादयंत्याहोस्विदर्थांतरंकिंचिदिति
॥ तन्निर्णयायद्वितीयतृतीयपादावारभ्येते॥ सर्वत्रप्रसिद्धोपदेशात्॥१॥ इदमाम्नायते॥ ॥
सर्वंखल्विदंब्रह्मतज्जलानितिशांतउपासीत॥ अथखलुक्रतुमयःपुरुषो॥ ॥

दइतिभावः छांदोग्यवाक्यमुदाहरति॥ इदमितितस्माज्जायतइतितज्जं॥ तस्मिंल्लीयतइतितल्लंतस्मिन्ननितिचेष्टतइतितदनं
तज्जंचतल्लंचतदनंचेतितज्जलान्॥ कर्मधारयेऽस्मिन्शाकपार्थिवन्यायेनमध्यमपदस्यतच्छब्दस्यलोपः तज्जलानमितिवाच्येछां
दसोऽवयवलोपः इतिशब्दोहेतौसर्वमिदंजगद्ब्रह्मैवतद्विवर्त्तत्वादित्यर्थः ब्रह्मणिमित्रामित्रभेदाभावाच्छांतोरागादिरहितोभवेदिति
गुणविधिः॥ सक्रतुमुपासनंकुर्वीतेतिविहितोपासनस्योपासीतेत्यनुवादात्फलमाह॥ अथेति॥ क्रतुमयःसंकल्पविकारइत्यर्थः॥५

पुरुषस्यध्यानविकारत्वंस्फुटयति॥ यथेति॥ इहयद्ध्यायतिमृत्वाध्यानमहिम्नातद्ध्येयरूपेणजायतइत्यर्थः॥ क्रतुमयःसंकल्पप्रधान
इतिवार्थः क्रतोर्विषयमाह॥ मनइति॥ ब्रह्मेत्युपक्रमान्मनोमयंप्राणशरीरंभारूपंसत्यसंकल्पमंतर्हृदयेध्येयमित्यर्थः॥ पूर्वत्रब्रह्मलिंगैर
ब्रह्मलिंगबाधउक्तः नतथेहोपक्रमेब्रह्मणोलिंगमस्तिकिंतुप्रकरणंतच्चशांतिगुणविधानार्थमन्यथासिद्धंअतोजीवलिंगंबलीयइतिप्र॥

यथाक्रतुरस्मिन्लोकेपुरुषोभवतितथेतःप्रेत्यभवतिसक्रतुंकुर्वीतमनोमयःप्राणशरीरोभारूपइत्यादि॥ तत्र
संशयः॥ किमिहमनोमयत्वादिभिर्धर्मैःशारीरआत्मोपास्यत्वेनोपदिश्यतआहोस्वित्परंब्रह्मेति॥ किंतावत्प्राप्तं
॥ शारीरइति॥ कुतः॥ तस्यहिकार्यकरणाधिपतेःप्रसिद्धोमनआदिभिःसंबंधोनपरस्यब्रह्मणः। अप्राणोह्यमनाःशु
भ्रइत्यादिश्रुतिभ्यः॥ ननुसर्वंखल्विदंब्रह्मेतिस्वशब्देनैवब्रह्मोपात्तंकथमिहशारीरआत्मोपास्यआशंक्यते॥ नैषदोषः॥
नेदंवाक्यंब्रह्मोपासनाविधिपरंकिंतर्हिशमविधिपरं॥ यत्कारणंसर्वंखल्विदंब्रह्मतज्जलानितिशांतउपासीतेत्या
ह॥ एतदुक्तंभवति॥ यस्मात्सर्वमिदंविकारजातंब्रह्मैव॥ तज्जत्वात्तल्लत्वात्तदनत्वाच्च नचसर्वस्यैकात्मत्वेरागादयः
संभवंति॥ तस्माच्छांतउपासीतेति नचशमविधिपरत्वेसत्यनेनवाक्येनब्रह्मोपासनंनियंतुंशक्यते॥ उपासनंतुस
क्रतुंकुर्वीतेत्यनेनविधीयते॥ क्रतुःसंकल्पोध्यानमित्यर्थः॥ तस्यचविषयत्वेनश्रूयते॥ मनोमयःप्राणशरीरइतिजी
वलिंगमतोब्रूमोजीवविषयमेतदुपासनमिति॥ सर्वकर्मासर्वकामइत्याद्यपिश्रूयमाणंपर्यायेणजीवविषयमुपपद्य

त्युदाहरणेनपूर्वपक्षयति॥ शारीरइत्यादिना॥ श्रुतिमाशंक्याऽन्यथासिध्यापरिहरति॥ नैषदोषइति॥ शमविधिपरत्वेहेतुमाह॥ यत्कारणमि
ति॥ यतएवमाह तस्माच्छमविधिपरमित्यन्वयः॥ नचशमेति॥ शमध्यानयोर्विधौवाक्यभेदापत्तेरित्यर्थः॥ जन्मपरंपरयाजीवस्यापिसर्वकर्मत्वा
दिसंभवमाह॥ सर्वकर्मेति॥ सर्वाणिकर्माणियस्यसर्वेकामाभोग्यायस्यसर्वगंधःसर्वरसइत्यादिरादिशब्दार्थः॥

आराग्रमात्रस्येति॥ तोत्रप्रोतः॥ यः शल्याकाग्रपरिमाणस्येत्यर्थः॥ सर्वत्रप्रसिद्धब्रह्मणस्तत्रोपास्यत्वोपदेशाच्च जीवउपास्य इति सूत्रार्थ-
माह॥ सर्वत्रेति॥ यत्र फलं नोच्यते तत्र पूर्वोत्तरपक्षसिद्धिः फलमिति मंतव्यं यद्यपि निराकांक्षं ब्रह्म तथापि मनः प्रचुरस्सुपाधिरस्य प्राणः
शरीरमस्येति समासांतर्गतसर्वनाम्नः सन्निहितविशेष्याकांक्षत्वात् ब्रह्म संबध्यते॥ स्योनं ते सदनं करोमीति संस्कारार्थसदनस्य निराकांक्षस्या-



एष म आत्मांतर्हृदये ऽणीयान्व्रीहेर्वा यवाद्वेति च हृदयायतनत्वमणीयस्त्वं चाराग्रमात्रस्य जीवस्यावकल्पते॥
नापरिच्छिन्नस्य ब्रह्मणः॥ ननु ज्यायान्पृथिव्या इत्याद्यपि न परिच्छिन्ने ऽवकल्पत इत्यत्र ब्रूमो न तावदणीयस्त्वं ज्या-
यस्त्वं चोभयमेकस्मिन्समाश्रयितुं शक्यं विरोधादन्यतराश्रयणे च प्रथमश्रुतत्वादणीयस्त्वं युक्तमाश्रयितुं॥ ज्या-
यस्त्वं तु ब्रह्मभावापेक्षया भविष्यतीति निश्चिते जीवविषयत्वे यदंते ब्रह्मसंकीर्तनमेतद्ब्रह्मेति तदपि प्रकृतपरामर्शा-
र्थत्वाज्जीवविषयमेव॥ तस्मान्मनोमयत्वादिभिर्धर्मैर्जीव उपास्य इत्येवं प्राप्ते ब्रूमः॥ परमेव ब्रह्म मनोमयत्वादिभिर्धर्मैरु-
पास्यं कुतः॥ सर्वत्र प्रसिद्धोपदेशात्। ।सर्वेषु वेदांतेषु प्रसिद्धं ब्रह्मशब्दस्यालंबनं जगत्कारणमिह च सर्वं खल्विदं ब्र-
ह्मेति वाक्योपक्रमे श्रुतं तदेव मनोमयत्वादिभिर्धर्मैर्विशिष्टमुपदिश्यत इति युक्तमेवं च प्रकृतहानाप्रकृतप्रक्रिये-
न भविष्यतः॥ ननु वाक्योपक्रमे शमविधिविवक्षया ब्रह्म निर्दिष्टं न स्वविवक्षयेत्युक्तं॥ अत्रोच्यते॥ यद्यपि शमविधिवि-
वक्षया ब्रह्म निर्दिष्टं तथापि मनोमयत्वादिषूपदिश्यमानेषु तदेव ब्रह्म सन्निहितं भवति॥ जीवस्तु न सन्निहितो॥



पि तस्मिन्सीदेति साकांक्षतच्छब्देन परामर्शदर्शनादित्याह॥ अत्रोच्यत इति॥ स्योनं पात्रे ते पुरोडाशस्येति श्रुत्यर्थः जीवोपि लिंगात्सन्निहि-
त इत्यत आह॥ जीवस्त्विति इदं हि लिंगद्वयं लोकसिद्धं जीवं सन्निधापयति॥ दुःखित उपास्यत्वायोग्यत्वात्फलाभावाच्च अतो विश्वजिन्न्या-
येन सर्वाभिलषितमानंदरूपं ब्रह्मैवोपासनाक्रियानुबंधीति भावः॥

किंचब्रह्मपरश्रुत्यालिंगबाधइत्याह॥नचेति अन्यतराकांक्षानुगृहीतंफलवत्प्रकरणंविफललिंगाद्बलीयइतिसमुदायार्थः॥ १॥
वस्तुनोविवक्षायाःफलमुपादानंस्वीकारःसचप्रक्रान्तेषुगुणेष्वस्तीतिविवक्षोपचारइत्याह॥ तथाप्युपादानेनेति॥ नन्विदंप्राह्यमिदंत्याज्य

नचस्वशब्देनोपात्तत्त्वमितिवैषम्यम्॥१॥ विवक्षितगुणोपपत्तेश्च॥२॥ वक्तुमिष्टाविवक्षिताः यद्यप्यपौ
रुषेयेवेदेवक्तुरभावान्नेच्छार्थःसंभवति तथाप्युपादानेनफलेनोपचर्यते॥ लोकेहियच्छब्दाभिहितमु
पादेयंभवतितद्विवक्षितमित्युच्यते॥यदनुपादेयंतदविवक्षितमिति॥ तद्वद्वेदेप्युपादेयत्वेनाभिहितंविव
क्षितंभवतीतरदविवक्षितं॥उपादानानुपादानेतुवेदवाक्यतात्पर्यातात्पर्याभ्यामवगम्येते॥ तदिहयेविव।
क्षितागुणाउपासनायामुपादेयत्वेनोपदिष्टाःसत्यसंकल्पप्रभृतयस्तेपरस्मिन्ब्रह्मण्युपपद्यंते॥ सत्यसं
कल्पत्वंहिसृष्टिस्थितिसंहारेष्वप्रतिबद्धशक्तित्वात्परमात्मनएवावकल्पते॥ परमात्मगुणत्वेनचय।
आत्मापहतपाप्मेत्यत्रसत्यकामःसत्यसंकल्प इतिश्रुतमाकाशात्मेत्यादिनाकाशवदात्माऽस्येत्यर्थः॥
सर्वगतत्वादिभिर्धर्मैः संभवत्याकाशेनसाम्यंब्रह्मणोज्यायान्पृथिव्याइत्यादिनाचैतदेवदर्शयति॥ यदाप्या
काशआत्माऽस्येतिव्याख्यायते॥ तदापिसंभवतिसर्वजगत्कारणस्यसर्वात्मनोब्रह्मणआकाशात्मत्वमत
एवसर्वकर्मेत्यादि॥ एवमिहोपास्यतयाविवक्षितागुणाब्रह्मण्युपपद्यंते॥ यत्तूक्तंमनोमयःप्राण
शरीर इतिजीवलिंगंनतद्ब्रह्मण्युपपद्यतइति॥ तदपिब्रह्मण्युपपद्यतइतिब्रूमः॥ ॥

मितिधीर्विवक्षाधीनावेदेकुतःस्यादित्यतआह॥उपादानानुपादानेत्विति॥ तात्पर्यंनाम फलवदर्थप्रतीत्यनुकूलत्वंशब्दधर्मःउपक्रमादिना
तस्यज्ञानात्तयोरवगमइत्यर्थः॥ तदिहेति॥ ततस्तात्तात्पर्यवत्वादित्यर्थः॥

सर्वात्मत्वे प्रमाणमाह तथा चेति जीर्णः स्थविरो यो दंडेन वंचति गच्छति सोऽपि त्वमेव यो जातो बालः स त्वमेव सर्वतः सर्वासु दिक्षु श्रुत-अ॰१पा॰
यः श्रोत्राण्यस्येति सर्वतः श्रुतिमत्॥ सर्वजंतूनां प्रसिद्धाः पाण्यादयस्तस्येति सर्वात्मत्वोक्तिः॥२॥ ननु जीवधर्माश्चेद्ब्रह्मणि योज्यंते
नर्हि ब्रह्मधर्माः स्वजीवे किमिति न योज्यंते तत्राह॥ अनुपपत्तेरिति॥ सूत्रं व्याचष्टे॥ पूर्वेणेति॥ सर्वात्मत्वादिरुक्तन्यायः कल्पितस्य धर्मा अ

सर्वात्मत्वाद्धि ब्रह्मणो जीवसंबंधीनि मनोमयत्वादीनि ब्रह्मसंबंधीनि भवंति॥ तथा च ब्रह्मविषये श्रुतिस्मृ
ती भवतः॥ त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी त्वं जीर्णो दंडेन वंचसि त्वं जातो भवसि विश्वतोमुख इति
॥ सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखं॥ सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठतीति च॥ अप्राणो ह्यमनाः शु
भ्र इति श्रुतिः शुद्धब्रह्मविषये यं तु मनोमयः प्राणशरीर इति सगुणब्रह्मविषयेति विशेषः अतो विवक्षितगुणोप
पत्तेः परमेव ब्रह्मोपास्यत्वेनोपदिष्टमिति गम्यते॥२॥ अनुपपत्तेस्तु न शारीरः॥३॥ पूर्वेण सूत्रेण ब्रह्मणि विवक्षिता
नां गुणानामुपपत्तिरुक्ताऽनेन तु शारीरे तेषामनुपपत्तिरुच्यते॥ तुशब्दोऽवधारणार्थः॥ ब्रह्मैवोक्तेन न्यायेन म
नोमयत्वादिगुणं॥ न तु शारीरो जीवो मनोमयत्वादिगुणः॥ यत्कारणं सत्यसंकल्प आकाशात्माऽवाक्यऽनाद
रो ज्यायान्पृथिव्या इत्येवंजातीयका गुणा न शारीरे आंजस्येनोपपद्यंते॥ शारीर इति शरीरे भव इत्यर्थः॥ नन्वीश्व
रोऽपि शरीरे भवति सत्यं शरीरे भवति॥ न तु शरीर एव भवति॥ ज्यायान्पृथिव्या ज्यायानंतरिक्षादाकाशवत्सर्वग
तश्च नित्य इति च व्यापित्वश्रवणात्॥ जीवस्तु शरीर एव भवति तस्य भोगाधिष्ठानाच्छरीरादन्यत्र वृत्त्यभावात्

धिष्ठाने संबध्यंते न अधिष्ठानधर्माः कल्पित इति भावः वागेव वाकः सोऽस्यास्तीति वाकी न वाकी अवाकी अनिंद्रिय इत्यर्थः कुत्राप्यादरः का
मोऽस्य नास्तीत्यनादरः नित्यतृप्त इत्यर्थः जायस्वाद्यनुपपत्तौ शारीर इति परिच्छेदो हेतुः सूत्रोक्तः स तु जीवस्यैव नेश्वरस्येत्याह॥ सत्यमित्यादि

प्रापकत्वेनव्यपदिशतीतिसंबंधः कर्मकर्तृव्यपदेशपदस्यार्थांतरमाह ॥ तथोपास्येति ॥ ४ ॥ एकार्थत्वंप्रकरणस्यसमानत्वं ॥ अंतरा
त्मन्निति विभक्तिलोपश्छांदसः शब्दयोर्विशेषो विभक्तिभेदस्तस्मात्तदर्थयोर्भेद इतिसूत्रार्थः ॥ ५ ॥ स्मृतेर्हृदिस्थस्यजीवाद्भेदोक्तेर

कर्मकर्तृव्यपदेशाच्च ॥ ४ ॥ इतश्च न शारीरो मनोमयत्वादिगुणः ॥ यस्मात्कर्मकर्तृव्यपदेशो भवति ॥ ए
तमितः प्रेत्याभिसंभवितास्मीति ॥ एतमिति प्रकृतं मनोमयत्वादिगुणमुपास्यमात्मानं कर्मत्वेन प्राप्यत्वेन ।
व्यपदिशति ॥ अभिसंभवितास्मीति शारीरमुपासकं कर्तृत्वेन प्रापकत्वेन । अभिसंभवितास्मीति प्राप्तास्मीत्यर्थः
॥ न च सत्यां गतावेकस्य कर्मकर्तृव्यपदेशो युक्तः तथोपास्योपासकभावोपि भेदाधिष्ठान एव ॥ तस्मादपि न शारी
रो मनोमयत्वादिविशिष्टः ॥ ४ ॥ शब्दविशेषात् ॥ ५ ॥ इतश्च शारीरादन्यो मनोमयत्वादिगुणो ॥ यस्माच्छब्दविशेषो भव
ति ॥ समानप्रकरणे श्रुत्यंतरे यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतंदुलो वैवमयमंतरात्मन् पु।
रुषो हिरण्मय इति शारीरस्यात्मनो यः शब्दोभिधायकः सप्तम्यंतोंतरात्मन्निति तस्माद्विशिष्टोऽन्यः प्रथ
मांतः पुरुषशब्दो मनोमयत्वादिविशिष्टस्यात्मनोऽभिधायकः ॥ तस्मात्तयोर्भेदोधिगम्यते ॥ ५ ॥ स्मृते।
श्च ॥ ६ ॥ स्मृतिश्च शारीरपरमात्मनोर्भेदं दर्शयति ईश्वरः सर्वभूतानां हृद्देशेर्जुन तिष्ठति ॥ भ्रामयन्सर्वभू।
तानि यंत्रारूढानि माययेत्याद्या ॥ अत्राह ॥ कः पुनरयं शारीरो नाम परमात्मनोऽन्यो यः प्रतिषिध्यते अ।
नुपपत्तेस्तु न शारीर इत्यादिना ॥ श्रुतिस्तु नाऽन्योऽतोऽस्ति द्रष्टा नाऽन्योऽतोऽस्ति श्रोतेत्येवंजातीयका परमात्मनोऽन्यमा
((त्मानं वारयति ॥ तथा स्मृतिरपि ॥

त्रापि हृदिस्थो मनोमय ईश्वर इत्याह ॥ स्मृतेश्चेति भूतानि जीवान् यंत्रं शरीरं ॥ अत्र
॥ सूत्रकृता सत्यभेद उक्त इति भ्रांतिनिरासायेक्षत्यधिकरणे निरस्तमपि चोद्यमुद्भाव्य निरस्यति ॥ अत्राहेत्यादिना ॥ ॥

ब्रा॰भा॰
स्त्र॰टी॰
७२

त्वदुक्तरीत्या वस्तुत एकत्वमेव भेदस्तु कल्पितः सूत्रेष्वनूद्यत इत्याह ॥ सत्यमिति ॥ ६ ॥ अर्भकमोको यस्य सोऽर्भकौकास्तस्य भावः अ-
स्तत्वं तस्मादार्थिकमल्पत्वं ॥ अणीयानित्यल्पत्ववाचकशब्देनापि श्रुतमित्याह ॥ स्वशब्देनेति ॥ नायं दोष इत्युक्तं विवृणोति ॥ नना

अ॰पा॰
२

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारतेत्येवंजातीयकेति ॥ अत्रोच्यते ॥ सत्यमेवमेतत्पर एव त्वात्मा देहें-
द्रियमनोबुद्ध्युपाधिभिः परिछिद्यमानो बालैः शारीर इत्युपचर्यते ॥ यथा घटकरकाद्युपाधिवशादपरि-
छिन्नमपि नभः परिछिन्नवदवभासते तद्वत् ॥ तदपेक्षया च कर्मकर्तृत्वादिभेदव्यवहारो न विरुध्यते प्राक्तत्व-
मसीत्यात्मैकत्वोपदेशग्रहणात् ॥ गृहीते त्वात्मैकत्वे बंधमोक्षादिसर्वव्यवहारपरिसमाप्तिरेव स्यात् ॥ ६ ॥
अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ ७ ॥ अर्भकमल्पमोको नीडमेष आत्मां-
तर्हृदय इति परिछिन्नायतनत्वात् ॥ स्वशब्देन चाणीयान् व्रीहेर्वा यवाद्वेत्यणीयस्त्वव्यपदेशात् शारीर ए-
वाराग्रमात्रो जीव इहोपदिश्यते न सर्वगतः परमात्मेति यदुक्तं तत्परिहर्तव्यं ॥ अत्रोच्यते ॥ नायं दोषः ॥ न
तावत्परिछिन्नदेशस्य सर्वगतत्वव्यपदेशः कथमप्युपपद्यते ॥ सर्वगतस्य तु सर्वदेशेषु विद्यमानत्वात्
परिछिन्नदेशव्यपदेशोपि कयाचिदपेक्षया संभवति ॥ यथा समस्तवसुधाधिपतिरपि हि सन्नयोध्याधिपति-
रिति व्यपदिश्यते ॥ कया पुनरपेक्षया सर्वगतः सन्नीश्वरोऽर्भकौका अणीयांश्च व्यपदिश्यत इति ॥ निचाय्यत्वा-
देवमिति ब्रूमः ॥ एवमणीयस्त्वादिगुणगणोपेत ईश्वरस्तत्र हृदयपुंडरीके निचाय्यो द्रष्टव्य उपदिश्यते ॥ ९

एम॰
७२

वदिति ॥ कथमपि ब्रह्मभावापेक्षयापीत्यर्थः परिछेदत्यागं विना ब्रह्मत्वासंभवात्तत्त्यागे च ब्रह्मण एवोपास्यत्वमायातीति भावः ॥ विभोः प-
रिछेदोक्तौ दृष्टांतमाह ॥ यथा समस्तेति ॥ सर्वेश्वरस्यायोध्यायां स्थित्यपेक्षया परिछेदोक्तिवदल्पहृदि ध्येयत्वेन तथोक्तिरित्यर्थः ॥ ७ ॥

ननु किमिति हृदयमेव प्रायशो च्यते तत्राह तत्रेति हृदये परमात्मनो बुद्धिवृत्तिग्राहिका भवति अत ईश्वराभिव्यक्तिस्थानत्वात् तदुक्तिरित्यर्थः॥ व्यो
मवद्दृष्टांतासिनाशंकासंतापिका चिनत्ति चेत्याह॥ ननु यदाशंक्य तद्दृत्यादिना भिन्नायतनत्वेपि व्योम्नः सत्यभेदाद्यभावादिति भावः॥ ७॥ ब्रह्मणो हा।

यथा शालग्रामे हरिस्तत्रास्य बुद्धिविज्ञानं ग्राहकं सर्वगतो पीश्वरस्तत्रोपास्यमानः प्रसीदति॥ व्योमवच्चैतत् द्रष्टव्यं॥ यथा सर्वगतमपि सत् व्योम सूचीपाशाद्यपेक्षया ऽर्भकौकोणीयश्च व्यपदिश्यते॥ एवं ब्रह्मापि तदेवं निचाय्यत्वापेक्षं ब्रह्मणो ऽर्भकौकस्त्वमणीयस्त्वं च न पारमार्थिकं॥ ननु यदाशंक्यते हृदयायतनत्वात् ब्रह्मणो हृदयायतनानां च प्रतिशरीरं भिन्नत्वात् भिन्नायतनानां च शुकादीनामनेकत्वसावयवत्वाऽनित्यत्वादिदोषदर्शनात् ब्रह्मणोपि तत्प्रसंग इति तदपि परिहृतं भवति॥ ७॥ संभोगप्राप्तिरिति चेन्न वैशेष्यात्॥ ८॥ व्योमवत्सर्वगतस्य ब्रह्मणः सर्वप्राणिहृदयसंबंधाच्चिद्रूपतया च शारीरादविशिष्टत्वात्सुखदुःखादिसंभोगोऽप्यविशिष्टः प्रसज्येत॥ एकत्वाच्च॥ न हि परस्मादात्मनोऽन्यः कश्चिदात्मा संसारी विद्यते॥ नान्योतोस्ति विज्ञातेत्यादिश्रुतिभ्यः॥ तस्मात्परस्यैव संसारसंभोगप्राप्तिरिति चेन्न॥ न वैशेष्यात्॥ न तावत्सर्वप्राणिहृदयसंबंधाच्छारीरवत् ब्रह्मणः संभोगप्रसंगो वैशेष्यात्॥ विशेषो हि भवति शारीरपरमेश्वरयोरेकः कर्त्ता भोक्ता धर्माधर्मसाधनः सुखदुःखादिमांश्च॥ एकस्तद्विपरीतोऽपापत्वादिगुणः॥ एतस्मादनयोर्विशेषादेकस्य भोगो नेतरस्य॥ यदि च सन्निधानमात्रेण वस्तुशक्तिमनाश्रित्य कार्यसंबंधोऽभ्युपगम्येत आकाशादीनामपि दाहादिप्रसंगः॥

८ ईत्वेः निष्ठसंभोगापत्तेर्जीववत्सवहार्द उपास्य इति शंकां व्याचष्टे॥ व्योमवदिति॥ ब्रह्म भोक्तृ स्यात् हार्दत्वे सति चेतनत्वात् जीववत् भिन्नत्वाच्च जीववदित्युक्तं निरस्यति॥ न वैशेष्यादिति॥ धर्माधर्मत्वमुपाधिरित्यर्थः॥ अयमेव विशेषो वैशेष्यं स्वार्थे ष्यञ् प्रत्ययः विशेषस्यातिशयाऽर्थो वा धर्मादेः स्वाश्रये फलहेतुत्वमतिशयस्तस्मादि

शा॰भा॰
र॰प्र॰टी॰
७३

अ॰१पा॰
२

किंच विभवो बहव आत्मान इति वादिनामेकस्मिन्देहे सर्वात्मनां भोक्तृत्वप्रसंगः स्वकर्मार्जितस्वदेहे भोग इति परिहारश्च तुल्य इ-
ति नवयं पर्यनुयोज्या इत्याह ॥ सर्वगतेति ॥ वस्तुतस्तेषामेव भोगसांकर्यमित्यग्रे वक्ष्यते ॥ ब्रह्मणो जीवाभिन्नत्वं श्रुत्या निश्चित्य
तेन भोक्तृत्वानुमाने उपजीव्यश्रुतिबाधमाह ॥ यथा शास्त्रमिति ॥ अर्धं मुखमात्रं जरत्या वृद्धायाः कामयते नांगानीति सोयमर्ध

सर्वगतानेकात्मवादिनामपि समावेतौ चोद्यपरिहारौ यद्वाप्येकत्वात् ब्रह्मण आत्मांतराभावात् शारीरस्य
भोगेन ब्रह्मणो भोगप्रसंग इत्यत्र वदामः ॥ इदं तावद्देवानां प्रियः प्रष्टव्यः कथमयं त्वयात्मांतराभावोऽध्यवसि-
त इति तत्त्वमस्यहं ब्रह्मास्मि नान्योतोस्ति विज्ञातेत्यादिशास्त्रेभ्य इति चेत् ॥ यथाशास्त्रं तर्हि शास्त्रीयोर्थः प्रतिप-
त्तव्यो न तत्रार्द्धजरतीयं लभ्यं ॥ शास्त्रं च तत्त्वमसीत्यपहतपाप्मत्वादिविशेषणं ब्रह्म शारीरस्यात्मत्वेनोपदि-
शत् शारीरस्यैव तावदुपभोक्तृत्वं वारयति ॥ कुतस्तदुपभोगेन ब्रह्मण उपभोगप्रसंगः ॥ अथागृहीतं शारी-
रस्य ब्रह्मणैकत्वं तदा मिथ्याज्ञाननिमित्तः शारीरस्योपभोगो न तेन परमार्थरूपस्य ब्रह्मणः संस्पर्शो न हि
बालैस्तलमलिनत्वादिभिर्व्योम्नि विकल्प्यमाने तलमलिनतादिविशिष्टमेव परमार्थतो व्योम भवति ॥ तदा-
ह न वैशेष्यादिति नैकत्वेपि शारीरस्योपभोगेन ब्रह्मण उपभोगप्रसंगो वैशेष्यात् विशेषो हि भवति मिथ्याज्ञा-
नसम्यक्ज्ञानयोः मिथ्याज्ञानकल्पित उपभोगः सम्यक्ज्ञानदृष्टमेकत्वं ॥

((जरतीयन्यायः स चात्र न युक्तः ॥ नह्यभे-
दमंगीकृत्य भोक्तृत्वं त्यक्तुं युक्तं श्रुत्यैवाभेदसिध्यर्थं भोक्तृत्ववारणादित्याह ॥ शास्त्रं चेति ॥ नन्वेकत्वं मया श्रुत्या न गृहीतं येनोपजीव्यबाधः
स्यात्किं तु त्वदुक्त्या गृहीतमित्याशंक्य बिंबप्रतिबिंबयोः कल्पितभेदेन भोक्तृत्वाभोक्तृत्वव्यवस्थोपपत्तेरप्रयोजको हेतुरित्याह ॥ अ-
था गृहीतमित्यादिना ॥ कल्पितासंगित्वमधिष्ठानस्य वैशेष्यमित्यस्मिन्नर्थे पि सूत्रं पातयति ॥ तदाहेति ॥

राम॰
७३

॥

ब्रह्मणो हार्द्दत्वे बाधकाभावात् शांडिल्यविद्यावाक्यं ब्रह्मण्युपास्येसमन्वितमिति सिद्धं ॥ ९ ॥ अत्ताचराचरग्रहणात् यस्य ब्रह्मक्षत्रा-
दिजगदोदनो मृत्युः सर्वप्राणिमारकोपि यस्योपसेचनं ओदनसंस्कारकघृतप्रायः सोत्ता यत्र शुद्धे चिन्मात्रे भेदकल्पनया वर्त्तते न तु शुद्धे ब्र-
ह्मणि इत्याह इत्थं ईश्वरस्याप्यधिष्ठानभूतं को वेद वित्तं मुख्याद्युपायं विना कोपि न जानातीत्यर्थः ॥ संशयबीजमाह ॥ विशेषेति ॥ स त्वमग्निं प्रब्रूही-
त्यग्नेः येयं प्रेते विचिकित्सेति जीवस्य अन्यत्र धर्मादिति ब्रह्मणः प्रश्नः लोकादिमग्निं तमुवाचेत्यग्नेः हंत त इदं प्रवक्ष्यामीति त्रयोः प्रति-

॥ न च मिथ्याज्ञानकल्पितेनोपभोगेन सम्यक्ज्ञानदृष्टं वस्तु संस्पृश्यते ॥ तस्मान्नोपभोगगंधोपि शक्य ई-
श्वरस्य कल्पयितुं ॥ ८ ॥ अत्ताचराचरग्रहणात् ॥ ९ ॥ कठवल्लीषु पठ्यते ॥ यस्य ब्रह्म च क्षत्रं चोभे भवत ओ-
दनः मृत्युर्यस्योपसेचनं क इत्था वेद यत्र स इति ॥ अत्र कश्चिदोदनोपसेचनसूचितो ऽत्ता प्रतीयते ॥ तत्र कि-
मग्निरत्ता स्यादुत जीवो ऽथवा परमात्मेति संशयः ॥ विशेषानवधारणात् ॥ त्रयाणां चाग्निजीवपरमात्मनाम-
स्मिन् ग्रंथे प्रश्नोपन्यासोपलब्धेः ॥ किं तावत्प्राप्तं ॥ अग्निरत्तेति ॥ कुतः अग्निरन्नाद इति श्रुतिप्रसिद्धिभ्यां ॥
जीवो वा ऽत्ता स्यात् तयोरन्यः पिप्पलं स्वाद्वत्तीति दर्शनात् न परमात्मा ऽनश्नन्नन्यो अभिचाकशीतीति दर्शनादित्ये-
वं प्राप्ते ब्रूमः ॥ अत्ता ऽत्र परमात्मा भवितुमर्हति ॥ कुतः चराचरग्रहणात् ॥ चराचरं हि स्थावरजंगमं मृत्यूप-
सेचनमिहाद्यत्वेन प्रतीयते ॥ तादृशस्य चाद्यस्य न परमात्मनो ऽन्यः कार्त्स्न्येनात्ता संभवति ॥

वचनमुपलभ्यत इत्य-
र्थः ॥ पूर्वत्र ब्रह्मणो भोक्तृत्वं नास्तीत्युक्तं तदुपजीव्य पूर्वपक्षयति ॥ किं तावदिति ॥ अग्निप्रकरणमतीतमित्यरुचेराह ॥ जीवो वेति ॥ पूर्वप-
क्षे जीवोपास्तिः सिद्धांते निर्विशेषब्रह्मज्ञानमिति फलभेदः ओदनशब्दो भोग्यवाचीति पूर्वपक्षः सिद्धांतस्तु ब्रह्मक्षत्रशब्दैरुपस्थापित-
कार्यमात्रे गौणः ओदनशब्दः गुणश्चात्र मृत्यूपसेचनपदेन सन्निधापितं प्रसिद्धौदनगतं विनाश्यत्वं गृह्यते ॥ ॥

गौणशब्दस्य सन्निहितगुणग्राहित्वात् तथाच सर्वस्य विनाश्यत्वेन भानाल्लिंगादीश्वरोत्तेत्याह ॥ नैष दोष इति ॥ तस्य सन्निहितत्वा दिति पिप्पलं स्वादूत्तीति भोगस्य पूर्वोक्तत्वादित्यर्थः ॥ ९ ॥ १० ॥ २ ॥ अत्तृवाक्यानंतरवाक्यस्यापि ज्ञेयात्मनि समन्वयमाह ॥ गुहां मिति ॥ ऋतमवश्यंभावि कर्मफलं पिबंतौ भुंजानौ सुकृतस्य कर्मणो लोके कार्ये देहे परस्य ब्रह्मणोर्द्धे स्थानमर्हतीति परार्ध्यं

परमात्मा तु विकारजातं संहरन्सर्वमत्तीत्युपपद्यते ॥ नन्विह चराचरग्रहणं नोपलभ्यते कथं सि द्धवच्चराचरग्रहणं हेतुत्वेनोपादीयते ॥ नैष दोषः ॥ मृत्यूपसेचनत्वेन सर्वस्य प्राणिनिकायस्य प्रतीय मानत्वाद्ब्रह्मक्षत्रयोश्च प्राधान्यात्प्रदर्शनार्थत्वोपपत्तेः ॥ यत्तु परमात्मनोपि नात्तृत्वं संभवति अनश्न न्नन्यो अभिचाकशीतीति दर्शनादिति ॥ अत्रोच्यते ॥ कर्मफलभोगस्य प्रतिषेधक मेतद्दर्शनं ॥ तस्य स न्निहितत्वात् ॥ न विकारसंहारस्य प्रतिषेधकं सर्ववेदांतेषु सृष्टिस्थितिसंहारकारणत्वेन ब्रह्मणः प्र सिद्धत्वात् ॥ तस्मात्परमात्मैवेहात्ता भवितुमर्हति ॥ ९ ॥ प्रकरणाच्च ॥ १० ॥ इतश्च परमात्मैवेहात्ता भ वितुमर्हति ॥ यत्कारणं प्रकरणमिदं परमात्मनः ॥ न जायते म्रियते वा विपश्चिदित्यादि प्रकृतग्रह णं च न्याय्यं क इत्था वेद यत्र स इति च दुर्विज्ञानत्वं परमात्मलिंगं ॥ १० ॥ २ ॥ गुहां प्रविष्टावात्मानौ हि त द्दर्शनात् ॥ ११ ॥ कठवल्लीष्वेव पठ्यते ॥ ऋतं पिबंतौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्द्धे ॥ छायातपौ

ब्रह्मविदो वदंति पंचाग्नयो ये च त्रिणाचिकेताः इ

हृदयं परमं श्रेष्ठं तस्मिन् या गुहा नभो रूपा बुद्धिरूपा वा तां प्रविश्य । स्थितौ छायातपवत्मिथो विरुद्धौ तौ च ब्रह्मविदः कर्मिणश्च वदंति ॥ त्रिणाचिकेतोग्निश्चितो यैस्ते त्रिणाचिकेताः ते पि वदंतीत्यर्थः नाचिकेतवाक्यानामध्ययनं तदर्थज्ञानं तदनुष्ठानं चेति त्रित्वं बोध्यं ॥ ॥

बुद्ध्यवच्छिन्नजीवस्य परमात्मनश्च प्रकृतत्वात् संशयमाह तत्रेति । पूर्वोत्तरपक्षयोः फलं स्वयमेवाह यदीत्यादिना तदपि जीवस्य बुद्धिवैलक्षण्यमपी
त्यर्थः मनुष्ये प्रेते मृते सतीति येयं विचिकित्सा संशयः परलोके भोक्ता अस्तीत्येके नास्तीत्यन्ये अतस्त्वयोपदिष्टोहमेतदात्मतत्त्वं जानीयामित्यर्थः तदपि

तत्र संशयः किमिह बुद्धिजीवौ निर्दिष्टावुत जीवपरमात्मानाविति ॥ यदि बुद्धिजीवौ ततो बुद्धिप्रधानात्कार्यक
रणसंघातात् विलक्षणो जीवः प्रतिपादितो भवति ॥ तदपीह प्रतिपादयितव्यं ॥ येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्ये
केनायमस्तीति चैके ॥ एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीय इति पृष्टत्वात् ॥ अथ जीवपरमात्मानौ
ततो जीवाद्विलक्षणः परमात्मा प्रतिपादितो भवति ॥ तदपीह प्रतिपादयितव्यं अन्यत्र धर्मादन्यत्राधर्मादन्य
त्रास्मात्कृताकृतात् ॥ अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वदेति पृष्टत्वात् ॥ अत्राहाक्षेप्ता उभावप्येतौ पक्षौ
न संभवतः ॥ कस्मात् ऋतपानं हि कर्मफलोपयोगः सुकृतस्य लोक इति लिंगात् तच्चेतनस्य क्षेत्रज्ञस्य संभवति ॥
॥ नाचेतनाया बुद्धेः ॥ पिबन्ताविति च द्विवचनेन द्वयोः पानं दर्शयति श्रुतिः अतो बुद्धिक्षेत्रज्ञपक्षस्तावन्न सं
भवति ॥ अत एव क्षेत्रज्ञपरमात्मपक्षोऽपि न संभवति ॥ चेतनेऽपि परमात्मनि ऋतपानासंभवात् अनश्नन्नन्यो
अभिचाकशीतीति मंत्रवर्णादिति ॥ अत्रोच्यते ॥ नैष दोषः ॥ छत्रिणो गच्छंतीत्येकेनापि छत्रिणा बहूनां छत्रित्वो
पचारदर्शनात् ॥ एवमेकेनापि पिबता द्वौ पिबन्तावुच्येयातां ॥ यद्वा जीवस्तावत्पिबति ईश्वरस्तु पाययति पाय
यन्नपि पिबतीत्युच्यते ॥ पाचयितर्यपि पक्तृत्वप्रसिद्धिदर्शनात् ॥

“ परमात्मस्वरूपमपीत्यर्थः उभयोर्भोक्तृत्वायोगेन संशय
माक्षिपति अत्राहेति ॥ छत्रिपदेन गंतार इव पिबत्पदेनाजहल्लक्षणया प्रविष्टावुच्येते इत्याह ॥ अत्रोच्यत इति ॥ पानकर्तृवाचिपदेन पानानुकू
लौ वा लक्ष्यावित्याह ॥ यद्वेति ॥ नियतपूर्वभाविकृतिमत्त्वरूपमनुकूलत्वं कर्तृकारयित्रोः साधारणं यः कारयति स करोत्येवेति न्यायादिति भावः ॥

शा·भा·
र·प्र·टी·
७५

अत्र प्रकृतिर्मुख्यार्थो शतृप्रत्यये लक्षणा मिश्रास्तु प्रकृतिः प्रत्ययार्थो मुख्यः प्रकृत्यात्वजहल्लक्षणया पायनं लक्ष्यमित्याहुः पूर्वपक्षेपिवं
ताविति कर्तृत्वाविशतृप्रत्ययेन बुद्धिजीवसाधारणं कारकत्वं लक्ष्यमित्याह॥ बुद्धीति॥ एधांसि काष्ठानि पचंतीत्याख्यातेन कारकत्वं लक्ष्यं प्रकृ
तिस्तु मुख्यैवेति भावः मुख्यपानारौ प्रसिद्धपक्षिणो ग्राह्याविति यत आह॥ नचेति॥ ब्रह्मक्षत्रपदस्य सन्निहितमृत्युपदात् अनित्यवस्तुपरत्ववदि

अ·१पा·२

बुद्धिक्षेत्रज्ञपरिग्रहेपि संभवति॥ करणे कर्तृत्वोपचारात्॥ एधांसि पचंतीति प्रयोगदर्शनात्॥ नचाध्यात्मा
धिकारेऽन्यौ कौचिद्बहूनां पिबंतौ संभवतः॥ तस्माद्बुद्धिजीवौ स्यातां जीवपरमात्मानौ वेति संशयः॥ किं तावत्प्रा
प्तं बुद्धिक्षेत्रज्ञाविति॥ कुतः गुहां प्रविष्टाविति विशेषणात्॥ यदि शरीरं गुहा यदि वा हृदयमुभयथापि बुद्धिक्षेत्र
ज्ञौ गुहां प्रविष्टावुपपद्येते॥ नच सति संभवे सर्वगतस्य ब्रह्मणो विशिष्टदेशत्वं युक्तं कल्पयितुं॥ सुकृतस्य लोक इ
ति च कर्मगोचरानतिक्रमं दर्शयति॥ परमात्मा तु न सुकृतस्य वा दुष्कृतस्य वा गोचरे वर्तते॥ न कर्मणा वर्धते नो
कनीयानिति श्रुतेः॥ छायातपाविति च चेतनाचेतनयोर्निर्देश उपपद्यते॥ छायातपवत्परस्परविलक्षणत्वात्
॥ तस्माद्बुद्धिक्षेत्रज्ञाविहोच्येयातामित्येवं प्राप्ते ब्रूमः॥ विज्ञानात्मपरमात्मानाविहोच्येयातां कस्मात् आत्मानौ
हि तावुभावपि चेतनौ समानस्वभावौ॥ संख्याश्रवणे च समानस्वभावेष्वेव लोके प्रतीतिर्दृश्यते॥ अस्य गोर्द्वि
तीयोऽन्वेष्टव्य इत्युक्ते गौरेव द्वितीयोऽन्वेष्यते नाश्वः पुरुषो वा॥

११ हापि पिबत्पदस्य सन्निहितगुहापदाद्बुद्धिजीवपरतेति दृष्टांते
न पूर्वपक्षयति॥ किं तावदिति गोचरः फलं॥ एकस्मिन्जातिमति निकृष्टे सजातीयमेव द्वितीयं ग्राह्यं व्यक्तिमात्रग्रहे लाघवात्॥ न विजातीयं जा
तिव्यक्त्युभयकल्पनागौरवात् नचास्तु कारकत्वेन सजातीया बुद्धिरेव जीवस्य द्वितीयेति वाच्यं॥ चेतनत्वस्य जीवस्वभावस्य कारकत्वा
दंतरंगत्वात्॥ तथा च लोके द्वितीयस्यांतरंगजातिमत्त्वदर्शनात्। जीवस्य द्वितीयश्चेतन एवेति सूत्रार्थमाह संख्याश्रवणे चेति॥

राम·
७५

गुहायां बुद्धौ स्थितं गह्वरेनेकानर्थसंकुले देहे स्थितं पुराणमनादिं पुरुषं विदित्वा हर्षशोकौ जहाति परमे श्रेष्ठे व्योमन् हार्दाकाशे ।
या गुहा बुद्धिः तस्यां निहितं ब्रह्म यो वेद सोऽश्नुते सर्वान्कामानित्यन्वयः अन्विच्छ विचारयेत्यर्थः ॥ ११ ॥ विशेषणं गन्तृगन्तव्यत्वादिकं लिंग ।

तदिह तत्पानेन लिंगेन निश्चिते विज्ञानात्मनि द्वितीयोऽन्वेषणायां समानस्वभावश्चेतनः परमात्मैव प्रती
यते ॥ ननूक्तं गुहाहितत्वदर्शनात् न परमात्मा प्रत्येतव्य इति ॥ गुहाहितत्वदर्शनादेव परमात्मा प्रत्येत
व्य इति वदामः ॥ गुहाहितत्वं तु श्रुतिस्मृतिष्वसकृत् परमात्मन एव दृश्यते ॥ गुहाहितं गह्वरेष्ठं पुराणं ॥
यो वेद निहितं गुहायां परमे व्योमन् ॥ आत्मानमन्विच्छ गुहां प्रविष्टमित्याद्यासु सर्वगतस्यापि ब्रह्मण उपलब्ध्य
र्थो देशविशेषोपदेशो न विरुध्यत इत्येतदप्युक्तमेव ॥ सुकृतलोकवर्तित्वं तु छत्रित्ववदेकस्मिन्नपि वर्त्तमा
नमुभयोरविरुद्धं ॥ छायातपावित्यप्यविरुद्धं छायातपवत्परस्परविलक्षणत्वात्संसारित्वासंसारित्वयोर
विद्याकृतत्वात् संसारित्वस्य पारमार्थिकत्वाच्चासंसारित्वस्य ॥ तस्माद्विज्ञानात्मपरमात्मानौ गुहां प्रवि
ष्टौ गृह्येते ॥ ११ ॥ कुतश्च विज्ञानात्मपरमात्मानौ गृह्येते ॥ विशेषणाच्च ॥ १२ ॥ विशेषणं च विज्ञानात्म-
परमात्मनोरेव भवति ॥ आत्मानं रथिनं विद्धि शरीरं रथमेव त्वित्यादिना परेण ग्रंथेन रथिरथादिरूपक-
कल्पनया विज्ञानात्मानं रथिनं संसारमोक्षयोर्गंतारं कल्पयति ॥ सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं प
दमिति च परमात्मानं गंतव्यं कल्पयति ॥ यथा तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणं ॥ ❁ ॥

माह ॥ विशेषणाच्चेति ॥ सः जीवोऽध्वनः संसारमार्गस्य परं संपारं किं तत् विष्णोर्व्यापनशीलस्य परमात्मनः पदं स्वरूपमाप्नोतीत्यर्थः ॥ दुर्दर्शं
दुर्ज्ञानं ॥ तत्र हेतुर्गूढं मायावृतं मायामनुप्रविष्टं पश्चात् गुहाहितं गुहाद्वारा गह्वरेष्ठं ॥

शा·भा·
र·प्र·टी·
७६

एवं बहिरागतमात्मानमध्यात्मयोगः स्थूलसूक्ष्मकारणदेहलयक्रमेण प्रत्यगात्मनि चित्तसमाधानं तेनाधिगमो महावाक्यजात्तन्निष्ठा अ·१पा·२ यावदिति त्वेत्यर्थः॥ ऋतं पानमंत्रे जीवानुवादेन वाक्यार्थज्ञानाय तत्पदार्थो ब्रह्म प्रतिपाद्यत इत्युपसंहरति॥ तस्मादिहेति॥ उक्तन्यायमतिदिशति॥ एष इति॥ द्वाविति छांदसो द्विवचनस्याकारः सुपर्णौ विवसहैव युज्येते नियम्यनियामकभावेनेति सयुजौ सखायौ चेतनत्वेन तुल्यस्वभावौ समानमेकं वृक्षं छेदनयोग्यं शरीरमाश्रित्य स्थिताविन्यर्थः गुहां प्रविष्टाविति यावत्॥ एतावात्मानौ तल्लिंगदर्शना

अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहातीति पूर्वस्मिन्नपि ग्रंथे मंतृमंतव्यत्वेनैतावेव विशेषितौ॥ प्रकरणं चेदं परमात्मनः ब्रह्मविदो वदंतीति च वक्तृविशेषोपपादनं परमात्मपरिग्रहे घटते॥ तस्मादिह जीवपरमात्मानावुच्येयातां॥ एष एव न्यायो द्वा सुपर्णा सयुजा सखायेत्येवमादिष्वपि॥ तत्रापि ह्यध्यात्माधिकारात्॥ न प्राकृतौ सुपर्णावुच्येते तयोरन्यः पिप्पलं स्वाद्वत्तीति अदनलिंगाद्विज्ञानात्मा भवति॥ अनश्नन्नन्यो अभिचाकशीतीत्यनशनचेतनत्वाभ्यां परमात्मा॥ अनंतरे च मंत्रे तावेव द्रष्टृद्रष्टव्यभावेन विशिनष्टि॥ समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः॥ जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक इति॥ अपर आह द्वा सुपर्णेति नेयमृगस्याधिकरणस्य सिद्धांतं भजते॥९

र·प्र·
७६

दित्याह तयोरन्य इति॥ विशेषणाच्चेत्याह॥ अनंतरे चेति॥ अनीशया स्वस्येश्वरत्वाऽप्रतीत्या देहे निमग्नः पुरुषो जीवः शोचति निमग्नपदार्थमाह मुह्यमान इति॥ नरोहमिति भ्रांत इत्यर्थः॥ जुष्टं ध्यानादिना सेवितं यदा ध्यानपरिपाकदशायां ईशमन्यं विशिष्टरूपाद्भिन्नं शोधितचिन्मात्रं प्रत्यक्त्वेन पश्यति तदास्य महिमानं स्वरूपमिति मामेतीव नतो वीतशोको भवतीत्यर्थः॥ द्वा सुपर्णेति वाक्यं जीवेश्वरपरं कृत्वा चिंतितं अधुना कृत्वाचिंतामुद्घाटयति॥ अपर इति॥ अन्यथाबुद्धिविलक्षणत्वंपदलक्ष्यपरत्वे

सत्त्वं बुद्धिः शंकते सत्त्वशब्द इति॥ बुद्धिजीवौ चेत् पूर्वपक्षार्थः स्यादित्यत आह॥ नापीति॥ पूर्वपक्षार्थस्तदा स्यात् यद्यत्र बुद्धिभिन्नः संसारी प्रतिपाद्येत नह्यत्र संसारी विवक्ष्यते किंतु शोधितत्वमर्थो ब्रह्मेत्यर्थः श्रुतिस्मृतिभ्यश्चायमर्थो युक्त इति शेषः॥ तावता। मंत्रव्याख्यामात्रेण॥ एवमेव जीवस्य ब्रह्मत्वोक्तावेव न हि जीवो बुद्धिभिन्न इति विवेकमात्रेणोपसंहारो युक्तः भेदज्ञानस्य भ्रांतित्वा

पैंगीरहस्यब्राह्मणे नान्यथा व्याख्यातत्वात्॥ तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वमनश्नन्नन्योऽभिचाकशीतीत्यनश्नन्नन्योऽभिपश्यति ज्ञस्तावेतौ सत्त्वक्षेत्रज्ञाविति॥ सत्त्वशब्दो जीवः क्षेत्रज्ञशब्दः परमात्मेति यदुच्यते तन्न सत्त्वक्षेत्रज्ञशब्दयोरंतःकरणशारीरपरतया प्रसिद्धत्वात्॥ तत्रैव व्याख्यातत्वात् तदेतत्सत्त्वं येन स्वप्नं पश्यत्यथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञस्तावेतौ सत्त्वक्षेत्रज्ञाविति॥ नाप्यस्याधिकरणस्य पूर्वपक्षं भजते॥ नह्यत्र शारीरः क्षेत्रज्ञः कर्तृत्वभोक्तृत्वादिना संसारधर्मेणोपेतो विवक्ष्यते॥ कथं तर्हि सर्वसंसारधर्मातीतो ब्रह्मस्वभावश्चैतन्यमात्रस्वरूपोऽनश्नन्नन्योऽभिचाकशीतीत्यनश्नन्नन्योऽभिपश्यति ज्ञ इति वचनात् तत्त्वमसि क्षेत्रज्ञं चापि मां विद्धीत्यादिश्रुतिस्मृतिभ्यश्च॥ तावता च विद्योपसंहारदर्शनमेवमवकल्पते॥ तावेतौ सत्त्वक्षेत्रज्ञौ न ह वा एवंविदि किंचन रज आध्वंसत इत्यादि॥ कथं पुनरस्मिन्पक्षे तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वमित्यचेतने सत्त्वे भोक्तृत्ववचनमिति॥ उच्यते॥ नेयं श्रुतिरचेतनस्य सत्त्वस्य भोक्तृत्वं वक्ष्यामीति प्रवृत्ता॥ किं तर्हि चेतनस्य क्षेत्रज्ञस्याभोक्तृत्वं ब्रह्मस्वभावतां च वक्ष्यामीति॥ १२॥

द्वैफल्याच्चेति भावः अविद्याविदुषि किमपि स्वकार्यं नाध्वंसनेन संपादयति ज्ञानाग्निना तस्यास्य दग्धत्वादित्यर्थः अविद्या नागच्छतीति वार्यः जीवस्य ब्रह्मत्वपरमिदं वाक्यमिति पक्षे शंकते॥ कथमिति॥ बुद्धेर्भोक्तृत्वोक्ताव तात्पर्यात्तत्रास्य शुक्तिं चिंतयामनः सेवनीयमित्याह॥ उच्यत इति॥

शा॰भा॰ रु॰भ॰टी॰ ७७

अ॰१पा॰ २

तदर्थं ब्रह्मत्वबोधनार्थं भोक्तृत्वमुपाधिमस्तके निक्षिपतीत्यर्थः वस्तुतो जीवस्याभोक्तृत्वे भोक्तृत्वधीः कथमित्यत आह॥ इदं हीति चि-
त्तादात्म्येन कल्पिता बुद्धिः सुखादिरूपेण परिणमते बुद्ध्यविवेकाच्चिदात्मनः सुखादिरूपवृत्तिव्यक्तचैतन्यवत्त्वं भोक्तृत्वं भातीत्यर्थः भोक्तृ-
त्वमाविद्यकं न वस्तुत इत्यत्र मानमाह॥ तथा चेति॥ यत्राविद्याकाले चैतन्यं भिन्नमिव भवति तदा द्रष्टृत्वादिकं न वस्तुनि ज्ञाते इत्यर्थः त-
स्मादृतं पिबन्ताविति वाक्यमेव गुहाधिकरणविषय इति स्थितं॥१२॥३॥ अंतर उपपत्तेः उपकोसलविद्यावाक्यमुदाहरति य इति॥ त

तदर्थं सुखादिविक्रियावति सत्त्वे भोक्तृत्वमध्यारोपयति॥ इदं हि कर्तृत्वं भोक्तृत्वं च सत्त्वक्षेत्रज्ञयोरितरेत-
रस्वभावाऽविवेककृतं कल्प्यते॥ परमार्थतस्तु नान्यतरस्यापि संभवति॥ अचेतनत्वात्सत्त्वस्याविक्रियत्वा-
च्च क्षेत्रज्ञस्याविद्याप्रत्युपस्थापितस्वभावत्वाच्च सत्त्वस्य सुतरां न संभवति॥ तथा च श्रुतिः यत्र वा अन्यदिव
स्यात्तत्रान्योऽन्यत्पश्येदित्यादिना स्वप्नदृष्टहस्त्यादिव्यवहारवदविद्याविषय एव कर्तृत्वादिव्यवहारं दर्शयति
॥ यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदित्यादिना च विवेकिनः कर्तृत्वादिव्यवहाराभावं दर्शयति॥१२॥
॥३॥ अंतर उपपत्तेः॥१३॥ य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तद्य-
द्यप्यस्मिन्सर्पिर्वोदकं वा सिंचति वर्त्मनी एव गच्छतीत्यादि श्रूयते॥ तत्र संशयः॥ किमयं प्रतिबिंबात्माऽक्ष्यधिक-
रणो निर्दिश्यते॥ अथवा विज्ञानात्मा उत देवतात्मेंद्रियस्याधिष्ठाता अथवेश्वर इति किं तावत्प्राप्तं॥ छायात्मा पु-

राम॰ ७७

दृक्स्थानमसंगित्वेन ब्रह्मणोऽनुरूपं यतोऽस्मिन्क्षिप्तं वर्त्मनी पक्ष्मणी एव गच्छतीत्यर्थः दर्शनस्य। ((रुषप्रतिरूप इति॥ ॥९
लौकिकत्वशास्त्रीयत्वाभ्यां संशयमाह॥ तत्रेति॥ पूर्वत्र पिबंताविति प्रथमश्रुतचेतनत्वानुसारेण चरमश्रुता गुहाप्रवेशादयो नीतास्तद्वदिहा-
पि दृश्यत इति चाक्षुषत्वानुसारेणामृतत्वादयो ध्यानार्थं कल्पितत्वेन नेया इति दृष्टांतेन पूर्वपक्षयति॥ छायात्मेति॥ पूर्वपक्षे प्रतिबिंबोपास्तिः

सिद्धांते ब्रह्मोपास्तिरिति फलं॥ प्रसिद्धवदिति॥ चाक्षुषत्वेनेत्यर्थः संभावनामात्रेण पक्षांतरमाह॥ विज्ञानात्मन इत्यादिना मनो ब्रह्मे-
तिवत् एतत् ब्रह्मेतीति वाक्यस्येति पदशिरस्कत्वात् नस्वार्थपरत्वमिति पूर्वपक्षः मनो ब्रह्मेत्युपासीतेत्यत्र इतिपदस्य प्रत्ययप-
रत्वात् इह च ब्रह्मेत्युवाचेत्यन्वयेन इतिपदस्योक्तिसंबंधिनोऽर्थपरत्वादैक्यमिति सिद्धांतयति परमेश्वर एवेति॥ बहुप्रमाण-

कुतस्तस्य दृश्यमानत्वप्रसिद्धेः॥ य एषोऽक्षिणि पुरुषो दृश्यत इति च प्रसिद्धवदुपदेशात्॥ विज्ञानात्मनो
वायं निर्देश इति युक्तं स हि चक्षुषा रूपं पश्यन् चक्षुषि संनिहितो भवति॥ आत्मशब्दश्चाऽस्मिन्पक्षेऽनु-
कूलो भवति॥ आदित्यपुरुषो वा चक्षुषोऽनुग्राहकः प्रतीयते रश्मिभिरेषोऽस्मिन्प्रतिष्ठित इति श्रुतेः॥ अ-
मृतत्वादीनां च देवतात्मन्यपि कथंचित्संभवात् नेश्वरः॥ स्थानविशेषनिर्देशादित्येवं प्राप्ते ब्रूमः॥ परमेश्वर
एवाक्षिण्यभ्यंतरः पुरुष इहोपदिष्ट इति॥ कस्मादुपपत्तेः॥ उपपद्यते हि परमेश्वरे गुणजातमिहोपदिश्य-
मानमात्मत्वं तावन्मुख्यया वृत्त्या परमेश्वर उपपद्यते॥ स आत्मा तत्त्वमसीति श्रुतेः॥ अमृतत्वाभयत्वे च
तस्मिन्नसकृत् श्रुतौ श्रूयेते॥ तथा परमेश्वरानुरूपमेतदक्षिस्थानं॥ यथा हि परमेश्वरः सर्वदोषैरलिप्तो-
ऽपहतपाप्मत्वादिश्रवणात्॥ तथाक्षिस्थानं सर्वलेपरहितमुपदिष्टं॥ तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिंचति
निवर्त्मनी एव गच्छतीति श्रुतेः॥ संयद्वामत्वादिगुणोपदेशश्च तस्मिन्नवकल्पते॥ एतं संयद्वाम इत्याचक्ष-
ते एतं हि सर्वाणि वामान्यभिसंयंति॥ एष उ एव वामनीरेष हि सर्वाणि वामानि नयति॥

संवादस्तात्पर्यग्राहक-
न्यायानुगृहीताभ्यामात्मब्रह्मश्रुतिभ्यां दृश्यत्वलिंगं बाध्यमित्याह॥ संयद्वामेति॥ वामानि कर्मफलान्येतमक्षिपुरुषमभिलक्ष्य संयं-
ति उत्पद्यंते सर्वफलोदयहेतुरित्यर्थः॥ लोकानां फलदातायमेवेत्याह॥ वामनीरिति॥ नयति फलानि लोकान्प्रापयतीत्यर्थः॥

शां·भा· रत्नप्र·टी· ७८

भामानिभानानिनयत्ययमित्याह॥ भामनीरिति॥ सर्वार्थप्रकाशक इत्यर्थः॥ २३॥ स्थाननामरूपाणां ध्यानार्थश्रुत्यंतरेष्वुपदेशाद्दिक्ष्वित्या। अ·१पा·
नन्वोक्तिरत्रनदोषइतिसूत्रयोजना। अनवक्लृप्तिरक्लृप्तकल्पनातदाभवेद्यद्यत्रैवनिर्दिष्टंभवेदित्यन्वयः॥ नन्वनुचितवाहुल्योक्तिरस

एषउएवभामनीरेषहिसर्वेषुलोकेषुभातीतिच॥ अतउपपन्नेरंतरःपरमेश्वरः॥ २३॥ स्थानादिव्यपदेशा
च्च॥ २४॥ कथंपुनराकाशवत्सर्वगतस्यब्रह्मणोऽक्ष्यल्पस्थानमुपपद्यतइत्यत्रोच्यते॥ भवेदेषानवक्लृ·
प्तिः यद्येतदेवैकंस्थानमस्यनिर्दिष्टंभवेत्॥ संतिहिअन्यान्यपिपृथिव्यादीनिस्थानान्यस्यनिर्दिष्टानि॥
यः पृथिव्यांतिष्ठन्नित्यादिना॥ तेषुहिचक्षुरपिनिर्दिष्टंयश्चक्षुषितिष्ठन्निति॥ स्थानादिव्यपदेशादित्यादि
ग्रहणेनैतत् दर्शयति॥ नकेवलंस्थानमेवैकमनुचितंब्रह्मणोनिर्दिश्यमानंदृश्यते॥ किंतर्हिनामरूपमित्ये
वंजातीयकमप्यनामरूपस्यब्रह्मणोऽनुचितंनिर्दिश्यमानंदृश्यते॥ तस्योदितिनामहिरण्यश्मश्रुरित्या·
दि॥ निर्गुणमपिसत् ब्रह्मनामरूपगतैर्गुणैःसगुणमुपासनार्थंतत्रतत्रोपदिश्यतइत्येतदप्युक्तमेव॥
सर्वगतस्यापिब्रह्मणउपलब्ध्यर्थंस्थानविशेषोनविरुध्यतेशालग्रामइवविष्णोरित्येतदप्युक्तमे·
व॥ २४॥ सुखविशिष्टाभिधानादेवच॥ २५॥ अपिचनैवात्रविवदितव्यंकिंब्रह्मास्मिन्वाक्येभिधीय
तेनवेति॥ सुखविशिष्टाभिधानादेवब्रह्मत्वंसिद्धं॥ सुखविशिष्टंहिब्रह्मयद्वाक्योपक्रमेप्रक्रांतंप्राणो·
ब्रह्मकंब्रह्मखंब्रह्मेतितदेवेहाभिहितंप्रकृतपरिग्रहस्यन्याय्यत्वात्॥ ० ० ० ॥

माधानमित्याशंक्ययुक्तिमाह॥ निर्गुणमपीति॥ २४॥ प्रकरणादपिब्रह्मग्राह्यमित्याह॥ सुखविशिष्टेति॥ ध्यानार्थंभेदकल्पनयासुख
गुणविशिष्टस्यब्रह्मणःप्रकृतस्ययएषइतिसर्वनाम्नाभिधानादंतरःपरमात्माइतिसूत्रार्थः॥

राम· ७८

ननुप्रकरणात्प्रबलेन हृद्यत्वलिंगेनोपस्थापितमक्ष्यायात्मा सर्वनामार्थ इत्यत आह आचार्यस्त्विति उपकोसलोनामकश्चित्ब्रह्मचारी जाबालस्या
चार्यस्याग्नीन् द्वादशवत्सरान्परिचचार तमनुपदिश्य देशांतरं गते जाबाले गार्हपत्याद्यग्निभिर्दयया प्राणो ब्रह्मेत्यात्मविद्यामुपदिश्योक्तं आचार्यस्त्विति
तवात्मविद्याफलाऽवाप्तये मार्गमर्चिरादिकं वदिष्यतीत्यर्थः पश्चादाचार्येणागत्य यस्यषोक्षिणीत्यर्चिरादिकागतिरुक्ता ॥ तथा चाग्निभिरुक्तात्मविद्या
वाक्यस्य गतिवाक्येनैकवाक्यता वाच्या सा च सर्वनाम्ना प्रक्रान्तात्माग्रहे निर्वहतीत्येकवाक्यतानिर्वाहकं प्रकरणं वाक्यभेदकाक्षिंगाद्बलवदिति भावः ॥

आचार्यस्तु ते गतिं वक्तेति च गतिमात्राभिधानप्रतिज्ञानात् कथं पुनर्वाक्योपक्रमे सुखविशिष्टं ब्रह्म विज्ञायत इत्यु
च्यते ॥ प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेत्येतदग्नीनां वचनं श्रुत्वोपकोसल उवाच ॥ विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं
च न विजानामीति ॥ तत्रेदं प्रतिवचनं यद्वाव कं तदेव खं यदेव खं तदेव कमिति ॥ तत्र खंशब्दो भूताकाशे निरूढो लो
के यदि तस्य विशेषणत्वेन कंशब्दः सुखवाची नोपादीयेत ॥ तथा सति केवले भूताकाशे ब्रह्मशब्दो नामादिष्विव प्रती
काभिप्रायेण प्रयुक्त इति प्रतीतिः स्यात् ॥ तथा कंशब्दस्य विषयेंद्रियसंपर्कजनिते सामये सुखे प्रसिद्धत्वात् यदि त
स्य खंशब्दो विशेषणत्वेन नोपादीयेत लौकिकं सुखं ब्रह्मेति प्रतीतिः स्यात् ॥ इतरेतरविशेषितौ तु शब्दौ सुखा
त्मकं ब्रह्म गमयतः ॥ तत्र द्वितीये ब्रह्मशब्देऽनुपादीयमाने कं खं ब्रह्मेत्येवोच्यमाने कंशब्दस्य ॥ ''श्रुतिं व्याचष्टे ॥ उच्यत

इति ॥ प्राणः सूत्रात्मा बृहत्वाद्ब्रह्मेति यत्तज्जानामि कं विषयसुखं खं च भूताकाशं ब्रह्मत्वेन ज्ञातुं न शक्नोमीत्यर्थः खं कथंभूतं यत्कं तदेव ख
मिति सुखेन विशेषितस्य खस्य भूतत्वनिरासः ॥ तथा कं कथंभूतं यत्खं तदेव कमिति विभुत्वेन विशेषितस्य कस्य जन्यत्वनिरास इति व्यतिरेकमुखेना
ह ॥ तत्र खमित्यादिना ॥ आत्मविद्येति श्रुतिविरोधात्प्रतीकध्यानमत्रानिष्टमिति भावः सामय इति ॥ आमयो दोषः साधनपारतंत्र्यानित्यत्वादिः तत्स
हित इत्यर्थः ॥ प्रत्येकग्रहणे दोषमुक्त्वा द्वयोर्ग्रहणे फलितमाह ॥ इतरेतरेति ॥ विशेषितार्थकाविव्यर्थः नन्वेकं ब्रह्मैवात्र ध्येयं चेत् ब्रह्मपदांतरं किमर्थमि

शा·भा·
र·प्र·टी·
७९

विशेषणत्वेन स्वस्य भूतत्वव्यावर्तकत्वेनेत्यर्थः ब्रह्मशब्दः शिरो ययोस्तत्त्वमिति विग्रहः अध्येयत्वे को दोषस्तत्राह॥ दृष्टं हीति॥ मार्गीत्या सगुण।
विद्यात्वावगमादिति भावः॥ आत्मविद्यापदेनोपसंहारादपि प्रकृतं ब्रह्मेत्याह॥ प्रत्येकं चेति॥ पृथिव्यग्निरन्नमादित्य इति मम चतस्रस्तनवो विभूति
रिति गार्हपत्य उपदिदेश आपो दिशो नक्षत्राणि चंद्रमा इति अन्वाहार्यपचन उवाच॥ प्राण आकाशो द्यौर्विद्युदिति सममहिमानमाहवनीयो जगादे।

अ·१पा·
२

विशेषणत्वेनैवोपयुक्तत्वात्॥ सुखस्य गुणस्याऽध्येयत्वं स्यात्॥ तन्माभूदित्युभयोः कंखंशब्दयोः ब्रह्मशब्द
शिरस्त्वं कं ब्रह्म खं ब्रह्मेति॥ दृष्टं हि सुखस्यापि गुणस्य गुणिवद्ध्येयत्वं॥ तदेवं वाक्योपक्रमे सुखविशिष्टं ब्रह्मोप
दिष्टं॥ प्रत्येकं च गार्हपत्यादयोऽग्नयः स्वं स्वं महिमानमुपदिश्यैषा सोम्य तेऽस्मद्विद्यात्मविद्या चेत्युपसंहरंतः पूर्वं ब्र
ह्मनिर्दिष्टमिति ज्ञापयंति॥ आचार्यस्तु ते गतिं वक्तेति च गतिमात्राभिधानप्रतिज्ञानमर्थांतरविवक्षां वारयति॥
यथा पुष्करपलाश आपो न श्लिष्यंत एवमेवंविदि पापं कर्म न श्लिष्यत इति चाक्षिस्थानं पुरुषं विजानतः पापे।
नानुपघातं ब्रुवन्नक्षिस्थानस्य पुरुषस्य ब्रह्मत्वं दर्शयति॥ तस्मात्प्रकृतस्यैव ब्रह्मणोऽक्षिस्थानतां संयद्वामत्वादि
गुणतां चोक्त्वार्चिरादिकां तद्विदो गतिं वक्ष्यामीति उपक्रमते॥ य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचे
ति॥ १५॥ श्रुतोपनिषत्कगत्यभिधानाच्च॥ १६॥ इतश्चाक्षिस्थानः पुरुषः परमेश्वरो यस्मात् श्रुतोपनिष
त्कस्य श्रुतरहस्यविज्ञानस्य ब्रह्मविदो या गतिर्देवयानाख्या प्रसिद्धा श्रुतौ॥

इति विभागः इयमस्माकमग्नीनां विद्या प्रत्ये
कमुक्ता आत्मविद्या तु पूर्वमस्माभिर्मिलित्वा प्राणो ब्रह्मेत्युक्तेत्यर्थः॥ उच्यतामग्निभिर्ब्रह्मच्छायात्मा गुरुणोच्यं तां वक्तृभेदादिति तत्राह
॥ आचार्यस्त्विति॥ एकवाक्यतानिश्चयाद्वक्तृभेदेपि नार्थभेद इत्यर्थः॥ १५॥ श्रुता अनुष्ठिता उपनिषद्रहस्यं सगुणब्रह्मोपासनं येन तत।
स्य या गतिः श्रुतौ स्मृतौ च प्रसिद्धा तस्या अत्राभिधानाल्लिंगादिति सूत्रार्थमाह॥ इतश्चेति॥ यस्माद्दृश्यते तस्मादिहेत्यन्वयः॥ ॥

राम·
७९

श्रुतिमाह॥ अथेति॥ देहपातानंतरमित्यर्थः स्वधर्मस्तपः ततो ब्रह्मचर्यश्रद्धाविद्याभिः आत्मानं ध्यात्वा तया ध्यानविद्ययोत्तरं देवयानमार्गं प्राप्यते नोत्त
रेण पथा आदित्यद्वारा सगुणब्रह्मस्थानं गच्छंति एतद्वै ब्रह्म प्राणानां व्यष्टिसमष्टिरूपाणामायतनं लिंगात्मकं हिरण्यगर्भरूपं वस्तुतस्तेन दमृता
दिरूपं निर्गुणं सर्वाधिष्ठानं अतः कार्यब्रह्म प्राप्य तत्स्वरूपं निर्गुणं ज्ञात्वा मुच्यंत इत्यर्थः॥ अग्निरेव ज्योतिर्देवता एवमहराद्या देवता एव स्मृतौ
उक्ताः॥ अस्मिंश्चुपासके मृते सति यदि पुत्रादयः शव्यं शवसंस्कारादिकं कुर्वंति यदि च न कुर्वंति उभयथाप्युपास्तिमहिम्नार्चिरादिदेवान्क्रमेण

अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्यादित्यमभिजयंत एतद्वै प्राणानामायतन-
मेतदमृतमभयमेतत्परायणमेतस्मान्न पुनरावर्तंत इति॥ स्मृतावपि अग्निर्ज्योतिरहः शुक्लः षण्मासा
उत्तरायणं॥ तत्र प्रयाता गच्छंति ब्रह्म ब्रह्मविदो जना इति सैवेहाक्षिपुरुषविदोऽभिधीयमाना दृश्यते॥ अ
थ यदु चैवास्मिञ्छव्यं कुर्वंति यदु च नार्चिषमेवाभिसंभवंतीत्युपक्रम्यादित्याच्चंद्रमसं चंद्रमसो विद्युतं तत्पु
रुषोऽमानवः स एतान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तंत इति
तदिह ब्रह्मविद्विषयया प्रसिद्धया गत्याक्षिस्थानस्य ब्रह्मत्वं निश्चीयते॥ १६॥ अनवस्थितेरसंभवाच्च नेतरः॥
१७ यत्पुनरुक्तं छायात्मा विज्ञानात्मा देवतात्मा वा स्यात् अक्षिस्थान इत्यत्रोच्यते॥ न छायात्मादिरितर इह
ग्रहणमर्हति॥ कस्मादनवस्थितेः न तावच्छायात्मनश्चक्षुषि नित्यमवस्थानं संभवति॥ ~१~ ॥

गच्छंति अर्चिषमग्निं ततोहरन्हः शुक्लपक्षं तथा उत्तरायणं तस्मात्संवत्सरं ततो देवलोकं ततो वायुं वायोरादित्यं ततश्चंद्रं चंद्राद्विद्युतं गत्वा त
त्र विद्युल्लोके स्थितानुपासकान्मानवः पुरुषो ब्रह्मलोकादागत्य कार्यब्रह्मलोकं प्रापयति॥ एषोर्चिरादिभिर्देवैर्विशिष्टो देवपथः गंत
व्येन ब्रह्मणा योगाद्ब्रह्मपथश्च तत एतत्कार्यब्रह्म प्रतिपद्यमाना उपासका इमं मानवं मनोः सर्गं आवर्तं जन्ममरणावृत्तियुक्तं नावर्तंते ना गच्छंती
त

॥ चक्षुरासीदतीति उपगच्छतीत्यर्थः॥ अनवस्थितस्योपास्यत्वं सदा न सिध्यतीति भावः किंचाप्यवधानात्स्वाक्षिस्थ उपास्यः न 
च तस्य स्वचक्षुषा दर्शनं संभवतीत्याह॥ यएष इति॥ अस्तु तर्हि परेण दृश्यमानस्योपास्तिरित्यत आह॥ न चेति॥ कल्पनागौरवा

यदेव हि कश्चित्पुरुषश्चक्षुरासीदति तदा चक्षुषि पुरुषच्छाया दृश्यते ऽपगते तस्मिन्न दृश्यते॥ य एषो
ऽक्षिणि पुरुष इति च श्रुतिः संनिधानात्स्वचक्षुषि दृश्यमानं पुरुषमुपास्यत्वेनोपदिशति॥ न च स्व उपा
सनकाले छायाकरं कंचित्पुरुषं चक्षुः समीपे संनिधाप्योपास्त इति युक्तं कल्पयितुं॥ अस्यैव शरीरस्य
नाशमन्वेष नश्यतीति श्रुतिः छायात्मनोऽप्यनवस्थितत्वं दर्शयति॥ असंभवाच्च तस्मिन्नमृतत्वादीनां गु
णानां न छायात्मनि प्रतीतिः॥ तथा विज्ञानात्मनोऽपि साधारणे कृत्स्नशरीरेंद्रियसंबंधे सति चक्षुष्येवा
वस्थितत्वं वक्तुं न शक्यं॥ ब्रह्मणस्तु व्यापिनोऽपि दृष्ट उपलब्ध्यर्थो हृदयादिदेशविशेषसंबंधः॥ स
मानश्च विज्ञानात्मन्यप्यमृतत्वादीनां गुणानामसंबंधः॥ यद्यपि विज्ञानात्मा परमात्मनोऽनन्य एव॥
तथाप्यविद्याकामकर्मकृतं तस्मिन्मर्त्यत्वमध्यारोपितं भयं चेत्यभयामृतत्वे नोपपद्येते॥ संयद्वाम
त्वादयश्चैतस्मिंश्चानैश्वर्यादनुपपन्ना एव॥ देवतात्मनस्तु रश्मिभिरेषोऽस्मिन्प्रतिष्ठित इति श्रुतेर्यद्यपि
चक्षुष्यवस्थानं स्यात् तथाप्यात्मत्वं तावन्न संभवति पराग्रूपत्वात्॥ अमृतत्वादयोऽपि न संभवंति॥
उत्पत्तिप्रलयश्रवणात्॥ ॥



दित्यर्थः युक्तिसिद्धानवस्थितत्वे श्रुतिमाह अस्येति॥ छायाकरस्य बिंबस्य नाशमदर्शनमनु सः
एष छायात्मा नश्यतीत्यर्थः॥ जीवं निरस्यति॥ तथेति॥ जात्यंधस्याप्यहमित्यविशेषेण जीवस्याभिव्यक्तेश्चक्षुरेव स्थानमित्ययुक्तमित्यर्थः॥ दृष्ट इ
ति॥ श्रुताविति शेषः ॥

ष

ननु चन्द्रसूर्यो ऽजायत सूर्यो ऽस्तमेतीति वाक्यं अमरा देवा इति प्रसिद्धिविरोधिनमित्याशंक्याह ॥ अमरत्वमपीति ॥ भीषाभयेनास्मादीश्वरात् वायुः पवते ॥ अग्निश्चेन्द्रश्च स्वस्वकार्यं कुरुतः उक्तापेक्षया पंचमो मृत्युः समासायुषां निकटे धावतीत्यर्थः ईश्वरपक्षे हेतुस्तदुक्तमनुवाह ॥ अस्मिंश्चेति ॥ दर्शनमनुभवः तस्य शास्त्रे श्रुतस्य शास्त्रमेव करणं कल्प्यं सन्निधानात् तथा च शास्त्रकरणको विद्वदनुभव उपासनास्तुत्यर्थ उच्यत इत्यर्थः ॥ ५ ॥

अमरत्वमपि देवानां चिरकालावस्थानापेक्षमैश्वर्यमपि परमेश्वरायत्तं न स्वाभाविकं ॥ भीषास्माद्वातः पवते भीषोदेति सूर्यः ॥ भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पंचम इति मंत्रवर्णात् ॥ तस्मात्परमेश्वर एवायमक्षिस्थानः प्रत्येतव्यः ॥ अस्मिंश्च पक्षे हृश्यत इति प्रसिद्धवदुपादानं शास्त्राद्यपेक्षं विद्वद्विषयं प्ररोचनार्थमिति व्याख्येयं ॥ १७ ॥ ५ ॥ अंतर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १८ ॥ य इमं च लोकं परं च लोकं सर्वाणि च भूतानि यो ऽन्तरो यमयतीत्युपक्रम्य श्रूयते ॥ यः पृथिव्यां तिष्ठन्पृथिव्या अंतरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमंतरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यादि अत्राधिदैवतमधिलोकमधिवेदमधियज्ञमधिभूतमध्यात्मं च कश्चिदंतरवस्थितो यमयिता अंतर्यामीति श्रूयते ॥ स किमधिदैवाद्यभिमानी देवतात्मा कश्चित् किं वा प्राप्ताणिमाद्यैश्वर्यः कश्चिद्योगी किं वा परमात्मा किं वार्थान्तरं किंचिदपूर्वसंज्ञादर्शनात्संशयः ॥ किं तावन्नः प्रतिभाति संज्ञायाः अप्रसिद्धत्वात्संज्ञिनाप्यप्रसिद्धेनार्थान्तरेण केनचिद्भवितव्यमिति ॥ तस्मादुपकोसलविद्यावाक्यमुपासे ब्रह्मणि समन्वितमिति सिद्धं ॥ १७ ॥ अंतर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ बृहदारण्यकवाक्यमुदाहरति य इति ॥ अंतर्यामिब्राह्मणे प्रतीयमानार्थमाह ॥ अत्रेति ॥ यः पृथिव्यामित्यादिना देवताः पृथिव्याद्या अधिकृत्य यमयिता श्रूयते ॥ तथा यः सर्वेषु लोकेष्विति अधिलोके यः सर्वेषु वेदेष्वित्यधिवेदं यः सर्वेषु यज्ञेष्विति अधियज्ञं यः सर्वेषु भूतेष्वित्यधिभूतं यः प्राणे तिष्ठन्नित्यादि य आत्मनीत्यंतमध्यात्मं चेति वि

अशरीरस्य नियंतृत्वसंभवासंभवाभ्यां संशयः पूर्वत्रेश्वरस्याक्षिस्थानत्वसिद्धये पृथिव्यादिस्थाननिर्देशो दृष्टांत उक्तः तस्य दृष्टां-
तत्वाक्षेपेश्वरपरत्वमत्राक्षिप्य समाधीयत इत्याक्षेपसंगतिः अतः पूर्वफलेनास्य फलवत्त्वं॥ अवांतरफलं तु पूर्वपक्षेऽनीश्व-
रोपास्तिः सिद्धांते प्रत्यक् ब्रह्मज्ञानमिति मंतव्यं स्वयमेवारुचिं वदन्पक्षांतरमाह॥ अथवेति॥ अनिश्चितार्थे फलाभावेनाफल-

अथवा नानिरूपितरूपमर्थांतरं शक्यमस्तीत्यभ्युपगंतुं॥ अंतर्यामिशब्दश्चांतर्यमनयोगेन प्रवृ-
त्तो नात्यंतमप्रसिद्धः॥ तस्मात्पृथिव्याद्यभिमानी कश्चिद्देवोंतर्यामी स्यात्॥ तथा च श्रूयते॥ पृथिव्ये-
व यस्यायतनमग्निर्लोको मनोज्योतिरित्यादि॥ स च कार्यकरणवत्त्वात्पृथिव्यादीनंतस्तिष्ठन्यमय-
तीति युक्तं देवतात्मनो यमयितृत्वं॥ योगिनो वा कस्यचित्सिद्धस्य सर्वानुप्रवेशेन यमयितृत्वं स्यात्।
॥ न तु परमात्माप्रतीयेताकार्यकरणत्वादित्येवं प्राप्त इदमुच्यते॥ योंतर्याम्यधिदैवादिषु श्रूयते स
परमात्मैव स्यात्॥ नान्य इति॥ कुतस्तद्धर्मव्यपदेशात्॥ तस्य हि परमात्मनो धर्मा इह निर्दिश्यमाना दृ-
श्यंते॥ पृथिव्यादि तावदधिदैवादिभेदभिन्नं समस्तं विकारजातमंतस्तिष्ठन्यमयतीति परमात्मनो
यमयितृत्वं धर्म उपपद्यते॥ सर्वविकारकारणत्वे सति सर्वशक्त्युपपत्तेः॥ एष त आत्मांतर्याम्यमृत इति चा-
त्मत्वामृतत्वे मुख्ये परमात्मन उपपद्येते

स्येवेदार्थत्वायोगादिति भावः तथा च श्रूयते वेदे पृथिवी यस्य देवस्यायतनं शरी-
रं लोक्यतेऽनेनेति लोकश्चक्षुर्ज्योतिः सर्वार्थप्रकाशकं मन इत्यर्थः॥ उपक्रमादिनांतर्याम्यैक्यनिश्चयादनेकदेवपक्षो न युक्त इत्यरुचेरा-
ह॥ योगिनो वेति॥ आगंतुकसिद्धस्यांतर्यामित्वप्रसिद्धसाधनकल्पनागौरवान्नित्यसिद्धः सर्वांतर्यामीति सिद्धांतयति॥ एवं प्राप्त

॥ ९ ॥ ॥ ९ ॥

देवतानिरासे हेत्वंतरमाह यं पृथिवीति। ईश्वरोन नियंता शरीरत्वात् घटवदित्युक्तं निरस्यति नैष दोष इति। नियम्यातिरिक्तशरीरशून्यत्वं वा हेतुः शरीरासंबंधित्वं वा आद्ये स्वदेहनियंतरि जीवे व्यभिचारः द्वितीयस्त्वसिद्धः ईश्वरस्य स्वाविद्योपार्जित सर्वसंबंधित्वादित्याह॥ यान्नियच्छतीति॥ सशरीरो नियंतेति लोकदृष्टिमनुसृत्यैतदुक्तं वस्तुतस्तु चेतनसान्निध्याज्जडस्य व्यापारो नियमनं तच्छक्तिमत्वं नियंतृत्वं तच्चाचिंत्यमायाशक्तेश्चिदात्मनः शरीरं विनैवोपपन्नं न तु देहनियंतृ

यं पृथिवी न वेदेति च पृथिवीदेवताया अविज्ञेयमंतर्यामिणं ब्रुवन् देवतात्मनोन्यमंतर्यामिणं दर्शयति॥ पृथिवी देवता ह्यहमस्मि पृथिवीत्यात्मानं विजानीयात्॥ तयाः दृष्टोऽश्रुत इत्यादिव्यपदेशो रूपादिविहीनत्वात् परमात्मन उपपद्यत इति॥ यत्त्वकार्यकरणस्य परमात्मनो यमयितृत्वं नोपपद्यत इति॥ नैष दोषः॥ यान्नियच्छति तत्कार्यकरणैरेव तस्य कार्यकरणत्वोपपत्तेः॥ तस्याप्यन्यो नियंतेत्यनवस्थादोषश्च न संभवति॥ भेदाभावात्॥ भेदे हि सत्यनवस्थादोषोपपत्तिः॥ तस्मात् परमात्मैवांतर्यामी॥१८॥ न च स्मार्तमतद्धर्माभिलापात्॥१९॥ स्यादेतददृष्टत्वादयो धर्माः सांख्यस्मृतिकल्पितस्य प्रधानस्याप्युपपद्यंते रूपादिहीनतया तस्य तैरभ्युपगमात्॥ अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वत इति हि स्मरंति॥ तस्यापि नियंतृत्वं सर्वविकारकारणत्वादुपपद्यते॥ तस्मात् प्रधानमंतर्यामिशब्दं स्यात्॥ ईक्षतेर्नाशब्दमित्यत्र निराकृतमपि सत्प्रधानमिहादृष्टत्वादिव्यपदेशसंभवेन पुनराशंक्यते॥ अत उत्तरमुच्यते॥ न च स्मार्तं प्रधानमंतर्यामिशब्दं भवितुमर्हति॥ कस्मात् अतद्धर्माभिलापात्॥ यद्यप्यदृष्टत्वादिव्यपदेशः प्रधानस्य संभवति॥ तथापि न द्रष्टृत्वादिव्यपदेशः संभवति॥ प्रधानस्याचेतनत्वेन तैरभ्युपगमात्॥ जीवस्यान्यो नियंता चेत्तस्याप्यन्य इत्यनवस्थेत्यत आह॥ तस्यापीति॥ निरंकुशं सर्वनियंतृत्वं ईश्वरस्य श्रुतं तस्य नियंत्रंतरानुमाने श्रुतिबाध इति नानवस्थेत्यर्थः॥ यद्वा ईश्वराद्भेदकल्पनया जीवस्य नियंतृत्वोक्तेः सत्यभेदाभावान्नानवस्थेत्यर्थः॥१८॥ प्रधानं महदादिक्रमेण कथं प्रवर्तत इति तर्कस्याविषयं इत्याह अप्र

ब्र॰ भा॰
र॰ प्र॰ टी॰
८२

रूपादिहीनत्वाद् अविज्ञेयं सर्वतो दिक्षु प्रसुप्तमिव तिष्ठति जडत्वादित्यर्थः अनतत् अप्रधानं चेतनं तत्स्य धर्माणामभिधानादिति हेत्वर्थः
१९ उत्तरसूत्रनिरस्यशंकामाह ॥ यदि प्रधानमित्यादिना ॥ अमृतस्येति ॥ विनाशिनो देहांतरभोगानुपपत्तेरित्यर्थः यथा देवदत्तकर्तृकगमनक्रि
यायाः ग्रामः कर्म न देवदत्तस्तथात्मकर्तृकदर्शनादिक्रियायाः अनात्मा विषयः न त्वात्मा क्रियायाः कर्तृविषयत्वायोगादित्याह ॥ कर्त्रे

अ॰ १ पा॰ २

अदृष्टो द्रष्टाऽश्रुतः श्रोतामतो मंताविज्ञातो विज्ञातेति हि वाक्यशेष इह भवति ॥ आत्मत्वमपि न प्रधानस्यो
पपद्यते ॥ १९ ॥ यदि प्रधानमात्मत्वद्रष्टृत्वाद्यसंभवान्नांतर्याम्यभ्युपगम्यते ॥ शारीरस्तर्ह्यंतर्यामी भवतु ॥ शारी
रो हि चेतनत्वात् द्रष्टा श्रोता मंता विज्ञाता च भवत्यात्मा च प्रत्यक्त्वात् ॥ अमृतश्च धर्माधर्मफलोपभोगोपप
त्तेः ॥ अदृष्टत्वादयश्च धर्माः शारीरे प्रसिद्धाः दर्शनादिक्रियायाः कर्तरि प्रवृत्तिविरोधात् ॥ न दृष्टेर्द्रष्टारं पश्ये
रित्यादिश्रुतिभ्यश्च ॥ तस्य च कार्यकरणसंघातमंतर्यमयितृशीलं भोक्तृत्वात् ॥ तस्माच्छारीरोंतर्यामीत्यत उत्त
रं पठति ॥ शारीरश्चोभयेपि हि भेदेनैनमधीयते ॥ २१ ॥ नेति पूर्वसूत्रादनुवर्तते शारीरश्च नांतर्यामीष्यते ॥ क
स्माद्यद्यपि द्रष्टृत्वादयो धर्माः तस्य संभवंति तथापि घटाकाशवदुपाधिपरिच्छिन्नत्वात् न कार्त्स्न्येन पृथिव्या
दिष्वंतरवस्थातुं नियंतुं च शक्नोति ॥ अपि चोभयेपि हि शाखिनः काण्वा माध्यंदिनाश्चांतर्यामिणो भेदेनैनं शा
रीरं पृथिव्यादिवदधिष्ठानत्वेन नियम्यत्वेन चाधीयते ॥ यो विज्ञाने तिष्ठन्निति काण्वाः ॥ य आत्मनि तिष्ठ
न्निति माध्यंदिनाः ॥ य आत्मनि तिष्ठन्नित्यस्मिंस्तावत्पाठे भवत्यात्मशब्दः शारीरस्य वाचकः ॥ ॥

राम॰
८२

रोति ॥ क्रियायां गुणः कर्ता प्रधानं कर्म न त्वेकस्यां क्रियायामेकस्य गुणत्वप्रधानत्वयोर्विरोधान्न कर्तुः कर्मत्वमित्यर्थः दृष्टेर्द्रष्टारमात्मानं तया दृ
श्यया दृष्टानविषयीकुर्यादित्यादिश्रुतेश्च द्रष्टृत्वादिधर्माः शारीरस्येत्याह ॥ नेति अपिशब्दसूचितं हेतुमुक्त्वा कंठोक्तं हेतुमाह ॥ अपि चोभयेपी

भेदेनेति सूत्रान्तात्त्विकभेदभ्रांतिं निरसितुं शंकते॥ कथमिति॥ नन्वत्रैको भोक्ता जीवः ईश्वरस्त्वभोक्तेति न विरोध इति शंकते॥ का पुनरिति॥ नयो
र्भेदः श्रुतिविरुद्ध इति पूर्ववाद्याह नान्य इति स एव श्रुत्यर्थमाह॥ अत्रेति॥ श्रुतेरर्थांतरमाशंक्य निषेधति॥ नियंत्रंतरेत्यादिना न केवलमप्रसक्तप्र
तिषेधः किंत्वविशेषेण द्रष्ट्रंतरनिषेधश्रुतेरंतर्याम्यंतरनिषेधार्थत्वे बाधश्चेत्याह॥ अविशेषेति॥ तस्मात्सूत्रे य आत्मनि तिष्ठन्निति श्रुतौ च द्रष्टृभेदो

योविज्ञाने तिष्ठन्नित्यस्मिन्नपि पाठे विज्ञानशब्देन शारीर उच्यते॥ विज्ञानमयो हि शारीर इति तस्माच्छारीरादन्य
ईश्वरोंतर्यामीति सिद्धं॥ कथं पुनरेकस्मिन्देहे द्वौ द्रष्टारावुपपद्येते॥ यश्चायमीश्वरोंतर्यामी यश्चायमितरः शारीरः॥
का पुनरिहानुपपत्तिः॥ नान्योतोस्ति द्रष्टेत्यादिश्रुतिवचनं विरुध्यते॥ अत्र हि प्रकृतादंतर्यामिणोऽन्यं द्रष्टारं श्रोता
रं मंतारं विज्ञातारं चात्मानं प्रतिषेधति॥ नियंत्रंतरप्रतिषेधार्थमेतद्वचनमिति चेत् न नियंत्रंतराऽप्रसंगात्॥ अवि
शेषश्रवणाच्च॥ अत्रोच्यते॥ अविद्याप्रत्युपस्थापितकार्यकरणोपाधिनिमित्तोऽयं शारीरांतर्यामिणोर्भेदव्यपदे
शो न पारमार्थिकः॥ एको हि प्रत्यगात्मा भवति॥ न द्वौ प्रत्यगात्मानौ संभवतः॥ एकस्यैव तु भेदव्यवहार उपाधिकृतः॥
यथा घटाकाशो महाकाश इति॥ ततश्च ज्ञातृज्ञेयादिभेदश्रुतयः प्रत्यक्षादीनि च प्रमाणानि संसारानुभवो विधिप्रतिषे
धशास्त्रं सर्वमेतदुपपद्यते॥ तथा च श्रुतिः॥ यत्र हि द्वैतमिव भवति तदितर इतरं पश्यतीत्यविद्याविषये सर्वव्यवहा
रं दर्शयति॥ यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदिति विद्याविषये सर्वव्यवहारं वारयति॥२०॥५॥ ॥

किं स्युक्तानान्य इति वाक्यशेषे भेदनिरासादिति प्राप्ते भेद उपाधिकल्पितः श्रुतिसूत्राभ्यामनूद्यत इति समाधत्ते॥ अत्रोच्यत इति भेदः सत्यः किं न स्या
दत आह॥ एको हीति॥ गौरवेण द्वयोरहंधीगोचरत्वासंभवादेक एवात्मा गोचरः तदगोचरस्य घटवदनात्मत्वात्तत्रात्मभेदः सत्य इत्यर्थः॥ ततश्चेति॥
कल्पितभेदांगीकाराद्द्वैतापेक्षं सर्वं युज्यत इत्यर्थः तस्मादंतर्यामित्राह्मणे ज्ञेयं ब्रह्म लिंगसमन्वितमिति सिद्धं॥२०॥

शा॰भा॰
र॰प्र॰टी॰
८३

अदृश्यत्वादिगुणकोधर्मोक्तेः॥ मुंडकवाक्यमुदाहरति॥ अथेति॥ कर्मविद्यारूपा॰ परविद्योक्त्यनंतरंययानिर्गुणं ज्ञायनेपरा। सोच्यतेनामेवविषयोक्त्यानिर्दिशतियत्तदिति॥ अद्रेश्यंअदृश्यंज्ञानेंद्रियैः अग्राह्यंकर्मेंद्रियैः गोत्रंवंशः वर्णोब्राह्मणत्वादिजा। तिः चक्षुःश्रोत्रशून्यमचक्षुःश्रोत्रंपाणिपादशून्यमपाणिपादंज्ञानकर्मेंद्रियविकलमित्यर्थः विभुंप्रभुंसुसूक्ष्मंदुर्ज्ञेयत्वात्नित्याव्य

अ॰१पा॰२

अदृश्यत्वादिगुणकोधर्मोक्तेः॥ २१॥ अथपरायया तदक्षरमधिगम्यते॥ यत्तदद्रेश्यमग्राह्यम गोत्रमवर्णमचक्षुः श्रोत्रंतदपाणिपादं॥ नित्यंविभुंसर्वगतंसुसूक्ष्मंतदव्ययंयद्भूतयोनिंपरिप श्यंतिधीराइति श्रूयते॥ तत्रसंशयः॥ किमयमदृश्यत्वादिगुणकोभूतयोनिः प्रधानंस्यात्॥उ तशारीरआहोस्विन्परमेश्वरइति॥ तत्रप्रधानमचेतनंभूतयोनिरितियुक्तं॥ अचेतनानामेवत दृष्टांतत्वेनोपपादनात्॥ यथोर्णनाभिः सृजतेगृण्हतेचयथापृथिव्यामोषधयः संभवंति॥ यथा सतः पुरुषात्केशलोमानितथाक्षरात्संभवतीहविश्वमिति॥ ननूर्णनाभिः पुरुषश्चेतनाविह। दृष्टांतत्वेनोपात्तौनेतिब्रूमः॥ नहिकेवलस्यचेतनस्यतत्रसूत्रयोनित्वंकेशलोमयोनित्वंवास्ति ॥ चेतनाधिष्ठितंह्यचेतनमूर्णनाभिशरीरंसूत्रस्ययोनिः पुरुषशरीरंचकेशलोम्नामितिप्रसिद्धं॥

राम॰
८३

यपक्षाभ्यांनाशापक्षयर्योनिरासः भूतानांयोनिंप्रकृतिंयत्पश्यंतिधीराः पंडितास्तदक्षरंतद्विद्यापरेत्यन्वयः अद्रेश्यत्वादिगुणानांब्रह्म प्रधानसाधारणत्वात्संशयः पूर्ववद्द्रष्टृत्वादीनांचेतनधर्माणामत्राश्रुतेः अस्तुप्रधानमितिप्रत्युदाहरणेनपूर्वपक्षयति॥ तत्रेति॥ पूर्वप क्षेप्रधानाद्युपास्तिः सिद्धांतेनिर्गुणधीरितिफलं ऊर्णनाभिर्लूताकीटः तंतून्स्वदेहात्सृजतिउपसंहरतिचेत्यर्थः सतोजीवतः॥ ॥

ननु पूर्वं निरस्तं प्रधानं कथमनुन्याय्यतेन्तत्राह ॥ अपि चेति ॥ अत्र प्रधाने विरुद्ध्यमानोऽसंभावितो वाक्यशेषः श्रुत इति शंकते ॥ ननु य इति ॥ पंचम्यं तादक्षरश्रुत्या भूतप्रकृतेः प्रत्यभिज्ञानात्प्रथमांतपरशब्दोक्तस्य जगन्निमित्तेश्वरस्य सर्वज्ञत्वादिकमित्याह ॥ अत्रो॥च्यत इति ॥ संदिग्धे तु वाक्यशेषादिति न्यायेन सिद्धांतयति एवं प्राप्त इति चेतनाचेतनत्वेन संदिग्धे भूतयोनौ यः सर्वज्ञ इति वाक्य

अपि च पूर्वत्रादृष्टत्वाद्यभिलापसंभवेपि द्रष्टृत्वाद्यभिलापासंभवात् न प्रधानमभ्युपगतं इह त्वदृ श्यत्वाद्यो धर्माः प्रधाने संभवंति ॥ नात्र विरुध्यमानो धर्मः कश्चिदभिलप्यते ॥ ननु यः सर्वज्ञः सर्ववि दित्ययं वाक्यशेषोऽचेतने प्रधाने न संभवति ॥ कथं प्रधानं भूतयोनिः प्रतिज्ञायत इत्यत्रोच्यते ॥ यया त दक्षरमधिगम्यते ॥ यत्तदद्रेश्यमक्षरशब्देनादृश्यत्वादिगुणकं भूतयोनिं श्रावयित्वा पुनरंते श्रावयिष्य ति अक्षरात्परतः पर इति ॥ तत्र यः परोऽक्षरात् श्रुतः स सर्वज्ञः सर्ववित् भविष्यति प्रधानमेव त्वक्षरश ब्दनिर्दिष्टं भूतयोनिः ॥ यदा तु योनिशब्दो निमित्तवाची तदा शारीरोपि भूतयोनिः स्यात् ॥ धर्माधर्माभ्यां भूतजातस्योपार्जनादिति ॥ एवं प्राप्तेऽभिधीयते ॥ योयमदृश्यत्वादिगुणको भूतयोनिः स परमेश्वर एव। स्यान्नान्य इति ॥ कथमेतदवगम्यते ॥ धर्मोक्तेः ॥ परमेश्वरस्य हि धर्म इहोच्यमानो दृश्यते ॥ यः सर्वज्ञः स र्ववि दिति ॥ न हि प्रधानस्याचेतनस्य शारीरस्य वोपाधिपरिच्छिन्नदृष्टेः सर्वज्ञत्वं सर्ववित्वं वा संभवति ॥ नन्वक्षरशब्दनिर्दिष्टात् भूतयोनेः परस्यैव तत्सर्वज्ञत्वं सर्ववित्वं च न भूतयोनिविषयमित्युक्तं ॥ ९ ॥

शेषादीश्वरत्वनिर्णय इत्ययुक्तं वाक्यशेषे भूतयोनेः प्रत्यभिज्ञायकाभावादिति शंकते ॥ नन्विति ॥ जनिकर्तुः प्रकृतिरिति सूत्रेण प्रकृते रपादानसंज्ञायां पंचमीस्मरणादक्षरात्संभवतीति प्रकृतित्वेनोक्ताक्षरस्य भूतयोनेर्वाक्यशेषे तस्मादिति प्रकृतित्वलिंगेन प्रत्यभिज्ञान

अत्रोच्यत इति॥ एतत्कार्यं ब्रह्म सूक्ष्मात्मकं नाम रूपं स्थूलं ततोन्नं व्रीह्यादीत्यर्थः॥ यदुक्तं पंचमंत्रं नाक्षरश्रुत्या भूतयोनेः प्रत्यभिज्ञानादचेतनत्वमिति तत्राह॥ अक्षरात्परत इति॥ नायमक्षरशब्दो भूतयोनिपरामृशति परविद्याधिगम्यत्वेनोक्तस्याक्षरस्य भूतयोनेरक्षरं पुरुषं वेदेत्यक्षरश्रुत्या वेद्यत्वलिंगवत्या पूर्वमेव ब्रह्मत्वेन परामर्शादित्याह॥ येनेति॥ येन ज्ञानेनाक्षरं भूत

अत्रोच्यते॥ नैवं संभवति यत्कारणमक्षरात्संभवतीह विश्वमिति प्रकृतं भूतयोनिमिह जायमान-
प्रकृतित्वेन निर्दिश्यानंतरमपि जायमानप्रकृतित्वेनैव सर्वज्ञं निर्दिशति॥ यः सर्वज्ञः सर्वविद्यस्य ज्ञानम-
यं तपः॥ तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायत इति॥ तस्मान्निर्देशसाम्येन प्रत्यभिज्ञायमानत्वात्प्रकृत-
स्यैवाक्षरस्य भूतयोनेः सर्वज्ञत्वं सर्ववित्त्वं च धर्म उच्यत इति गम्यते॥ अक्षरात्परतः पर इत्यत्रापि न प्रकृ-
ताद्भूतयोनेरक्षरात्परः कश्चिदभिधीयते॥ कथमेतदवगम्यते॥ येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां त-
त्त्वतो ब्रह्मविद्यामिति प्रकृतस्यैवाक्षरस्य भूतयोनेरदृश्यत्वादिगुणकस्य वक्तव्यत्वेन प्रतिज्ञातत्वात्॥
कथं तर्ह्यक्षरात्परतः पर इति व्यपदिश्यत इत्युत्तरसूत्रे तद्वक्ष्यामः॥ अपि चात्र द्वे विद्ये वेदितव्ये उक्ते-
परा चैवापरा चेति॥ तत्रापरामृग्वेदादिलक्षणां विद्यामुक्त्वाब्रवीत् अथ परा यया तदक्षरमधिगम्यत इत्या-
दि तत्र परस्या विद्याया विषयत्वेनाक्षरं श्रुतं॥ यदि पुनः परमेश्वरादन्यददृश्यत्वादिगुणकमक्षरं परि-
कल्प्येत नेयं परा विद्या स्यात्॥

योनिं सर्वज्ञं पुरुषं वेद तां ब्रह्मविद्यां योग्याय शिष्याय प्रब्रूयादित्युपक्रम्याप्राणो ह्यम-
नाः शुभ्रो ह्यक्षरात्परतः पर इत्युच्यमानः परो भूतयोनिरिति गम्यत इत्यर्थः नहि पंचमंत्रं नाक्षरशब्दार्थः क इत्याशंक्याज्ञान-
मिति वक्ष्यत इत्याह॥ कथमिति॥ परविद्येति समाख्ययापि तद्विषयस्य ब्रह्मत्वमित्याह॥ अपि चेति॥ ७ ७ ७ ७ ॥

ननुप्रधानविद्यापिकारणविषयत्वात्परेत्यत आह॥ परापरविभागो हीति॥ अनित्यफलत्वेनापरविद्यां निंदित्वा मुमुक्षार्थिने ब्रह्मविद्यां प्रोवाचेति वाक्यशेषोक्तेरित्यर्थः अस्तु प्रधानविद्यापि मुक्तिफलत्वेन परेत्यत आह॥ नचेति॥ ननु यः सर्वज्ञ इत्यग्रे परविद्याविष-यउच्यते॥ अद्रेश्यवाक्ये न तु प्रधानविद्योच्यत इत्यत आह॥ निरस्येति॥ इतश्च भूतयोनेर्ब्रह्मत्वमित्याह॥ कस्मिन्निति॥ अचेतनमा-

परापरविभागो ह्ययं विद्ययोरभ्युदयनिःश्रेयसफलतया परिकल्प्यते॥ न च प्रधानविद्या निःश्रेयस-फला केनचिदभ्युपगम्यते॥ तिस्रश्च विद्याः प्रतिज्ञायेरंस्त्वन्पक्षे अक्षराद्भूतयोनेः परस्य परमात्मनः॥ प्रतिपाद्यमानत्वात् द्वे एव तु विद्ये वेदितव्ये इह निर्दिष्टे॥ कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भव-तीति चैकविज्ञानेन सर्वविज्ञानापेक्षणं सर्वात्मके ब्रह्मणि विवक्ष्यमाणेऽवकल्प्यते॥ नाचेतनमात्रैका-यतने प्रधाने भोग्यव्यतिरिक्ते वा भोक्तरि॥ अपि च सब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्रा-हेति ब्रह्मविद्यां प्राधान्येनोपक्रम्य परापरविभागेन परां विद्यामक्षराधिगामिनीं दर्शयंस्तस्याः ब्रह्मवि-द्यात्वं दर्शयति॥ सा च ब्रह्मविद्यासमाख्या तदधिगम्यस्याक्षरस्याब्रह्मत्वे बाधिता स्यात्॥ अपरा ऋग्वेदा-दिलक्षणा कर्मविद्या ब्रह्मविद्योपक्रम उपन्यस्यते ब्रह्मविद्याप्रशंसायै॥ प्लवा ह्येते अदृढा यज्ञरूपा अष्टा-दशोक्तमवरं येषु कर्म॥ एतच्छ्रेयो येऽभिनंदंति मूढा जरामृत्युं ते पुनरेवापियंतीत्येवमादिनिंदावचनात्॥

त्रस्यैकायतनस्योपादानस्य ज्ञानात् कार्यज्ञानेऽपि तदकार्याणामात्मनां ज्ञानं न भवति॥ एवं जीवज्ञाने तदकार्यस्य भोग्यस्य ज्ञानं न भवतीत्यर्थः॥ ब्रह्मविद्याशब्दाच्च भूतयोनिर्ब्रह्मेत्याह॥ अपि चेति॥ सब्रह्मविद्यां सर्वविद्यानां प्रतिष्ठां समाप्तिभूमिं ब्रह्मविद्यामुवाच ब्रह्मणि सर्वविद्यानां वि-द्याफलानां चांतर्भावात् ब्रह्मविद्या सर्वविद्याप्रतिष्ठा तन्नपरविद्यापरप्रकरणे किमर्थमुक्तेत्यत आह॥ अपरेति॥ प्लवं नेगच्छंतीति प्लवाः वि-

अश्रद्धाः नित्यफलसंपादनाशक्ताः षोडशर्त्विजः पत्नीयजमानश्चेत्यष्टादश यज्ञेन नाम निमित्तेन निरूप्यंत इति यज्ञरूपाः तथा हि क्रतुषु। यजतीति यज्ञं कारयंतीत्यृत्विजः यजत इति यजमानः पत्युर्नो यज्ञसंयोग इति सूत्रेण पतिशब्दस्य नकारोंतादेशो यज्ञसंबंधे विहित इति पत्नी एवमृत्विगादिनामप्रवृत्तिनिमित्तं यज्ञ इति यज्ञरूपाः येष्ववरमनित्यफलकं कर्मश्रुत्युक्तं एतदेव कर्म श्रेयो नान्यदात्मज्ञानमिति ये मूढास्तु ष्यंति ते पुनःपुनर्जन्ममरणमाप्नुवंतीत्यर्थः ॥ तद्विज्ञानार्थं गुरुमभिगच्छेदेवेति नियमः ॥ ब्रह्मनिष्ठस्याप्यनधीतवेदस्य गुरुत्वं वारयति।



निंदित्वा चापरां विद्यां ततो विरक्तस्य परविद्याधिकारं दर्शयति ॥ परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ॥ तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः ॥ श्रोत्रियं ब्रह्मनिष्ठमिति ॥ यत्तूक्तमचेतनानां पृथिव्यादीनां दृष्टांतत्वेनोपादानाद्दार्ष्टांतिकेनाप्यचेतनेन भूतयोनिना भवितव्यमिति तदयुक्तं ॥ नहि दृष्टांतदार्ष्टांतिकयोरत्यंतसाम्येन भवितव्यमिति नियमोस्ति ॥ अपि च स्थूलाः पृथिव्यादयो दृष्टांतत्वेनोपात्ता इति न स्थूल एव दार्ष्टांतिको भूतयोनिरभ्युपगम्यते ॥ तस्माददृश्यत्वादिगुणको भूतयोनिः परमेश्वर एव ॥ २१ ॥ विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ २२ ॥ इतश्च परमेश्वर एव भूतयोनिर्नेतरौ शारीरः प्रधानं वा ॥ कस्माद्विशेषणभेदव्यपदेशाभ्यां ॥ विशिनष्टि हि प्रकृतं भूतयोनिं शारीराद्विलक्षणत्वेन दिव्यो ह्यमूर्त्तः पुरुषः स बाह्याभ्यंतरो ह्यजः ॥ अप्राणो ह्यमनाः शुभ्र इत्यादि ॥ १ ॥ १ ॥



॥ श्रोत्रियमिति ॥ कार्यमुपादानाभिन्नमित्यंशे दृष्टांतः सर्वसाम्येन त्वाप्यनिष्टापत्तेरित्याह ॥ अपि च स्थूला इति ॥ २१ ॥ विशेषणाच्च जीवो भेदोक्तेर्न प्रधानमिति हेतुद्वयं विभज्य व्याचष्टे ॥ विशिनष्टि हीत्यादिना ॥ दिव्यो द्योतनात्मकः स्वयंज्योतिरमूर्त्तः पूर्णः पुरुषः पुरिशयः प्रत्यगात्मा बाह्यं स्थूलमाभ्यंतरं संस्कारणं सूक्ष्मं ताभ्यां सहाधिष्ठानत्वेन तिष्ठतीति स बाह्याभ्यंतरः हि तयाश्रुतिषु प्रसिद्ध इत्यर्थः ॥

अविद्याकृतंनामरूपात्मकंशरीरंतेनपरिच्छेदोल्पत्वंतस्यशरीरस्यधर्मान्जाड्यमूर्त्तत्वादीनित्यर्थः॥ नन्वक्षरशब्देनप्रधानो
क्तावशब्दत्वंप्रधानस्यप्रतिज्ञानंवाध्येततत्राह॥ अक्षरमव्याकृतमिति॥ अश्नोतिव्याप्नोतिस्वविकारजातमित्यक्षरं अव्याकृतं
अव्यक्तं अनादीत्यावत्॥ नामरूपयोर्बीजमीश्वरस्तस्यशक्तिरूपंपरतंत्रत्वादुपादानमपिशक्तिरित्युक्तंभूतानांसूक्ष्माःसंस्का
रायत्रतद्भूतसूक्ष्मंईश्वरश्चिन्मात्रआश्रयोयस्यततथातस्यैवचिन्मात्रस्यजीवेश्वरभेदोपाधिभूतं॥ यत्तुईश्वरआश्रयोविषयोय
स्येतिनानाजीववादिनांव्याख्यानंतद्भाष्यवहिर्भूतं एतस्मिन्नुखल्वक्षरेगार्गिआकाशओतश्चप्रोतश्चेत्योतप्रोतभावेनाव्याकृतस्यचिदा
श्रयत्वश्रुतेः॥ आश्रयपदलक्षणायानिर्मूलत्वात् नहिमूलप्रकृतेर्भेदेकिंचन्मानमस्ति॥ नचेंद्रोमायाभिरितिश्रुतिर्मानंअजामेकामि

नह्येतद्दिव्यत्वादिविशेषणमविद्याप्रत्युपस्यापितन्नामरूपपरिच्छेदाभिमानिनःतद्धर्मांश्चात्मनिकल्पय
तःशरीरस्योपपद्यते॥ तस्मात्साक्षादौपनिषदःपुरुषइहोच्यते॥ तथाप्रधानादपिप्रकृतंभूतयोनिंभे
देनव्यपदिशति॥ अक्षरात्परतःपरइति॥ अक्षरमव्याकृतंनामरूपबीजशक्तिरूपंभूतसूक्ष्ममीश्व
राश्रयंतस्यैवोपाधिभूतंसर्वस्माद्विकारात्परोयः॥ ११ त्याद्यनेकश्रुतिबलेनलाघवतर्कसहायेनतस्याःश्रुतेर्बुद्धिभेदे
नमायाभेदानुवादित्वात्॥ तदुक्तंसुरेश्वराचार्यैः स्वतस्त्वविद्याभेदोऽत्रमनागपिनविद्यतइतिसांख्ययोगाचार्याःपुराणेतिहासक
र्त्तारश्चमूलप्रकृत्यैक्यंवदंति॥ नन्वविद्यैक्येवंधमुक्तिव्यवस्थाकथंनचव्यवस्थानास्तीतिवाच्यंश्रवणेप्रवृत्त्यादिबाधापातादितिचेत्उ
च्यतेयद्यविद्यानानात्वमिष्टंतितैरपिपरिणामित्वेनसांशत्वमविद्यायाअंगीकार्यं॥ तथाचानर्थात्मकस्वीयसंघातात्मनापरिणताविद्यांशो
पहितजीवभेदाद्व्यवस्थासिध्यतियस्यज्ञानमंतःकरणेजायतेतस्यांतःकरणपरिणाम्यज्ञानांशनाशोमुक्तिरिति॥ एवंचश्रोतुःस्वरू
पानंदप्राप्तिःश्रवणादौप्रवृत्तिर्विद्वदनुभवोजीवन्मुक्तिशास्त्रंचेतिसर्वमवाधितंभवति नचैवंनानाजीवपक्षादविशेषःमूलप्रकृतिनाना

सि॰ बि॰ टि॰

परत्वेहेतुः अविकारइति॥ ननुसूत्रकृताश्रुतौप्रधानाद्भेदव्यपदेशउक्तस्तत्रकथमज्ञानाद्भेदोक्तिर्व्याख्यायतेतत्राह॥ नात्रेति॥
॥ कार्यात्मनाप्रधीयतइतिप्रधानमज्ञानमेवततोन्यस्याप्रामाणिकत्वादित्यर्थः अतोत्राज्ञानमेवभूतयोनिरिति पूर्वपक्षंकृत्वा॥
निरस्तेनतन्निरासेनार्थात्सांख्यकल्पितप्रधाननिरासइतिमंतव्यं॥२२॥ इतिकृत्स्नमतेनाद्यसूत्रंव्याचष्टे॥ अपिचेत्यादिना॥ प्राणोमनः॥

अविकारस्तस्मात्परतःपरइतिभेदेनव्यपदेशात्परमात्मानमिहविवक्षितंदर्शयति॥ नात्रप्रधा
नंनामकिंचित्स्वतंत्रंतत्त्वमभ्युपगम्यतस्माद्भेदव्यपदेशउच्यते॥ किंतर्हियदिप्रधानमपिकल्प्य
मानंश्रुत्यविरोधेनाव्याकृतादिशब्दवाच्यंभूतसूक्ष्मंपरिकल्प्येतपरिकल्प्यतां॥ तस्माद्भेदव्यप
देशात्परमेश्वरोभूतयोनिरित्येतदिहप्रतिपाद्यते॥२२॥ कुतश्चपरमेश्वरोभूतयोनिः॥ रूपोपन्या
साच्च॥२३॥ अपिचाक्षरात्परतःपरइत्यस्यानंतरमेतस्माज्जायतेप्राणइतिप्राणप्रभृतीनांपृथिवीप
र्यंतानांसर्गमुक्त्वातस्यैवभूतयोनेःसर्वविकारात्मकंरूपमुपन्यस्यमानंपश्यामोऽग्निर्मूर्द्धाचक्षुषी
चंद्रसूर्यौदिशःश्रोत्रेवाग्विवृताश्चवेदाःवायुःप्राणोहृदयंविश्वमस्यपद्भ्यांपृथिवीह्येषसर्वभूतां
तरात्मेति॥ तच्चपरमेश्वरस्योचितंसर्वविकारकारणत्वात्शारीरस्यतनुमहिम्नोनापिप्रधानस्या
यंरूपोपन्यासःसंभवतिसर्वभूतांतरात्मत्वासंभवात्॥ तस्मात्परमेश्वरएवभूतयोनिर्नेतराविति
गम्यते॥६॥

सर्वेंद्रियाणिच॥ खंवायुर्ज्योतिरापःपृथिवीतिश्रुतिः॥ अपिद्युलोकः असौवावलोकोगौतमाग्निरितिश्रु
तिः विवृताः वेदाः वागित्यन्वयः॥ पद्भ्यांपादावित्यर्थः यस्येदंरूपंसएषसर्वप्राणिनामंतरात्मेत्यर्थः तनुमहिम्नइति अल्पशक्ते
रित्यर्थः यथाकश्चित् ब्रह्मवित्स्वस्यसर्वात्मत्वप्रकटनार्थमहमन्नमित्तिसामगायतिनतावन्नत्वादिकमात्मनोविवक्षति॥ ६॥

अफलत्वात्तथेहापीत्याह॥ अहमन्नमिति॥ इति कश्चाख्यां दूषयति॥ अन्ये पुनरिति॥ एषसर्वभूतांतरात्मास्त्रात्मा॥ एतस्माद्भू
तयोनेर्जायत इति श्रुत्यान्वयेन हिरण्यगर्भस्यात्र जायमानत्वेनोपन्यासादित्यर्थः निरदिक्षदवोचदित्यर्थः अग्निर्मूर्द्धालोकः यस्य॥

कथं पुनर्भूतयोनेरयं रूपोपन्यास इति गम्यते प्रकरणादेष इति च प्रकृतानुकर्षणात् भूत।
योनिं हि प्रकृत्यैतस्माज्जायते प्राण एष सर्वभूतांतरात्मेति च वचनं भूतयोनिविषयमेव भवति॥
यथोपाध्यायं प्रकृत्यैतस्मादधीष्वैष वेदवेदांगपारग इति वचनमुपाध्यायविषयं भवति तद्व
त्कथं पुनरदृश्यत्वादिगुणकस्य भूतयोनेर्विग्रहवद्रूपं संभवति॥ सर्वात्मत्वविवक्षयेदमुच्य।
ते न तु विग्रहवत्त्वविवक्षयेत्यदोषः॥ ॥ अहमन्नमहमन्नादइत्यादिवत्॥ अन्ये पुनर्मन्यं
ते नायं भूतयोने रूपोपन्यासो जायमानत्वेनोपन्यासात्॥ एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणि
च खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणीति हि पूर्वत्र प्राणादि पृथिव्यंतं तत्त्वजातं जायमानत्वे
न निरदिक्षदुत्तरत्रापि च तस्मादग्निः समिधो यस्य सूर्य इत्येवमाद्यतश्च सर्वा ओषधयो रसाश्चेत्येव।
मंतं जायमानत्वेनैव निर्देक्ष्यति इहेव कथमकस्मादंतराले भूतयोने रूपमुपन्यसेत्॥ सर्वात्मत्वमपि।
सृष्टिं परिसमाप्योपदेक्ष्यति पुरुष एवेदं विश्वं कर्मेत्यादिना॥ श्रुतिस्मृत्योश्च त्रैलोक्यशरीरस्य प्रजा।
पतेर्जन्मादि निर्दिश्यमानमुपलभामहे॥ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत्॥ इ

समिद्रूपः सूर्यः सोपि द्युलोकाग्निस्तस्माज्जायत इत्यर्थः तस्मादित्यस्यैव समिदिति श्रुत्यंतरात्॥ अतो मध्येपि सृष्टिरेव वाच्या न रूपमिति भा।
वः यदुक्तमग्निर्मूर्द्धेत्यत्र भूतयोनेः सर्वात्मत्वं विवक्षितमिति तन्नेत्याह॥ सर्वात्मत्वमपीति॥ ननु हिरण्यगर्भस्य जन्मान्यत्रानुक्तं॥ ९॥

कथमत्र वक्तव्यं तत्राह॥ श्रुतीति॥ अग्रे समवर्तत जातः सन् भूतग्रामस्यैकः पतिरीश्वरप्रसादादभवत्स सूत्रात्मा द्यामिमां पृथिवीं च। स्थूलं सर्वमधारयत् कशब्दस्य प्रजापतिसंज्ञात्वे सर्वनामत्वाभावेन स्मादित्ययोगादेकारलोपेन वै कस्मै देवाय प्राणात्मने हविषा। विधेम परिचरेमेति व्याख्येयं॥ कतम एको देव इति प्राण इति श्रुतेः यद्वा यस्मादयं जातस्तस्मात्कस्मै देवायेत्यर्थः एको देवः सर्व भूतेषु गूढ इति श्रुत्यंतरात्॥ ननु तस्य भूतांतरात्मत्वं कथं तत्राह विकारेति॥ पूर्वकल्पे प्रकृष्टोपासनकर्मसमुच्चयानुष्ठानादस्मिन्कल्पे सर्वप्राणिव्यष्टिलिंगानां व्यापकं सर्वप्राण्यंतर्गतं ज्ञानकर्मेंद्रियप्राणात्मकं समष्टिलिंगशरीरं जायते तद्रूपस्य सूत्रात्मनः सर्वभूतां

सदाधारपृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम॥ समवर्ततेत्यजायतेत्यर्थः॥ तथा सर्वे शरीरी प्रथमः स वै पुरुष उच्यते॥ आदिकर्ता स भूतानां ब्रह्माग्रे समवर्ततेति च॥ विकारपुरुषस्यापि सर्वभूतांतरात्मत्वं संभवति॥ प्राणात्मना सर्वभूतानामध्यात्ममवस्थानात्॥ अस्मिन्पक्षे पुरुष एवेदं विश्वं कर्मेत्यादि सर्वरूपोपन्यासः परमेश्वरप्रतिपत्तिहेतुरिति व्याख्येयं॥२३॥ ६॥ वैश्वानरः साधारणशब्दविशेषात्॥२४॥ को न आत्मा किं ब्रह्मेति आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहीति चोपक्रम्य द्युसूर्यवाय्वाकाशवारिपृथिवीनां सुतेजस्त्वादिगुणयोगमेकैकोपासननिंदया च मूर्द्धादिभावमुपदिश्याम्नातरात्मत्वं युक्तमित्यर्थः॥ स्वपक्षे सूत्रार्थमाह॥ अस्मिन् पक्ष इति॥ कर्म सफलं सर्वं श्रौतस्मार्तादिकं तपश्च पुरु॰(यते॥ ष एवेति सर्वांतरत्वरूपोपन्यासाच्च भूतयोनौ ज्ञेये वाक्यं समन्वितमित्यर्थः॥२३॥ वैश्वानरः छांदोग्यमुदाहरति॥ को न इति॥ प्राचीनशालसत्ययज्ञेंद्रद्युम्नजनवुडिला मिलित्वा मीमांसां चक्रुः॥ को न आत्मा किं ब्रह्मेति आत्मैव ब्रह्मेति ज्ञापनार्थं पदद्वयं ते। पंचापि निश्चयार्थमुद्दालकमाजग्मुः सोऽपि सम्यक् न वेदेति तेनोद्दालकेन सह षडप्यश्वपतिं कैकेयं राजानमागत्योचुः॥ ६॥

आत्मानमिति॥ अध्येषि स्मरसि तमेव नो ब्रूहीति राज्ञा तु तेषां भ्रान्तिनिरासार्थं तान्प्रत्येकमपृच्छत् कं त्वमात्मानमुपास्से इति कं
त्वमात्मानमुपास्स इति॥ ते च प्राचीनशालादयः क्रमेण प्रत्येकमूचुर्दिवमेवाहं वैश्वानरं वेद्मि आदित्यमेवाहं वेद्मि वायुमेव आ
काशमेव अप एव पृथिवीमेवाहं वेद्मीति॥ ततो राजा द्युसूर्यादीनां षण्णां यथाक्रमेण सुतेजस्त्व विश्वरूपत्व पृथग्वर्त्मात्मत्व ब-
हुलत्व रयित्व प्रतिष्ठात्वगुणान्विधाय भवंतो यदिमामपृष्ट्वा द्युसूर्यादिषु भगवतो वैश्वानरस्यांगेष्वेव प्रत्येकं वैश्वानरत्वदृष्टयो भवे

यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वा।
त्मस्वन्नमत्ति तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा।
त्मा संदेहो बहुलो वस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोन्वा
हार्यपचन आस्यमाहवनीय इत्यादि तत्र संशयः किं वैश्वानरशब्देन जाठरोग्निरुपदिश्यते उत भू
ताग्निरथ तदभिमानिनी देवता॥ अथवा शारीर आहोस्वित्परमेश्वर इति॥ किं पुनरत्र संशय।
कारणं॥ वैश्वानर इति जाठरभूताग्निदेवतानां साधारणशब्दप्रयोगादात्मेति च शारीरपरमेश्वर
योस्तत्र कस्योपादानं न्याय्यं कस्य वा हानमिति भवति संशयः॥ २२ द्युसूर्यादिक्रमेण मूर्द्धपातांधत्वप्राणोत्क्रमणदेह

विशीर्णत्व वस्तिभेद पादशोषाभवनान्स्युरिति प्रत्येकोपासनं निंदित्वा सुतेजस्त्वगुणको द्युलोकोस्यात्मनो वैश्वानरस्य मूर्द्धा विश्व
रूपत्वगुणकः सूर्यः स चक्षुरित्येवं द्युसूर्यादीनां मूर्द्धादिभावमुपदिश्य समस्तवैश्वानरध्यानविधिराम्नायते॥ यस्त्वेतमिति॥ आभिमु-
ख्येनापरोक्षतया विश्वं मिमीते जानातीत्यभिविमानस्तं सर्वज्ञं स तदुपासकः सर्वत्र भोगं भुंक्त इत्यर्थः लोका भूरादयो भूतानि शरीराण्या
त्मानो जीवा इति भेदः सुष्ठु तेजः कांतिर्यस्य द्युलोकस्य स सुतेजाः विश्वानि रूपाणि अस्य सूर्यस्य स एष शुक्लरूप एष नील इति श्रुतेः पृथक् नानावि

गमनंआत्मास्वभावोयस्यवायोः सतानागतित्वगुणकोस्यप्राणः बहुलत्वंव्यापित्वंतद्गुणआकाशोस्यसंदेहोदेहमध्यंरयित्वंधन।
त्वंतद्गुणाआपोयस्यवस्तिर्मूत्रस्थानंप्रतिष्ठात्वगुणापृथिवीतस्यपादौतस्यहोमाधारत्वंसंपादयति॥उरस्वेत्यादिना॥पूर्वमुपक्र
मस्थाः दृश्यत्वादिसाधारणधर्मस्यवाक्यशेषस्थसर्वज्ञत्वादिलिंगेनब्रह्मनिष्ठत्वमुक्तंतद्वत्राप्युपक्रमस्थसाधारणवैश्वानरश
ब्दस्यवाक्यशेषस्थहोमाधारत्वलिंगेनजाठरनिष्ठत्वमितिदृष्टांतेनपूर्वपक्षयति॥ किंतावदित्यादिना॥ पूर्वोत्तरपक्षयोर्जाठरब्र

किंतावत्प्राप्तंजाठरोग्निरिति॥ कुतस्तत्रहिविशेषेणक्वचित्प्रयोगोदृश्यते॥अयमग्निर्वैश्वानरोयोयमंतः
पुरुषेयेनेदमन्नंपच्यतेयदिदमद्यतइत्यादौ॥अग्निमात्रंवास्यात् सामान्येनापिप्रयोगदर्शनात्॥विश्वस्मा अ
ग्निंभुवनायदेवावैश्वानरंकेतुमन्हामकृण्वन्नित्यादौ॥अग्निशरीरावादेवतास्यात्॥तस्यामपिप्रयोगदर्श
नात्॥वैश्वानरस्यसुमतौस्यामराजाहिकंभुवनानामभिश्रीरित्येवमाद्यायाःश्रुतेर्देवतायामैश्वर्याद्युपेतायां
संभवात्॥अथात्मशब्दसामानाधिकरण्यात्॥उपक्रमेचकोनआत्माकिंब्रह्मेतिकेवलात्मशब्दप्रयोगात्॥
आत्मशब्दवशेनचवैश्वानरशब्दः परिणेयइत्युच्यते॥तथापिशारीरआत्मास्यात्तस्यभोक्तृत्वेनवैश्वानरस
न्निकर्षात्प्रादेशमात्रमितिचविशेषणस्यतस्मिन्नुपाधिपरिच्छिन्नेसंभवात्॥तस्मान्नेश्वरोवैश्वानरइत्येवंप्रा

ह्मणोर्ध्यानंफलं॥ यदग्नेतेनदन्नंयेनपच्यतेसोयंपुरुषशरीरेंतरस्तीत्यर्थः पक्षांतरमाह॥ अग्निमात्रंवेति॥विश्वस्मैभुवनाय।
वैश्वानरमग्निमन्हांकेतुंचिन्हं सूर्यंदेवाअकृण्वन् कृतवंतः सूर्योदयेदिनव्यवहारादित्यर्थः स्याद्वैश्वानरइत्यनुषंगः हियस्मा
त्कंसुखंमदोभुवनानांराजावैश्वानरोऽभिमुखाश्रीरसोत्यभिश्रीरीश्वरः तस्मात्तस्यवैश्वानरस्यसुमतौवयंस्यामतस्यास्मद्विषया
शुभमतिर्भवत्वित्यर्थः पक्षत्रयेप्यरुचिंवदन्कल्पांतरमाह॥अथेत्यादिना॥आत्मावैश्वानरइतिश्रुतेरित्यर्थः॥केवलत्वंवैश्वानरशब्दस्य

अत्र जाठरो वैश्वानर इति मुख्यः पूर्वपक्षः प्राणाग्निहोत्रहोमाधारत्वलिंगात्॥ तस्य देहव्यापित्वादात्मत्वं श्रुत्याद्युमूर्द्धत्वादिकल्पनया बृहत्वाद्ब्रह्मत्वमिति ध्येयं॥ सिद्धांतयति॥ ननइदमिति॥ साधारणश्रुत्योरुपक्रमस्थयोर्विशेषात्॥ प्रथमश्रुतमुख्यत्रैलोक्य शरीरलिंगात्सर्वात्मकेश्वरपरत्वं युक्तं न चरमश्रुतकल्पितहोमाधारत्वलिंगेन जाठरत्वमित्यर्थः ननु निर्विशेषस्य कुतो विशे

ततइदमुच्यते॥ वैश्वानरः परमात्मा भवितुमर्हतीति॥ कुतः साधारणशब्दविशेषात्साधारणशब्दयो र्विशेषः साधारणशब्दविशेषो यद्यप्येतावुभावप्यात्मवैश्वानरशब्दौ साधारणशब्दौ वैश्वानरशब्दस्तु त्रयस्य साधारण आत्मशब्दश्च द्वयस्य तथापि विशेषो दृश्यते॥ येन परमेश्वरत्वं तयोरभ्युपगम्यते॥ तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजा इत्यादिः अत्र हि परमेश्वर एव द्युमूर्द्धत्वादिविशिष्टोवस्थान्तरगतः प्रत्यगात्मत्वेनोपन्यस्त आध्यानायेति गम्यते॥ कारणत्वात्॥ कारणस्य हि सर्वाभिः कार्यगताभिरवस्थावत्वाद्युलोकाद्यवयवत्वमुपपद्यते॥ स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्तीति च सर्वलोकाद्याश्रयं फलं श्रूयमाणं परमकारणपरिग्रहे संभवति॥ एवं हास्य सर्वे पाप्मानः प्रदूयंत इति च तद्विदः सर्वपापप्रदाहश्रवणं॥ को न आत्मा किं ब्रह्मेति चात्मब्रह्मशब्दाभ्यामुपक्रम इत्येवमेतानि लिंगानि परमेश्वरमेवावगमयंति॥ तस्मात्परमेश्वर एव वैश्वानरः॥ २४॥ स्मर्यमाणमनुमानं स्यादिति॥ २५॥ इतश्च परमेश्वर एव वैश्वानरो यस्मात्परमेश्वरस्यैवाग्निरास्यं द्यौर्मूर्द्धेतीदृशं त्रैलोक्यात्मकं रूपं स्मर्यते॥

षड्न्यत आह॥ अत्र हीति अवस्थान्तरगतः त्रैलोक्यात्मनास्थित इत्यर्थः जाठरस्यापि ध्यानार्थं विशेषकल्पनेति चेन्न असत्कल्पनापत्तेः ईश्वरस्य तूपादानत्वाद्विशेषः सन्नेव ध्यानार्थं उच्यतामित्याह॥ कारणत्वादिति लिंगांतराण्याह॥ स सर्वेष्वित्यादिना यथाग्नौ निक्षिप्तमिषीकातूलं दह्यते एवं हास्य विदुष इत्यर्थः॥ २४॥

॥ नन्वसदारोपेणापि स्तुतिसंभवान्न मूलश्रुत्यपेक्षेत्याशंक्याह ॥ यद्यपि स्तुतिरिति नयापीतिपदस्यार्थतः पठति ॥ स्तुतित्वमपीति द्युमूर्द्धत्वादिरूपेण स्तुतिर्नरमात्रेण कर्तुमशक्या विनाश्रुतिमित्यर्थः सत्तारूपेण स्तुतिसंभवान्नासदारोप इति भावः ॥ २५ ॥



यस्याग्निरास्यं द्यौर्मूर्द्धा खं नाभिश्चरणौ क्षितिः ॥ सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नम इति ॥ एतत्स्मर्यमाणरूपं मूलभूतां श्रुतिमनुमापयत् ॥ अस्य वैश्वानरशब्दस्य परमेश्वरपरत्वे नु मानं लिंगं गमकं स्यादित्यर्थः ॥ इति शब्दो हेत्वर्थे यस्मादिदं गमकं लिंगं तस्मादपि वैश्वानरः परमात्मैवेत्यर्थः ॥ यद्यपि स्तुतिरियं तस्मै लोकात्मने नम इति स्तुतित्वमपि नासति मूलभूते वेदवाक्ये सम्यक् ईदृशेन रूपेण संभवति द्यां मूर्द्धानं यस्य विप्रा वदंति खं वै नाभिं चंद्रसूर्यौ च नेत्रे ॥ दिशः श्रोत्रे विद्धि पादौ क्षितिं च सोऽचिंत्यात्मा सर्वभूतप्रणेतेत्येवंजातीयका च स्मृतिरिहोदाहर्तव्या ॥ २५ ॥ शब्दादिभ्योंतः प्रतिष्ठानाच्चनेति चेन्न तथा दृष्ट्युपदेशादसंभवात्पुरुषमपि चैनमधीयते ॥ २६ ॥ अत्राह न परमेश्वरो वैश्वानरो भवितुमर्हति ॥ कुतः शब्दादिभ्योंतः प्रतिष्ठानाच्च ॥ शब्दस्तावद्वैश्वानरशब्दो न परमेश्वरे संभवति ॥ अर्थांतरे रूढत्वात् ॥ तथाग्निशब्दः ॥ स एषोग्निर्वैश्वानर इत्यादिशब्दात् हृदयं गार्हपत्य इत्याद्यग्नित्रेताप्रकल्पनं ॥ तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयमित्यादिना च प्राणाहुत्यधिकरणतः संकीर्तनमेतेभ्यो हेतुभ्यो जाठरो वैश्वानरः प्रत्येतव्यः ॥



शब्दादीनां गतिं वक्तुं उक्तसिद्धांतमाक्षिप्य समाधत्ते ॥ शब्दादिभ्य इति ॥ स एषोग्निर्वैश्वानर इत्यग्निरहस्ये वैश्वानरविद्यायां श्रुतोग्निशब्दः ईश्वरे न संभवतीत्यन्वयः सूत्रस्यादिशब्दार्थमाह ॥ आदिशब्दादिति ॥ भक्तमन्नं होमीयं होमसाधनं तेन प्राणाग्निहोत्रं कार्यमित्यर्थः ॥ वाजसनेयिनामग्निरहस्ये सप्रपंचा वैश्वानरविद्या मुक्ता स यो हैतमग्निं वैश्वानरं पुरुष ॥

विधंपुरुषेंतःप्रतिष्ठितंवेदसर्वत्राचमतीत्युक्तंदेहांतःस्थत्वंजाठरेसंभवतीतिप्रसिद्धेरित्याह॥ तथेति॥ अत्रसूत्रेआदिपदे।
नैवांतःप्रतिष्ठानस्यग्रहेसंभवतिपृथग्युक्तिःसाधारणलिंगत्वद्योतनार्थाशब्दादिबलादिदमपिजाठरंगमयतीत्यभ्युच्चयःसाध
पिद्युमूर्द्धत्वादिविशेषईश्वरपक्षपातीहोमाधारत्वादिर्जाठरपक्षपातीतिभानंसमंतथापिपारमेश्वरोविशेषोजाठरेनसंभवती

तथांतःप्रतिष्ठानमपिश्रूयतेपुरुषेंतःप्रतिष्ठितंवेदेतितच्चजाठरेसंभवति॥ यदप्युक्तंमूर्द्धैवसुतेजाइ
त्यादेर्विशेषात्कारणात्परमात्मावैश्वानरइत्यत्रब्रूमः॥ कुतोह्येषनिर्णयोयदुभयथापिविशेषप्रतिभानेसति
परमेश्वरविषयएवविशेषआश्रयणीयोनजाठरविषयइति॥ अथवाभूतान्तरंतर्वहिश्चावतिष्ठमानस्यै
षनिर्देशोभविष्यति तस्यापिहिभूर्लोकादिसंबंधोमंत्रवर्णादवगम्यते॥ योभानुनापृथिवींद्यामुते।
मामाततानरोदसीअंतरिक्षमित्यादौ॥ अथवातच्छरीरायादेवतायाऐश्वर्ययोगात्द्युलोकाद्यवयव।
त्वंभविष्यति॥ तस्माच्चपरमेश्वरोवैश्वानरइत्यत्रोच्यते॥ तथादृष्ट्युपदेशादिति॥ नशब्दादिभ्यःकारणे
भ्यःपरमेश्वरस्यप्रत्याख्यानंयुक्तंकुतस्तथाजाठरापरित्यागेनदृष्ट्युपदेशात्परमेश्वरदृष्टिर्हिजाठरेवैश्वान
रेइहोपदिश्यते॥ मनोब्रह्मेत्युपासीतेत्यादिवत्॥ अथवाजाठरवैश्वानरोपाधिःपरमेश्वरइहद्रष्टव्य।
त्वेनोपदिश्यतेमनोमयःप्राणशरीरोभारूपइत्यादिवत्॥ तिबलवानित्यतआह॥ अथवेति॥ एषद्युमूर्द्धत्वादि
निर्देशइत्यर्थः॥ इमांपृथिवींद्यामपितेएवद्यावापृथिव्यौरोदसीतयोर्मध्यमंतरिक्षंचयोभूतान्तिर्भानुरूपेणाततानव्याप्तवान्स
ध्यातव्यइत्यर्थःजडमात्रस्यतध्येयत्वमित्यतआह॥ अथवेति॥ सिद्धांतयति॥ तथादृष्ट्युपदेशादितीति॥ परमेश्वरदृष्ट्योपा
स्यजाठराग्निप्रतीकवाचकाभ्यांअग्निवैश्वानरशब्दाभ्यांद्युमूर्द्धत्वादिमानीश्वरोलक्ष्यइत्युक्त्वाकल्पांतरमाह॥ अथवाजाठरे

शा·भा·
र·प्र·टी·
९०

अस्मिन्पक्षे प्राधान्येनेश्वरोपास्यता पूर्वत्र गुणतयेति भेदः। उपाधिद्वाभ्यां पदाभ्यामुपहितो लक्ष्यत इत्यर्थः। लक्षणाबीजमसंभ- वं व्याचष्टे॥ यदि चेति॥ पुरुषमपीत्यादि सूत्रशेषं व्याचष्टे॥ यदि च केवल इति॥ ईश्वरप्रतीकत्वोपाधित्वशून्य इत्यर्थो विवक्ष्येत तदेति शेषः। यत्तु यः पुरुषः पूर्णः स एषोऽग्निर्वैश्वानरशब्दितजाठरोपाधिक इति श्रुत्यर्थः। यो वेद स सर्वत्र भुंक्त इत्यर्थः॥ पुरुष

अ·१पा·२

यदि चेह परमेश्वरो न विवक्ष्येत केवल एव जाठरोऽग्निर्विवक्ष्येत॥ ततो मूर्द्धैव सुतेजा इत्यादेर्विशेषस्यासंभव एव स्यात्॥ यथा तु देवताभूताग्निव्यपाश्रयेणाप्ययं विशेष उपपादयितुं न शक्यते तथोत्तरसूत्रे वक्ष्यामः॥ यदि च केवल एव जाठरो विवक्ष्येत पुरुषेंतः प्रतिष्ठितत्वं केवलं तस्य स्यान्न तु पुरुषत्वं॥ पुरुषमपि चैनमधीयते वाजसनेयिनः स एषोऽग्निर्वैश्वानरो यत्पुरुषः स यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेंतः प्रतिष्ठितं वेदेति॥ परमेश्वरस्य तु सर्वात्मत्वात्पुरुषत्वं पुरुषेंतः प्रतिष्ठितत्वं चोभयमप्युपपद्यते॥ ये तु पुरुषविधमपि चैनमधीयत इति सूत्रावयवं पठंति तेषामेषोऽर्थः केवलजाठरपरिग्रहे पुरुषेंतः प्रतिष्ठितत्वं केवलं स्यात् न पुरुषविधत्वं पुरुषविधमपि चैनमधीयते वाजसनेयिनः॥ पुरुषविधं पुरुषेंतः प्रतिष्ठितं वेदेति पुरुषविधत्वं च प्रकरणात् यदधिदैवतं द्युमूर्द्धत्वादि पृथिवीप्रतिष्ठितत्वांतं यच्चाध्यात्मं प्रसिद्धं मूर्द्धत्वादि चुबुकप्रतिष्ठितत्वांतं तत्परिगृह्यते॥ २६॥ अत एव न देवता भूतं च॥ २७॥ त्वं पूर्णत्वं अचे-

राम·
९०

तनस्य जाठरस्य नेत्युक्त्वा पाठांतरे पुरुषविधत्वं देहाकारत्वं तस्य नेत्याह॥ ये त्विति॥ ननु जाठरस्यापि देहव्यापित्वात्तद्विधत्वं स्यादित्यत आह॥ पुरुषविधत्वं च प्रकरणादिति॥ न देहव्यापित्वं पुरुषविधत्वं किंतु विराड्देहाकारत्वमधिदैवं पुरुषविधत्वमध्यात्मं चोपासकमूर्द्धादिचुबुकांतेष्वंगेषु संपन्नत्वमीश्वरस्य पुरुषविधत्वमित्यर्थः॥ २६॥ ईश्वरस्यांगेषु संपत्तिं वक्ष्यत एवं जाठरं निरस्य पक्षद्वयं निरस्यति॥ अत ए

सूत्रं व्याचष्टे यत्पुनरित्यादिना द्युमूर्द्धत्वादिः सर्वलोकफलभाक्त्वं सर्वपाप्मप्रदाहः आत्मब्रह्मशब्दोपक्रमः उक्तहेतवस्तानेव स्मारयति॥ न हि भूताग्नेरित्यादिना यो भानुनेति मंत्रेणेश्वरदृष्ट्या महिमोक्त इति भावः॥२७॥ पूर्वमग्निवैश्वानरशब्दावीश्वरलक्षकावित्युक्तं अधुना प्रतीकोपाधिपरित्यागेन विराट्पुरुषाकारस्य भगवतो वैश्वानरस्याध्यात्मं मूर्द्धादिचुबुकान्तेषु संपाद्योपास्यत्वांगीका

यत्पुनरुक्तं भूताग्नेरपि मंत्रवर्णे द्युलोकादिसंबंधदर्शनान्मूर्द्धैव सुतेजा इत्याद्यवयवकल्पनं तस्यैव भविष्यतीति॥ तच्छरीराया देवताया वा ऐश्वर्ययोगादिति तत्परिहर्तव्यमत्रोच्यते अत एवोक्तेभ्यो हेतुभ्यो न देवता वैश्वानरस्तथा भूताग्निरपि न वैश्वानरो न हि भूताग्नेरौष्ण्यप्रकाशमात्रात्मकस्य द्युमूर्द्धत्वादिकल्पनोपपद्यते विकारस्य विकारान्तरात्मत्वासंभवात् तथा देवतायाः सत्यप्यैश्वर्ययोगे न द्युमूर्द्धत्वादिकल्पना संभवत्यकारणत्वात् परमेश्वराधीनैश्वर्यत्वाच्च आत्मशब्दासंभवश्च सर्वेष्वेषु पक्षेषु स्थित एव॥२७॥ साक्षादप्यविरोधं जैमिनिः॥२८॥ पूर्वं जाठराग्निप्रतीको जाठराग्न्युपाधिको वा परमेश्वर उपास्य इत्युक्तमन्तःप्रतिष्ठितत्वाद्यनुरोधेन इदानीं तु विनैव प्रतीकोपाधिकल्पनाभ्यां साक्षादपि परमेश्वरोपासनपरिग्रहे न कश्चिद्विरोध इति जैमिनिराचार्यो मन्यते॥ ननु जाठराग्न्यपरिग्रहेऽन्तःप्रतिष्ठितत्ववचनं शब्दादीनि च कारणानि विरुध्येरन्निति॥ अत्रोच्यते अन्तःप्रतिष्ठितत्ववचनं तावन्न विरुध्यते॥

१९ रेपि न शब्दादिविरोधः॥ शब्दयोरीश्वरे योगवृत्त्या मुख्यत्वाद्दंतस्थत्वादीनां च तत्र संभवादित्याह॥ साक्षादपीति॥ साक्षात्पदस्यार्थमाह॥ विनैवेति॥ जाठराग्निसंबंधं विनेश्वरस्योपास्यत्वेपि शब्दाद्यविरोधं जैमिनिर्मन्यत इत्यर्थः इदमंतस्थत्वमुदरस्थत्वरूपं नोच्यते किंतु नखादिशिखान्तावयवसमुदायात्मकपुरुषशरीरे मूर्द्धादिचुबुकान्तांगानि वृक्षे शाखावत्प्रतिष्ठितानि तेषु संपन्नो वैश्वानरः पुरुषेन्तःप्रतिष्ठित इत्युच्यते॥ १ ॥

शा॰भा॰ रत्न॰टी॰ ९१ | अ॰१पा॰

अतो यथा शाखास्थस्य पक्षिणो वृक्षांतःस्थत्वं तथा वैश्वानरस्य पुरुषांतःस्थत्वमित्याह ॥ न हीह पुरुषविधमित्यादिना ॥ अग्न्यादि
शब्दस्येश्वरवाचित्वाज्जाठराग्नेः संशब्दितत्वं अत्रेश्वरस्य पुरुषावयवेषु संपादनात्पुरुषविधत्वं चेत्यर्थः पक्षांतरमाह ॥ अथ वेति
पुरुषविधं पूर्ववत् अंतःस्थत्वं माध्यस्थ्यं साक्षित्वमित्यर्थः ॥ एवं संतःस्थत्वमीश्वरे व्याख्याय शब्दादीनि व्याचष्टे ॥ निश्चिते चेति ॥ वि
श्वश्चायं नरो जीवश्च सर्वात्मत्वात् ॥ विश्वेषां विकाराणां वा नरः कर्ता विश्वे सर्वे नरा जीवा अस्यात्मत्वेन नियम्यत्वेन वा संतीति विश्वा ॥

न हीह पुरुषविधं पुरुषेंतः प्रतिष्ठितं वेदेति जाठराग्न्यभिप्रायेणेदमुच्यते ॥ तस्याप्रकृतत्वादसंशब्दित
त्वाच्च ॥ कथं तर्हि यत्प्रकृतं मूर्धादिचुबुकांतेषु पुरुषावयवेषु पुरुषविधत्वं कल्पितं तदभिप्रायेणेदमुच्यते पुरु
षविधं पुरुषेंतः प्रतिष्ठितं वेदेति ॥ यथा वृक्षे शाखां प्रतिष्ठितां पश्यतीति तद्वत् ॥ अथवा यः प्रकृतः पर
मात्माऽध्यात्ममधिदैवतं च पुरुषविधत्वोपाधिस्तस्य यत्केवलं साक्षिरूपं तदभिप्रायेणेदमुच्यते पुरुषेंतः
प्रतिष्ठितं वेदेति ॥ निश्चिते च पूर्वापरालोचनवशेन परमात्मपरिग्रहे तद्विषय एव वैश्वानरशब्दः केनचि
द्योगेन वर्तिष्यते विश्वश्चायं नरश्चेति ॥ विश्वेषां वायं नरो विश्वे वा नरा अस्येति विश्वानरः परमात्मा स
र्वात्मत्वाद्विश्वानर एव वैश्वानरस्तद्धितोऽनन्यार्थो राक्षसवायसादिवदग्निशब्दोऽप्यग्रणीत्वादियोगाश्रय
णेन परमात्मविषय एव भविष्यति ॥ गार्हपत्यादिकल्पनं प्राणाहुत्यधिकरणत्वं च परमात्मनोऽपि सर्वा
त्मत्वादुपपद्यते ॥ २८ ॥

नरः रक्ष एव राक्षसः इतिवत् स्वार्थे तद्धितप्रत्ययः नरे संज्ञायामिति पूर्वपदस्य दीर्घः ॥ अगि धातोर्गत्यर्थ
स्य निप्रत्ययांतस्य रूपमग्निरिति अगयति गमयत्यग्रे कर्मफलं प्रापयतीति अग्निरग्रणीरुक्तः अभितो गत इति वाग्निः वैश्वानरोपा
सकस्यातिथिभोजनात्पूर्वं प्राणाग्निहोत्रं विद्यांगत्वेन विहितं तदर्थमग्नित्रेतादिकल्पनं प्रधानाविरोधेन नेतव्यमित्याह ॥ गार्हपत्येति ॥

मात्रां परिमाणं मतिक्रान्तो ऽतिमात्रस्तस्य विभोरित्यर्थः ॥ उपासकानां कृतेनुग्रहाय प्रादेशमात्रो ऽभिव्यज्यते प्रदेशेषु वा मीयते ऽ-
भिव्यज्यत इति प्रादेशमात्रः ॥ २९ ॥ मतान्तरमाह ॥ अनुस्मृतेरिति ॥ प्रादेशेन मनसा मितः प्रादेशमात्र इत्यर्थः ॥ यथा कथंचिदिति ॥

कथं पुनः परमेश्वरपरिग्रहे प्रादेशमात्रश्रुतिरुपपद्यत इति तां व्याख्यातुमारभते ॥ अभिव्यक्तेरित्याश्मरथ्यः ॥
२९ ॥ अतिमात्रस्यापि परमेश्वरस्य प्रादेशमात्रत्वमभिव्यक्तिनिमित्तं स्यात् । अभिव्यज्यते किल प्रादेशमात्रपरिमा-
णः परमेश्वर उपासकानां कृते ॥ प्रदेशेषु वा हृदयादिषूपलब्धिस्थानेषु विशेषेणाभिव्यज्यते ॥ अतः परमेश्वरेऽपि
प्रादेशमात्रश्रुतिरभिव्यक्तेरुपपद्यत इत्याश्मरथ्य आचार्यो मन्यते ॥ २९ ॥ अनुस्मृतेर्बादरिः ॥ ३० ॥ प्रादेशमात्रहृदयप्रति-
ष्ठेन वायं मनसानुस्मर्यते तेन प्रादेशमात्र इत्युच्यते यथा प्रस्थमिता यवाः प्रस्था इत्युच्यन्ते तद्वत् ॥ यद्यपि च यवेषु स्व-
गतमेव परिमाणं प्रस्थसंबन्धाद्व्यज्यते न चेह परमेश्वरगतं किंचित्परिमाणमस्ति यद्धृदयसंबन्धाद्व्यज्येत ॥ तथापि
प्रयुक्तायाः प्रादेशमात्रश्रुतेः संभवति यथा कथंचिदनुस्मरणमालम्बनमित्युच्यते ॥ प्रादेशमात्रत्वेन वायमप्रादे-
शमात्रोऽप्यनुस्मरणीयः प्रादेशमात्रश्रुत्यर्थवत्त्वाय एवमनुस्मृतिनिमित्ता परमेश्वरे प्रादेशमात्रश्रुतिरिति बादरिरा-
चार्यो मन्यते ॥ ३० ॥ संपत्तेरिति जैमिनिस्तथा हि दर्शयति ॥ ३१ ॥ संपत्तिनिमित्ता वा स्यात्प्रादेशमात्रश्रुतिः ॥
कुतः तथा हि समानप्रकरणं वाजसनेयिब्राह्मणं द्युप्रभृतीन्पृथिवीपर्यन्तान् त्रैलोक्यात्मनो वैश्वानरस्या-
वयवानध्यात्मं मूर्धप्रभृतिषु चुबुकपर्यन्तेषु देहावयवेषु संपादयत्प्रादेशमात्रसंपत्तिं परमेश्वरस्य दर्शयति ॥

मनःस्थं प्रादेशमात्रत्वं स्मृतिद्वारा स्मर्यमाणे कल्पितं श्रुतेरालम्बनमित्यर्थः सूत्रस्यार्थान्तरमाह ॥ प्रादेशेति ॥ ३० ॥ संपत्तिश्रुत्युक्तां
प्रादेशमात्रश्रुतेर्गतिमाह ॥ संपत्तेरिति ॥ ॥

ब्राह्मणं पठति प्रादेशमात्रमिवेति॥ अपरिच्छिन्नमपीश्वरं प्रादेशमात्रत्वेन संपन्या कश्चिन्नसम्यग्विदितवंतो देवास्तमेवेश्वरम
भिप्रन्यत्वेन संपन्नाः प्राप्तवंतो ह वै पूर्वकालेन तनो वो युष्मभ्यं तथा द्युप्रभृतीनवयवानवस्यामि यथा प्रादेशमात्रं प्रादेशपरिमा
णमनतिक्रम्य मूर्द्धाद्यध्यात्मं मेयु वैश्वानरं संपादयिष्यामीति प्राचीनशालादीन् प्रति राजा प्रतिज्ञाय स्वकीयमूर्द्धानमुपदिश
न्करेण दर्शयन्नुवाच एष वै मे मूर्द्धा भूरादीन् लोकानतीत्य उपरि तिष्ठतीत्यतिष्ठा सौ द्युलोको वैश्वानरस्तस्य मूर्द्धेति यावत् अ
ध्यात्ममूर्द्धाभेदेनाधिदैवमूर्द्धा संपाद्य ध्येय इत्यर्थः एवं चक्षुरादिषूह्नीयं स्वकीयचक्षुषी दर्शयन् एष वै सुतेजाः सूर्यो वैश्वा

प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसंपन्नास्तथा तु व एतान्वक्ष्यामि यथा प्रादेशमात्रमे (न्मा॰)
वाभिसंपादयिष्यामीति स होवाच मूर्द्धानमुपदिशन्नुवाचैष वा अतिष्ठा वैश्वानर इति चक्षुषी उप
दिशन्नुवाचैष वै सुतेजा वैश्वानर इति नासिके उपदिशन्नुवाचैष वै पृथक्वर्त्मा वैश्वानर इति
मुख्यमाकाशमुपदिशन्नुवाचैष वै बहुलो वैश्वानर इति मुख्या अप उपदिशन्नुवाचैष वै रयिर्वैश्वा
नर इति चुबुकमुपदिशन्नुवाचैष प्रतिष्ठा वैश्वानर इति चुबुकमित्यधरं मुखफलकमुच्यते॥ ९॥

नरस्य चक्षुरित्युवाच नासिकापदेन तच्छिद्रः प्राणो लक्ष्यते॥ तस्मिन्नाध्यात्मिकप्राणेऽधिदैवप्राणस्य वायोर्दृष्टिमाह॥ नासिके इ
ति॥ अत्र सर्वत्र वैश्वानरशब्दस्तदंगपरः मुखस्थं मुख्यं तस्मिन्नधिदैवं बहुलाकाशदृष्टिः मुखस्थलालरूपास्वप्सु रयिशब्दि
तनदीयवस्तिस्योदकदृष्टिः चुबुके प्रतिष्ठापादरूपा पृथिवी द्रष्टव्या॥ ननु गुणवैषम्येण विद्ययोर्भेदात् अग्निरहस्ये श्रुत्यनु
सारेण छांदोग्यस्य प्रादेशमात्रश्रुतिः कथं व्याख्येयेत्याशंक्याह॥

इतिशारीरकसूत्रभाष्येरत्नप्रभायांप्रथमाध्यायस्यद्वितीयपादः स० ॥

अथ ५/० 

॥ ॐ तत्सत् ॥

शा·भा· टी· र·प्र· ४४

श्रीगणेशायनमः॥श्रीसरस्वत्यैनमः॥ ॐम्॥द्युभ्वोनभूमपरमक्षरमीक्षणीयंश्रीराममस्पृहदिभांतमधीशितारं॥ इंद्रादिवेद्यमखिलस्यचशासितारंज्योतिर्निभःपदमनिंद्यमजंभजेहं ॥ १॥ एवंरूढिपदबहुलानांप्रायेणसविशेषवाक्यानांसमन्वयोद्वितीयपादेदर्शितः अधुनायौगिकपदबहुलानांनिर्विशेषप्रधानानांवाक्यानांसमन्वयंवक्तुंतृतीयपादआरभ्यते॥ अतोत्राधिकरणानांश्रुत्यध्यायपादसंगतयस्तत्रपूर्वत्रुपक्रमस्थसाधारणशब्दस्यवाक्यशेषस्थमूर्द्धत्वादिनाब्रह्मपरत्वमुक्तंतद्वदत्राप्युपक्रमस्थसाधारणायतनत्वस्यवाक्यशेषस्थसेतुश्रुत्याचस्तुनः परिच्छिन्नेप्रधानादौव्यवस्थेतिदृष्टांतलक्षणाधिकरणसंगतिः॥ पूर्वपक्षेप्रधानाद्युपास्तिः॥ सिद्धांतेनिर्विशेषब्रह्मधीरितिफलं॥मुंडकवाक्यमुदाहरति॥इदमिति॥ यस्मिन्लोकत्रयात्माविराट्प्राणैःसर्वैःसहमनः

अ·पा· १।३

द्युभ्वाद्यायतनंस्वशब्दात्।इदंश्रूयते॥ यस्मिन्द्यौःपृथिवीचांतरिक्षमोतंमनःसहप्राणैश्चसर्वैस्तमेवैकंजानथआत्मानमन्यावाचोविमुंचथाऽमृतस्यैषसेतुरिति॥अत्रयदेतत्द्युप्रभृतीनामोतत्ववचनादायतनंकिंचिदवगम्यते॥ तत्किंपरंब्रह्मस्यादाहोस्विदर्थांतरमितिसंदिह्यते॥ तत्रार्थांतरंकिमप्यायतनंस्यादितिप्राप्तं॥ कस्मात्॥अमृतस्यैषसेतुरितिश्रवणात्॥पारवान्हिलोकेसेतुः नचपरस्यब्रह्मणः

सूत्रात्मकंचकारादव्याकृतंकारणंओतंकल्पितंतदपवादेनतमेवाधिष्ठानात्मानंप्रत्यगभिन्नंजानथश्रवणादिना॥ अन्याअनात्मवाचोविमुंचथविशेषेणनिःशेषंत्यजथएषवाग्विमोकपूर्वकात्मसाक्षात्कारोअमृतस्यमोक्षस्याप्तावपारदुर्वारसंसारवारिधेःपरपारस्यसेतुरिवसेतुःप्रापकइतिमातृवत्श्रुतिर्मुमुक्षूनुपदिशति॥तत्रायतनत्वस्यसाधारणधर्मस्यदर्शनात्संशयमाह ॥ तत्किमिति ॥ अमृतस्यब्रह्मणःसेतुरितिषष्ठ्याब्रह्मणोभिन्नत्वेनसेतोःश्रुतत्वादेषशब्दपरामृष्टंद्युभ्वाद्यायतनमब्रह्मैवसेतुरित्याह॥ अमृतस्येति॥भेदश्रवणात्सेतुरितिश्रवणाच्चेत्यर्थः तत्रभेदश्रवणंव्याख्यातंसेतुश्रवणंस्वयंविवृणोति॥ पारवानिति॥ ६।२।६ ॥

राम· ४४

ननु गुणवैषम्येण विद्ययोर्भेदात् अग्निरहस्ये श्रुत्यनुसारेण छांदोग्यस्यस्थप्रादेशमात्रं श्रुतिः कथं व्याख्येयेत्याशंक्याह यद्यपीत्यादिना ए
तावताऽल्पवैषम्येण बहुतरमन्यभिज्ञासिद्धं विद्यैक्यं न हीयते शाखाभेदेपि सर्वशाखासु प्रतीयमानं वैश्वानराद्युपासनमेकमिति न्याय।
एवं वक्ष्यमाणत्वाच्च अतिष्ठात्वगुणः छांदोग्य उपसंहर्तव्यः विश्वरूपत्वगुणश्च वाजिभिर्ग्राह्यस्तथा चक्षुःसूर्ययोः सुतेजस्त्वं सममिति।

यद्यपि वाजसनेयके द्यौरतिष्ठात्वगुणा समाम्नायते आदित्यश्च सुतेजस्त्वगुणश्छांदोग्ये पुन
र्द्यौः सुतेजस्त्वगुणा समाम्नायते आदित्यश्च विश्वरूपत्वगुणस्तथापि नैतावता विशेषेण
किंचिद्धीयते प्रादेशमात्रश्रुतेरविशेषात्॥ सर्वशाखाप्रत्ययत्वाच्च संपत्तिनिमित्तां प्रादेश
मात्रश्रुतिं युक्ततरां जैमिनिराचार्यो मन्यते॥ ३१॥ आमनंति चैनमस्मिन्॥ ३२॥ आमनंति चै
नं परमेश्वरमस्मिन्मूर्द्धचुबुकांतराले जाबालाः य एषोनंतोव्यक्त आत्मा सोविमुक्ते प्रतिष्ठित इति॥
सोविमुक्तः कस्मिन्प्रतिष्ठित इति वरणायां नास्यां च मध्ये प्रतिष्ठित इति का वै वरणा का च नासीति॥

ष्ठात्वविश्वरूपत्वयोर्व्यवस्था॥ यद्वा शाखाभेदेन गुणव्यवस्थाऽस्तु न विद्याभेद इति भावः॥३१॥ प्रादेशत्वस्य संपत्तिप्रयुक्तत्वे श्रुत्यंतरं सं
वादयति॥ आमनंतीति य एषोनंतोपरिच्छिन्न अतोव्यक्तो दुर्विज्ञेयस्तं कथं जानीयामित्यत्रिप्रश्ने याज्ञवल्क्यस्योत्तरं स ईश्वरो विमुक्ते का
मादिभिर्बद्धजीवे भेदकल्पनया प्रतिष्ठित उपास्यः पुनरत्रिप्रश्नः स इत्युत्तरं वरणायामिति॥ एवं प्रश्नोत्तरे अग्रेपि ज्ञेये॥ तत्र श्रुतौ इमा
मेव भ्रूसहितां नासिकां निरुच्येति भाष्ययोजना॥

शा॰भा॰ र॰प्र॰टी॰ ९३

सर्वानिंद्रियकृतान्दोषान्वारयतीति वरणा भ्रूः सर्वान्दोषान्नाशयतीति नासी नासिकेति निर्वचनं श्रुतं नासा भ्रुवोर्जीवहृदयेन्द्रा अ॰१पा॰२ रस्थानत्वध्यानात्पापवारकत्वमिति मंतव्यं तयोर्मध्येपि विशिष्य जीवस्य स्थानं पृच्छति ॥ कतमदिति ॥ भ्रुवोरित्युत्तरं घ्राणस्येतिपा ठेपि घ्राणस्येत्यर्थः ॥ स एष संधिर्द्युलोकस्य स्वर्गस्य परस्य च ब्रह्मलोकस्य संधित्वेन ध्येय इत्याह ॥ स एष इति ॥ आभिमुख्येन ॥

तत्रचेमामेव नासिकां वरणां नासीति निरुच्य या सर्वाणि इंद्रियकृतानि पापानि वारयतीति सा वरणा सर्वाणींद्रियकृतानि पापानि नाशयतीति सा नासीति पुनराम नंति ॥ कतमच्चास्य स्थानं भवतीति भ्रु वोर्घ्राणस्य च यः संधिः ॥ स एष द्युलोकस्य परस्य च संधिर्भवतीति तस्मादुपपन्ना परमेश्वरे प्रादेशमा त्रश्रुतिः अभिविमानश्रुतिः प्रत्यगात्मत्वाभिप्राया प्रत्यगात्मतया सर्वैः प्राणिभिरभिविमीयत इत्यभिवि मानः अभिगतो वायं प्रत्यगात्मत्वात् विमानश्च मानवियोगादित्यभिविमानोऽभिविमिमीते वा सर्वं जग त् कारणत्वादित्यभिविमानस्तस्मात्परमेश्वरो वैश्वानर इति सिद्धं ॥ इति श्रीमच्छंकरभगवत्पादकृ तौ शारीरकमीमांसाया भाष्ये प्रथमाध्यायस्य द्वितीयः पादः ॥ २ ॥ ७ ॥ १८ ॥ श्रीरामचंद्राय नमः ॥ ॐ ॥



राम॰ ९३

हं ब्रह्मेति विमीयते ज्ञायत इत्यभिविमानः प्रत्यगात्मा अभिगतश्चासौ विमानश्च सर्वस्वरूपत्वेसत्यानंत्यात् ॥ मानमत्र परिमाणं अभिवि मीते निर्मिमीते ॥ तस्माद्वैश्वानरवाक्यमुपास्ये ब्रह्मणि समन्वितमिति सिद्धं ॥ ३२ ॥ इति श्रीमच्छारीरकव्याख्यायां भाष्यरत्नप्रभायां प्रथमा ध्यायस्य द्वितीयः पादः ॥ २ ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ अधिकरणानि ७ समग्रसूत्राणि ३२ भाष्यसंख्या ५२ टी॰ संख्या ५०० एवं समग्रसंख्या

ॐ तत्सत्

अनंतंकालतः अपारंदेशतः जलविधारकमुख्यसेतोग्रहणासंभवात् गौणसेतुग्रहे कर्त्तव्ये मुख्यसेत्वविनाभूतपारवत्वगुणवा नेव कश्चित् ग्राह्यः नतुमुख्यस्यानियतविधारणगुणवानीश्वर इतिभावः॥ यथालोकेमणयः सूत्रेणग्रथिताः एवं हे गौतम समष्टिलिंगा त्मकवायुना स्थूलानि सर्वाणि सदृब्धानि ग्रथितानि भवंतीति श्रुत्यर्थः॥ आत्मशब्दात् पक्षद्वयमप्ययुक्तमित्यतआह॥ शारीरोवेतिसद्वि

पारवत्वं शक्यमभ्युपगंतुमनंतमपारमितिश्रवणात्॥ अर्थांतरेचायतनेपरिगृह्यमाणे स्मृतिप्रसि द्धंप्रधानंपरिगृहीतव्यं॥ तस्यकारणत्वादायतनत्वोपपत्तेः॥ श्रुतिप्रसिद्धोवावायुःस्यात्॥ वायुर्वै गौतम तत्सूत्रं वायुनावै गौतमसूत्रेणायंचलोकः परश्चलोकः सर्वाणिचभूतानिसंदृब्धानिभवंतीति वायो रपिविधारणत्वश्रवणात्॥ शारीरोवास्यात्॥ तस्यापिभोक्तृत्वाद्भोग्यंप्रपंचंप्रत्यायतनत्वोपपत्ते रित्येवंप्राप्तइदमाह॥ द्युभ्वाद्यायतनमिति द्यौश्च भूश्च द्युभुवौ द्युभुवावाद्यौ यस्यतदिदं द्युभ्वादि यदेत स्मिन्वाक्ये द्यौः पृथिव्यंतरिक्षं मनः प्राणाइत्येवमात्मकंजगदोतत्वेन निर्दिष्टं तस्यायतनं परंब्रह्म भवितु मर्हति॥ कुतः॥ स्वशब्दादात्मशब्दादित्यर्थः॥ आत्मशब्दोहीहभवति॥ तमेवैकंजानथ आत्मानमिति॥ आत्मशब्दस्य परमात्मपरिग्रहे सम्यगवकल्प्यते॥ नार्थान्तरंपरिग्रहे॥ क्वचिच्चस्वशब्देनैव ब्रह्मण आयतनत्वं श्रूयते सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा इति॥ ९ तीयत्वेन सेतुशब्दोपपत्तेश्च

त्यर्थः॥ नन्वात्मशब्दो जीवेसंभवतीत्यतआह॥ आत्मश्चेति॥ उपाधिपरिछिन्नस्य जीवस्य सर्वेवस्तु प्रत्येकं मुख्यं नास्तीत्यर्थः॥ उप क्रमस्य साधारणायतनस्य गौणसेतुत्वलिंगात् प्रथमश्रुतात्मश्रुत्या ब्रह्मनिश्चयइतिभावः॥ स्वशब्दादित्यस्यार्थान्तरमाह॥ क्वचि द्वेतिप्रजानांमुख्यतोसदेवमूलंस्थितावायतनंलये प्रतिष्ठेति ब्रह्मघाविसत्पदेन छांदोग्ये ब्रह्मण आयतनत्वश्रुतेरत्रापि तथेत्यर्थः॥

मु·भा· अ·पा·
२।३

अर्थांतरमाह ॥ स्वशब्देनैवेति ॥ यस्मिन्द्यौरितिवाक्यात्पूर्वोत्तरवाक्ययोः पुरुषब्रह्मादिशब्देन ब्रह्म संकीर्तनात्मध्येपि ब्रह्म ग्राह्य मित्यर्थः ॥ पुरुषइति पूर्ववाक्यं ब्रह्मैवेत्युत्तरवाक्यं सर्वासु दिक्षु स्थितं सर्वं ब्रह्मैवेत्यर्थः ॥ उत्तरेणोत्तरस्यां दिशि उदाहृतवाक्यस्य स्व विशेषब्रह्मपरत्वमाशंक्य वाक्यं व्याचष्टे ॥ तत्रेत्यादिना सामानाधिकरण्याद्धि चित्र आत्मेति संबन्धः ॥ यस्मिन्सर्वमोतं तमेवै

स्वशब्देनैव चेह पुरस्तादुपरिष्टाच्च ब्रह्म संकीर्त्यते ॥ पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतमिति ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चात् ब्रह्म दक्षिणतश्चोत्तरेणेति च ॥ तत्र त्वायतनायतनवद्भाव श्रवणात् ॥ सर्वं ब्रह्मेति च सामानाधिकरण्यात् ॥ यथानेकात्मको वृक्षः शाखा स्कंधो मूलं चेत्येवं नाना रसो विचित्र आत्मेत्याशंका संभवति तां निवर्तयितुं सावधारणमाह ॥ तमेवैकं जानथ आत्मानमि ति ॥ एतदुक्तं भवति ॥ न कार्यप्रपंचविशिष्टो विचित्र आत्मा विज्ञेयः ॥ किं तर्हि अविद्याकृतं कार्यप्रपंचं विद्यया प्रविलापयंतस्तमेवैकमायतनभूतमात्मानं जानथैकरसमिति ॥ यथा यस्मिन्नास्ते देवद त्तस्तदानयेत्युक्त आसनमेवानयति न देवदत्तं ॥ तद्वदायतनभूतस्यैवैकरसस्यात्मनो विज्ञेयत्वमु पदिश्यते विकारानृताभिसंधस्य चापवादः श्रूयते ॥ मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति ॥ सर्वं ब्रह्मेति तु सामानाधिकरण्यं प्रपंचप्रविलापनार्थं नानेकरसताप्रतिपादनार्थं ॥ ५ ॥

कमित्येवकारैकशब्दाभ्यां निर्विशेषं ज्ञेयमित्युक्ता हेत्वंतरमाह ॥ विकारानृतेति ॥ विकारेऽनृते कल्पिते अभिसंधोऽभिमानो यस्य तस्यानर्थभाक्त्वेन निंदाश्रुतेश्च कूटस्थं सत्यं ज्ञेयमित्यर्थः ॥ कथं तर्हि सामानाधिकरण्यं तत्राह सर्वं ब्रह्मेति ॥ यश्चौरः स स्थाणुरितिवत् यत्सर्वं तद्ब्रह्मेति सर्वोद्देशेन ब्रह्मत्वविधानात् बाधनार्थं न तु यद्ब्रह्म तत्सर्वमिति नानारसत्वार्थमित्यर्थः ॥ ५ ॥

राम·
९५

तत्र नियामकमाह सयथेति ॥ लवणपिण्डोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव सर्वो लवण एकरसो यथा ॥ एवमरे मैत्रेयी चिदेकरस आत्मेत्यर्थः
यद्यपि पारवत्त्व सावयवत्वादिकं मुख्यसेतव्यभिचारि तथापि सेतोर्जलादि वंधन रूपं यद्विधारणं तदेवव्यभिचारित्वे पि सेतुपदार्थैकदे
शत्वाद्गुणत्वेन ग्राह्यं न तु पदार्थवहिर्भूतं पारवत्त्वादिकमित्याह अत्रोच्यत इति ॥ दृष्टत्वान्न तद्ग्रहेऽतिप्रसंगमाह नहीति ॥ अत्र श्रुतौ

सयथा सैंधवघनोऽनंतरोऽवाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मानंतरोवाह्यः कृत्स्नः प्रज्ञानघन
एवेत्येकरसतात्रवणात् ॥ तस्मात्द्युभ्वाद्यायतनं परं ब्रह्म ॥ यत्तूक्तं सेतुश्रुतेः सेतोश्च पारवत्त्वोपपत्तेर्ब्र
ह्मणोऽर्थांतरेण द्युभ्वाद्यायतनेन भवितव्यमिति ॥ अत्रोच्यते ॥ विधारणत्वमात्रमत्र सेतुश्रुत्या विवक्ष्य
ते ॥ न पारवत्त्वादि । न हि मृद्दारुमयो लोके सेतुर्दृष्ट इत्यत्रापि मृद्दारुमय एव सेतुरभ्युपगम्यते ॥ सेतु
शब्दार्थोऽपि विधारणत्वमात्रमेव न पारवत्त्वादि ॥ षिञो वंधनकर्मणः सेतुशब्दव्युत्पत्तेः अपर आह ॥ तमे
वैकं जानथ आत्मानमिति ॥ यदेतत्संकीर्तितमात्मज्ञानं ॥ यच्चैतदन्या वाचो विमुंचथेति वाग्विमोचनं तद
त्रामृतत्वसाधनत्वात् अमृतस्यैष सेतुरिति सेतुश्रुत्या संकीर्त्यते ॥ न तु द्युभ्वाद्यायतनं तत्र यदुक्तं सेतु
श्रुतेर्ब्रह्मणोऽर्थांतरेण द्युभ्वाद्यायतनेन भवितव्यमित्येतदयुक्तं ॥ १ ॥ मुक्तोपसृप्यव्यपदेशात ॥ २ ॥ इ
तश्च परमेव ब्रह्म द्युभ्वाद्यायतनं यस्मात्तन्मुक्तोपसृप्यतास्य व्यपदिश्यमाना दृश्यते ॥ मुक्तैरुपसृप्यं मुक्तो

परेणेति शेषः ॥ विधारणस्य शब्दार्थत्वं स्फुटयति ॥ षिञ इति ॥ सिनोति वध्नातीति सेतुपदार्थैकदेशो विधारणमित्यर्थः । तथा चामृत
पदस्य भावप्रधानत्वादमृतत्वस्य सेतुर्विधारकं ब्रह्मा सैवामृतत्वं नान्यस्येत्यर्थः ॥ यद्वा द्युभ्वाद्याधारो ब्रह्म न सेतुशब्दार्थः किं त्वन्य
द्विहितज्ञानमित्याह ॥ अपर इति ॥ फलितमाह ॥ तत्र यदुक्तमिति ज्ञाने सेतौ गृहीते सतीत्यर्थः ॥ १ ॥ मुक्तैरुपसृप्यमत्यक्तेन प्राप्यं यद्ब्र

मुक्तिप्रतियोगित्वं ध्वंसयतीति ॥ देहादिष्विति ॥ तद्विपर्ययेणेति ॥ उक्तपंचक्लेशात्मकबंधनिवृत्त्यात्मना स्थितमित्यर्थः ॥ यथा
नद्यो गंगाद्याः नामरूपे विहाय समुद्रात्मना तिष्ठंति ॥ तथा ब्रह्मात्मविदपि संसारं विहाय परात्कारणात् अव्यक्तात्परं पूर्णं स्वयंज्योति
रानंदं प्रत्यक्त्वेन प्राप्य तिष्ठतीत्याह ॥ तथाविद्वानिति ॥ इदं प्रधानादेः किं न स्यादत आह ॥ ब्रह्मणश्चेति ॥ अस्य मुमुक्षोः हृदीति पदं

देहादिष्वनात्मस्वहमस्मीति आत्मबुद्धिरविद्या ततस्तत्पूजनादौ रागस्तत्परिभवादौ द्वेषः तदुच्छेददर्शना
द्भयं मोहश्चेत्येवमयमनंतभेदोऽनर्थव्रातः संततः सर्वेषां नः प्रत्यक्षः तद्विपर्ययेणाविद्यारागद्वेषादि
दोषमुक्तैरुपसृप्यमुपगम्यमेतदिति द्युभ्वाद्यायतनप्रकृत्यव्यपदेशो भवति ॥ कथं भिद्यते हृदयग्रंथिश्छि
द्यंते सर्वसंशयाः ॥ क्षीयंते चास्य कर्माणि तस्मिन्दृष्टे परावरे इत्युक्त्वाब्रवीति ॥ तथा विद्वान्नामरूपाद्विमु
क्तः परात्परं पुरुषमुपैति दिव्यमिति ॥ ब्रह्मणश्च मुक्तोपसृप्यत्वं प्रसिद्धं शास्त्रे ॥ यदा सर्वे प्रमुच्यंते कामा येऽ
स्य हृदि श्रिताः ॥ अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इत्येवमादौ प्रधानादीनां तु न क्वचिन्मुक्तोपसृ
प्यत्वं प्रसिद्धमस्ति ॥ अपि च तमेवैकं जानथ आत्मानमन्या वाचो विमुंचथेति वाग्विमोकपूर्वकं विज्ञेय
त्वमिह द्युभ्वाद्यायतनस्योच्यते ॥ तच्च श्रुत्यंतरे ब्रह्मणो दृष्टं ॥ तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्म
णः ॥ नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तदिति ॥ तस्मादपि द्युभ्वाद्यायतनं परं ब्रह्म ॥ २ ॥ नानुमा
नात्मधर्मत्वं कामानां निरस्तं यदा कामनिवृत्तिरथ तदा अमृतो भवति मरणहेत्वभावात् केवल नमतच्छब्दात् ॥ ३ ॥
मनर्थनिवृत्तिः किं त्वत्र देहे तिष्ठन्नेव ब्रह्मानंदमश्नुत इत्यर्थः ॥ लिंगांतरमाह ॥ अपि चेति ॥ धीरो विवेकी तमेवात्मानं विज्ञाय
विशृंखलस्य पदार्थज्ञानाद्वाक्यार्थज्ञानं कुर्यात् ॥ ज्ञानार्थिनो ज्ञानप्रतिबंधककर्मकांडादेर्वैमुख्यमाह ॥ नेति ॥ ॥

वहूनिन्युक्त्या अस्यानूवेदांतशब्दानंगीकरोति॥ अष्टौस्थानानिवर्णानामुरः कंठः शिरस्तथा जिह्वामूलं चदंताश्च नासिकोष्ठौ च तालु चेति॥ एतानिवागिंद्रियस्थानत्वात् वाक्शब्देनोच्यंते तेषां शोषणमात्रमनात्मशब्दोच्चारणफलं ध्यानान्मनसोग्लानिमात्रमित्यर्थः॥२॥ वैशेषिकइति॥ असाधारणआत्मशब्दादित्यर्थः॥ अतच्छब्दादित्यस्यार्थांतरमाह॥ तद्विपरीतस्येति॥ अतएवा

पथाब्रह्मणः प्रतिपादको वैशेषिकोहेतुरुक्तो नैवमर्थांतरस्य वैशेषिकोहेतुः प्रतिपादकोस्तीत्याह नानु।
मानिकं सांख्यस्मृतिपरिकल्पितं प्रधानमिह द्युभ्वाद्यायतनत्वेन प्रतिपत्तव्यं॥ कस्मादतच्छब्दात् तस्य
ऽचेतनस्य प्रधानस्य प्रतिपादकः शब्दस्तच्छब्दो न तच्छब्दोऽतच्छब्दः न ह्यत्राचेतनस्य प्रधानस्य प्रति
पादकः कश्चिच्छब्दोऽस्ति॥ येनाऽचेतनं प्रधानं कारणत्वेनायतनत्वेन वाऽवगम्येत॥ तद्विपरीतस्य चेत
नस्य प्रतिपादकशब्दोऽस्ति यः सर्वज्ञः सर्वविदित्यादिः॥ अतएव न वायुरपीह द्युभ्वाद्यायतनत्वेना।
श्रीयते॥३॥ प्राणभृच्च॥४॥ यद्यपि प्राणभृतो विज्ञानात्मत्वं चेतनत्वं च संभवति॥ तथाप्युपाधिपरिच्छि
न्नज्ञानस्य सर्वज्ञत्वाद्यसंभवे सत्यस्मादेवातच्छब्दात् प्राणभृदपि न द्युभ्वाद्यायतनत्वेनाश्रयितव्यः॥ न
चोपाधिपरिच्छिन्नस्याऽविभोः प्राणभृतो द्युभ्वाद्यायतनत्वमपि सम्यक् भवति॥ पृथग्योगकरणमुत्त
रार्थं॥४॥ कुतश्च न प्राणभृत् द्युभ्वाद्यायतनत्वेनाश्रयितव्यः भेदव्यपदेशात्॥५॥ भेदव्यपदेशश्चेह।
(भवति॥

तच्छब्दादेव॥३॥ प्राणभृच्चेति॥ सूत्रेचकारः पूर्वसूत्रस्य नञोनुषंगार्थः सर्वज्ञपदसामानाधिकरण आत्मश
ब्दोनजीववाचीन्यतच्छब्दस्तस्मादित्यर्थः॥ ननु नानुमानप्राणभृतावतच्छब्दादित्येकमेवसूत्रं किमर्थं न कृतं उभयनिरासहेतो
रेकत्वादित्यत आह॥ पृथगिति॥ योगः सूत्रं उत्तरसूत्रस्य हेतूनां जीवमात्रनिरासेनान्वयेपि सुबोधार्थं प्राणभृच्चेति पृथक् सूत्रकरण

तानेवहेतून्नकोसाह्यावाचष्टे ॥ कुतश्चेत्यादिना ॥ यद्यपिशुद्धःमन्यगात्मैवात्रज्ञेयस्तथापिजीवत्वाकारेणज्ञातुर्ज्ञेयाद्भेदात्न
ज्ञेयरूपत्वमित्यर्थः ॥ एवंचजीवत्वलिंगविशिष्टत्वेनजीवस्यद्युभ्वादिवाक्यार्थत्वंनिरस्यतेनशुद्धरूपेणेतिमंतव्यं ॥ ५ ॥ ननु
स्थित्येश्वरस्यादनाज्जीवस्यद्वासुपर्णेत्यत्रोक्तावपिईश्वरआयतनवाक्येनकिमर्थंग्राह्यइत्यतआह ॥ यदिचेश्वरइति ॥ अत्र

तमेवैकंजानथआत्मानमितिज्ञेयज्ञातृभावेन ॥ तत्रप्राणभृन्नावन्मुमुक्षुत्वात्ज्ञानापरिशेषादात्मश॥
ब्दवाच्यंब्रह्मज्ञेयंद्युभ्वाद्यायतनमितिगम्यतेनप्राणभृत् ॥ ५ ॥ कुतश्चनप्राणभृत्द्युभ्वाद्यायतनत्वेना
श्रयितव्यः ॥ प्रकरणात् ॥ ६ ॥ प्रकरणंचेदंपरमात्मनः ॥ कस्मिन्नुभगवोविज्ञातेसर्वमिदंविज्ञातंभव॥
तीत्येकविज्ञानेसर्वविज्ञानापेक्षणात् ॥ परमात्मनिहिसर्वात्मकेविज्ञातेसर्वमिदंविज्ञातंस्यात् ॥ नकेव
लेप्राणभृति ॥ ६ ॥ कुतश्चनप्राणभृत्द्युभ्वाद्यायतनत्वेनाश्रयितव्यः ॥ स्थित्यदनाभ्यांच ॥ ७ ॥ द्युभ्वा॥
द्यायतनंचप्रकृत्यद्वासुपर्णासयुजासखायेत्यत्रस्थित्यदनेनिर्दिश्यते ॥ तयोरन्यःपिप्पलंस्वाद्वत्तीति
कर्मफलाशनंअनश्नन्नन्योभिचाकशीतीत्यौदासीन्येनावस्थानंच ॥ नाभ्यांचस्थित्यदनाभ्यांईश्वरक्षे
त्रज्ञौतत्रगृह्येते ॥ यदिचेश्वरोद्युभ्वाद्यायतनत्वेनविवक्षितस्ततस्तस्यप्रकृतस्येश्वरस्यक्षेत्रज्ञात्
पृथग्वचनमवकल्पते ॥ अन्यथाह्यप्रकृतवचनमाकस्मिकमसंबद्धंस्यात् ॥ ननुतवापिक्षेत्रज्ञस्येश्व

चेश्वरःशुद्धचिन्मात्रोग्राह्यः नसर्वज्ञत्वादिविशिष्टः ॥ त ``रात्पृथग्वचनमाकस्मिकमेवप्रसज्येत ॥ ७ ॥
स्याप्रतिपाद्यत्वात् ॥ तथाचाप्रतिपाद्यार्थस्याकस्मान्मध्येवचनासंभवात् आद्यवाक्येनग्रहणंकार्यमित्यभिसंधिःतम
ज्ञात्वाशंकते ॥ ननुतथापीति ॥

ब्रह्मस्वरूपप्रतिपादनार्थमकस्मादप्रकृतस्यापि लोकप्रसिद्धस्य जीवस्यानुवादसंभवइति परिहरति। नेति। ननु द्वासुपर्णेत्यत्र बु
द्धिजीवयोरुक्तेः कथमिदं सूत्रमित्यत आह। गुहामिति॥ स्थित्यदनाभ्यामीश्वरक्षेत्रज्ञयोरनुवादेनैक्यं दर्शितमित्यर्थः॥ नन्वत्र जीवेशौ
नानुवाद्यौ पैङ्गिवाक्याविरोधादतः सूत्रासंगतिरित्यत आह॥ यदापीति॥ तदापि सूत्रस्यासंगतिर्नास्तीत्यर्थः॥ अदनवाक्ये ननु बुद्ध्या

न तस्याविवक्षितत्वात् क्षेत्रज्ञो हि कर्तृत्वेन भोक्तृत्वेन च प्रतिशरीरं बुद्ध्याद्युपाधिसंबद्धो लोकत एव प्रसि
द्धो नासौ श्रुत्या तात्पर्येण विवक्ष्यते॥ ईश्वरस्तु लोकतोऽप्रसिद्धत्वात् श्रुत्या तात्पर्येण विवक्ष्यत इति न तस्या
कस्मिकं वचनं युक्तं॥ गुहां प्रविष्टावात्मानौ हीत्यत्राप्येतद्दर्शितं॥ द्वा सुपर्णेत्यस्यामृचीश्वरक्षेत्रज्ञावुच्येते
इति॥ यदापि पैङ्ग्युपनिषत्कृतेन व्याख्यानेनास्यामृचि सत्त्वक्षेत्रज्ञावुच्येते तदापि न विरोधः कश्चित्कथं प्रा
णभृदीह घटादिच्छिद्रवत्सत्त्वाद्युपाध्यभिमानित्वेन प्रतिशरीरं गृह्यमाणो द्युभ्वाद्यायतनं न भवतीति नि
षिध्यते॥ यस्तु सर्वशरीरेषूपाधिभिर्विनोपलक्ष्यते परमात्मैव स भवति॥ यथा घटादिच्छिद्राणि घटादि
भिरुपाधिभिर्विनोपलक्ष्यमाणानि महाकाश एव भवंति॥ तद्वत्प्राणभृतः परस्मादन्यत्वानुपपत्तेः प्रतिषेधो
नोपपद्यते॥ तस्मात्सत्त्वाद्युपाध्यभिमानिन एव द्युभ्वाद्यायतनत्वप्रतिषेधः॥ तस्मात्परमेव ब्रह्म द्युभ्वा
द्यायतनं॥ तदेतददृश्यत्वादिगुणको धर्मोक्तेरित्यनेनैव सिद्धं॥ तस्यैव हि भूतयोनिवाक्यस्य मध्ये इदं प
ठितं॥ यस्मिन्द्यौः पृथिवी चांतरिक्षमिति प्रपंचार्थं तु पुनरुपन्यस्तं॥ ७॥ भूमा संप्रसादादध्युपदेशात्।८॥

द्विविलक्षणमुद्दत्तं नु ब्रह्मणोऽस्य संयोक्तेर्द्युभ्वादिवाक्ये तदेव ग्राह्यं॥ ननु द्वानुपहितो जीवइति सूत्रसंगतिमाह॥ कथमित्यादिना॥ न
न्वत्रानुपहितो जीव उक्तो न परं ब्रह्मेत्यत आह॥ यस्त्विति॥ पौनरुक्त्यं शंकते॥ तदेतदिति॥ द्युभ्वादिवाक्यस्य ब्रह्मपरत्वमित्यर्थः॥ स

छांदोग्यमुदाहरति ॥ इदमिति ॥ नाल्पे सुखमस्ति भूमैव सुखं तस्मान्निरतिशयसुखार्थिना भूमैव विचार्य इति नारदं प्रति सनत्कुमारे।
णोक्ते सति नारदो ब्रूते ॥ भूमानमिति ॥ भूम्नो लक्षणमद्वितीयत्वमाह ॥ यत्रेति ॥ भूमलक्षणं परिच्छिन्नलक्षणोक्त्या स्फुटयति ॥
अथेति ॥ अत्र संशयबीजं प्रश्नपूर्वकमाह ॥ कुत इत्यादिना ॥ बहोर्भाव इति विग्रहे पृथ्वादिभ्य इमनिजिति इमनिच्प्रत्यये कृते बहो
र्लोपो भू च बहोरिति सूत्रेण बहोः परस्येमनिच्प्रत्ययस्यादेरिकारस्य लोपः स्यात् बहोः स्थाने भू इत्यादेशश्च स्यादित्युक्तेः भूमा।

इदं समाम्नायते भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति ॥ यत्र नान्यत्पश्यति नान्यच्छृ
णोति नान्यद्विजानाति स भूमा। अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पमित्यादि ॥ तत्र संशयः
॥ किं प्राणो भूमा स्यादाहोस्वित्परमात्मेति ॥ कुतः संशयः भूमेति तावत् बहुत्वमभिधीयते ॥ बहोर्लोपो
भू च बहोरिति भूमशब्दस्य भावप्रत्ययान्ततास्मरणात् ॥ किमात्मकं पुनस्तद्बहुत्वमिति विशेषाकांक्षा
यां प्राणो वा आशाया भूयानिति संनिधानात्प्राणो भूमेति प्रतिभाति ॥ तथा श्रुतं ह्येव मे भगवद्दृशेभ्यस्तरति
शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयत्विति प्रकरणोत्थानात्परमात्मा
भूमेत्यपि प्रतिभाति ॥ तत्र कस्योपादानं न्याय्यं कस्य वा हानमिति भवति संशयः ॥ किं तावत्प्राप्तं प्राणो भूमेति

न्निति शब्दो निष्पन्नः तस्य भावार्थके मन्प्रत्ययान्तत्वाद्बहुत्वं वाच्यं ॥ तत्किं धर्मिकमित्याकांक्षायां सन्निहितप्रकरणस्थः प्राणो।
धर्मी भाति ॥ वाक्योपक्रमस्थ आत्मापि स्वप्रतिपादनापेक्षो धर्मित्वेन भातीति सन्निहितव्यवहितप्रकरणाभ्यां संशय इत्यर्थः पूर्व
मात्मशब्दान् द्युभ्वाद्यायतनं ब्रह्मेत्युक्तं तदयुक्तं तरति शोकमात्मविदित्य ब्रह्मण्यप्यात्मशब्दप्रयोगादित्याक्षेपसंगत्या पूर्वपक्ष
यति ॥ प्राणो भूमेति धर्मधर्मिणोरभेदात्सामानाधिकरण्यं द्रष्टव्यं ॥ पूर्वोत्तरपक्षयोः प्राणोपास्तिः ब्रह्मज्ञानं च फलं क्रमेण मंतव्यं ॥

अत्राध्याये भूयः प्रश्नोत्तरभेदादर्थभेदो दृश्यते॥ भूमा तु प्राणात्परं भूयः प्रश्नं विनैवोक्तलिंगेन प्राणादभिन्न इत्याह कस्मादित्यादिना
प्राणान्न भूय इति न दृश्यत इति पूर्वेण संबंधः॥ नन्वेष तु वा अतिवदतीति तु शब्देन प्राणप्रकरणविच्छेदात् न प्राणो भूमेत्यत आह
प्राणमेवेति॥ नामाद्याशांतानुपास्यानतीत्य प्राणं श्रेष्ठं वदतीत्यतिवादी प्राणवित् तं प्रत्यतिवाद्यसीति केनचित्प्रश्ने कृते अस्मीति ब्रू

कस्मात्॥ भूयः प्रश्नप्रतिवचनादर्शनात्॥ यथा ह्यस्ति भगवो नाम्नो भूय इति॥ वाग्वाव नाम्नो भूयसीति तथा
स्ति भगवो वाचो भूय इति मनो वाव वाचो भूय इति नामादिभ्यो ह्या प्राणात् भूयः प्रश्नप्रतिवचनप्रवाहः प्र
वृत्तो नैवं प्राणात्परं भूयः प्रश्नप्रतिवचनं दृश्यते अस्ति भगवः प्राणाद्भूय इति अदो वाव प्राणाद्भूय इति॥
प्राणमेव तु नामादिभ्य आशांतेभ्यो भूयांसं प्राणो वा आशाया भूयानित्यादिना सप्रपंचमुक्त्वा प्राणदर्शिन
श्चातिवादित्वमतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापन्हुवीतेत्यभ्यनुज्ञाय एष तु वा अतिवदति यः सत्ये
नातिवदतीति प्राणव्रतमतिवादित्वमनुकृष्यापरित्यज्यैव प्राणं सत्यादिपरंपरया भूमानमवतारय
न्प्राणमेव भूमानं मन्यत इति गम्यते॥ कथं पुनः प्राणे भूमनिर्व्याख्यायमाने यत्र नान्यत्पश्यतीत्येतत्
भूम्नो लक्षणपरं वचनं व्याख्यायते इत्युच्यते॥ सुषुप्तावस्थायां प्राणग्रस्तेषु करणेषु दर्शनादिव्यवहार
निवृत्तिदर्शनात्संभवति प्राणस्यापि यत्र नान्यत्पश्यतीत्यादिलक्षणं॥ ९ यान्नाहमतिवादीत्यपन्हवं न कुर्या
दित्युक्तं प्राणविदं स एष इति परामृश्य सत्यवचनध्यानमननश्रद्धादिधर्मपरंपरां विधाय भूमोपदेशान्न प्रकरणविच्छेदः तुशब्दो
नामाद्युपासकस्यातिवादित्वनिरासार्थ इत्यर्थः॥ भूम्नो लक्षणवचनं सुखत्वममृतत्वं च प्राणे प्रश्नपूर्वकं योजयति॥ कथं पुनरि
त्यादिना॥ प्राणग्रस्तेषु प्राणे लीनेषु न शृणोति सुप्तः पुरुष इति शेषः॥ गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्यपचन आहवनी

प्राणा अग्नय इह पुरे शरीरे जाग्रति सर्व्यापारा एव तिष्ठंतीत्यर्थः॥ देवो जीवः अथ तदा स्वप्नान्दर्शनकाले सुखं श्रवणात्प्राणस्य सुख-
त्वमविरुद्धमित्यन्वयः॥ आत्मपदेनोपक्रमविरोधं परिहरति॥ प्राण एवेति॥ प्राणस्यात्मत्वं कथमित्याशंक्य श्रुतत्वादित्याह॥ तथा
हीति॥ सर्वं समर्पितमिति च सर्वाधिष्ठानं प्राणं स्वीकरोति श्रुतिरित्यन्वयः॥ अत आत्मत्वं प्राणेपि मुख्यमिति भावः॥ भूमरूपत्वं

तथा च श्रुतिः न शृणोति न पश्यतीत्यादिना सर्वकरणव्यापारप्रत्यस्तमयरूपां सुषुप्त्यवस्थामुक्त्वा प्राणाग्नय
एवैतस्मिन्पुरे जाग्रतीति तस्यामेवावस्थायां पंचवृत्तेः प्राणस्य जागरणं ब्रुवंती प्राणप्रधानां सुषुप्त्यवस्थां दर्शय-
ति॥ यच्चैतद्भूम्नः सुखत्वं श्रुतं यो वै भूमा तत्सुखमिति तदप्यविरुद्धं॥ अत्रैष देवः स्वप्नान्न पश्यत्यथ यदैतस्मिं
छरीरे सुखं भवतीति सुषुप्तावस्थायामेव सुखश्रवणात्॥ यच्च यो वै भूमा तदमृतमिति तदपि प्राणस्याविरुद्धं
प्राणो वा अमृतमिति श्रुतेः कथं पुनः प्राणं भूमानं मन्यमानस्य तरति शोकमात्मविदित्यात्मविविदिषया प्रकरणो
त्थानं उपपद्यते प्राण एवेहात्मा विवक्षित इति ब्रूमः॥ तथाहि प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्व
सा प्राण आचार्यः प्राणो ब्राह्मण इति प्राणमेव सर्वात्मानं करोति॥ यथा वा अरा नाभौ समर्पिता एवमस्मिन्प्राणे
सर्वं समर्पितमिति च॥ सर्वात्मत्वारनाभिनिदर्शनाभ्यां च संभवति वैपुल्यात्मिका भूमरूपता प्राणस्य॥ तस्मा
त्प्राणो भूमेत्ययं प्राप्तं॥ तत इदमुच्यते परमात्मैवेह भूमा भवितुमर्हति॥ न प्राणः॥ कस्मात्संप्रसादादध्युपदे
शात्॥ संप्रसाद इति सुषुप्तं स्थानमुच्यते सम्यक् प्रसीदत्यस्मिन्निति निर्वचनात्॥ बृहदारण्यके च स्वप्नजाग
योजयति॥ सर्वात्मत्वेति॥ संप्रसादशब्देन प्राणं लक्षयितुं मुख्यार्थं दर्शयति॥ संप्रसाद इति॥ रितस्थानाभ्यां सह पाठात्॥
॥ सवा एष एतस्मिन्संप्रसादे स्थित्वा पुनरा द्रवतीति प्रयोगाच्च तत्पदं सुषुप्तिवाचकमित्याह बृहदिति वाच्यार्थसंबंधात्प्राणो लक्ष्य

ताच्यार्यसंबंधात्प्राणो लस्यइत्याह नसांचेति ॥ अत्रमन्त्रइत्यर्थः ॥ भूमाप्राणाद्भिन्नअध्यायेनस्मादूर्ध्वमुपदिष्टत्वात् नामादेरूर्ध्वमुपदिष्ट
वागादिवदित्यर्थः ॥ विपक्षेहेतूच्छेदबाधकमाह ॥ प्राणएवचेदिति ॥ स्वस्यैवस्वस्मादूर्ध्वमुपदिष्टत्वमयुक्तंनामादिषुअदृष्टंचेत्यर्थः ॥ हेतवसि
द्धिंशंकते ॥ नन्विहेति । प्रकृतप्राणविमर्शकएषशब्दोनभवति ॥ तस्ययच्छब्दपरतंत्रत्वेनसत्यवादिवाचित्वात् अतःप्राणप्रकरणं

तस्यांचसंप्रसादावस्थायांप्राणोजागर्तीतिप्राणोऽत्रसंप्रसादेऽभिप्रेयते प्राणादूर्ध्वंभूमत्वउपदिश्यमानत्वा
दित्यर्थः ॥ प्राणएवचेद्भूमास्यात् सएवतस्मादूर्ध्वमुपदिश्येतेत्यश्लिष्टमेवैतत्स्यात् ॥ नहिनामैवना
म्नोभूयइतिनाम्नऊर्ध्वमुपदिष्टं ॥ किंतर्हिनाम्नोन्यदर्थांतरमुपदिष्टंवागाख्यंवाग्वावनाम्नोभूयसीति ॥ त
थावागादिभ्योप्याप्राणादर्थांतरमेव तत्रतत्रोर्ध्वमुपदिष्टंतद्वत्प्राणादूर्ध्वमुपदिश्यमानोभूमाप्राणाद
र्थांतरभूतोभवितुमर्हति ॥ नन्विहनास्तिप्रश्नोऽस्तिभगवःप्राणाद्भूयइति ॥ नापिप्रतिवचनमस्तिप्रा
णाद्वावभूयोस्तीति कथंप्राणादधिभूमोपदिश्यतइत्युच्यते ॥ प्राणविषयमेवचातिवादित्वमुत्तरत्रा
नुकृष्यमाणंपश्यामःएषतुवाअतिवदतियःसत्येनातिवदतीति तस्मान्नास्तिप्राणादध्युपदेशइति ॥ अ
त्रोच्यते ॥ नतावत्प्राणविषयस्यैवातिवादित्वस्यैतदनुकर्षणमितिशक्यंवक्तुंविशेषवादाद्यःसत्येनातिव
दतीति ॥ ननुविशेषवादोप्ययंप्राणविषयएवभविष्यति ॥ कथं ॥ यथैषोग्निहोत्रीयःसत्यंवदतीत्युक्तेना
सत्यवदनेनाग्निहोत्रित्वंकेनतर्हिअग्निहोत्रेणैव ॥ सत्यवदनंत्वग्निहोत्रिणोविशेषउच्यते ॥ श्रीः ॥

विच्छिन्नमितिहेतुसिद्धिरित्याह ॥ अत्रोच्यतइति ॥ सत्येनातिवादित्वंविशेषः तद्वतोयएषइत्युक्तेनपूर्वोनुकर्षइत्यर्थः ॥ यएषप्राणविदति
वदतीत्यनूद्यसत्यंवदेदितिविधानात्नप्राणप्रकरणविच्छेदइतिदृष्टांतेनशंकते ॥ नन्वितिसत्यशब्दोब्रह्मवाधिनेरूढोब्रह्मवाचकस्तद

सत्यवचनेनत्ववाधितार्थसंबंधात् लाक्षणिकइति नात्रलक्ष्यवचनविधिरित्याह ॥ नेतिब्रूमइति ॥ किंच सत्येनब्रह्मणातिवदतीतितृतीया
श्रुत्याब्रह्मप्रकरणकमतिवादित्वंश्रुतंतस्यप्रकरणात् वाधोनयुक्तइत्याह ॥ श्रुत्याहीत्यादिना ॥ ऽतिसत्यवाकइत्यर्थः एवंसत्येनेतिश्रुत्या
प्रकरणबाध्यमित्युक्तानुशब्देनापिबाध्यमाह ॥ प्रकृतेनेति ॥ विजिज्ञास्यत्वलिंगाच्च पूर्वोक्ताद्भिन्नमित्याह ॥ सत्यंत्वेवेति ॥ प्रकरणविच्छे
तथैषतुवाअतिवदतियःसत्येनातिवदतीत्युक्तेन सत्यवदनेनातिवादित्वंकेनतर्हिप्रकृतेनप्राणविज्ञानेनैव
॥ सत्यवदनंतुप्राणविदोविशेषोविवक्ष्यतेइति ॥ नेतिब्रूमः ॥ श्रुत्यर्थपरित्यागप्रसंगात् श्रुत्याह्यत्रसत्यवदने
नातिवादित्वंप्रतीयतेयःसत्येनातिवदतिसोतिवदतीति ॥ नात्रप्राणविज्ञानस्यसंकीर्तनमस्तिप्रकरणात्तुप्रा
णविज्ञानंसंबंध्येत ॥ नत्वप्रकरणानुरोधेनश्रुतिःपरित्यक्तास्यात् ॥ प्रकृतव्यावृत्त्यर्थश्चतुशब्देनसंगच्छतेनैषतु
वाअतिवदतीति ॥ सत्यंत्वेवविजिज्ञासितव्यमितिचप्रयत्नांतरकरणमर्थांतरविवक्षांसूचयति ॥ तस्माद्यथैक
वेदप्रशंसायांप्रकृतायामेषतुमहाब्राह्मणोयश्चतुरोवेदानधीतइत्येकवेदेभ्योऽर्थांतरभूतश्चतुर्वेदःप्रशस्य
ते ॥ तादृगेतत्द्रष्टव्यं ॥ नचप्रश्नप्रतिवचनरूपेणैवार्थांतरविवक्षयाभवितव्यमितिनियमोस्ति ॥ प्रकृतसंबं
धासंभवकारितत्वादर्थांतरविवक्षायाः ॥ तत्रप्राणांतमनुशासनंश्रुत्वातूष्णींभूतंनारदंस्वयमेवसनत्कुमारो
व्युत्पादयति ॥ यत्प्राणविज्ञानेनविकारानृतविषयेणातिवादित्वमनतिवादित्वमेवतत्दैषतुवाअतिवदतियः
देदृष्टांतमाह ॥ तस्मादिति ॥ श्रुतिलिंगबलादितित्सत्यंप्रकृतात्प्राणात्माधान्त्वेनभिन्नंद्रष्टव्यमित्यर्थः ((सत्येनातिवदतीति· ॥
सचमतिवादित्वस्यब्रह्मसंबंधोनत्वाप्राणलिंगत्वंनिरस्तं ॥ यत्तुप्रश्नंविनोक्तत्वलिंगात् भूमाप्राणइतितन्नतस्याप्रयोजकत्वादित्याह ॥ नचे
ति ॥ प्रश्नभेदादर्थभेदइतिननियमः ॥ एकस्यात्मनोमैत्रेय्यावहुशःपृष्टत्वात्प्रश्नंविनोक्तत्वाच्चतुर्वेदस्यप्रकृतैकवेदाद्भिन्नत्वदर्शनाच्चेत्यर्थः

तत्रयथा चतुर्वेदत्वस्यप्रकृताऽसंबंधादर्थभेदएवमिहापीतिस्फुटयति ॥ तत्रेत्यादिना ॥ सत्यपदेनप्राणोक्तिरित्यतआह ॥ तत्रसत्यमिति ॥
विज्ञानं निदिध्यासनं आदिपदान्मननश्रद्धाश्रवणमनःशुद्धिनिष्ठातद्धेतुकर्माणिगृह्यंतइमान्यपिश्रवणादीनिज्ञेयस्यसत्यस्यब्र
ह्मत्वेलिंगानि । एवंश्रुतिलिंगैः प्राणस्याऽवांतरप्रकरणंबाधित्वाप्रस्तुतंसत्यंब्रह्मभूमपदोक्तवद्भूत्वधर्मीत्याह ॥ तत्रयदिति ॥ किं
च्चसन्निहितादपिव्यवहितंसाकांक्षंबलीयइतिन्यायेनसन्निहितंनिराकांक्षं प्राणंदृष्ट्वावाक्योपक्रमस्थआत्मास्वप्रतिपादनायभूम

तत्रसत्यमितिपरंब्रह्मोच्यतेपरमार्थरूपत्वात् ॥ सत्यंज्ञानमनंतंब्रह्मेतिचश्रुत्यंतरात् ॥ तथाव्युत्पा-
दितायनारदायसोऽहंभगवः सत्येनातिवदामीत्येवंप्रवृत्तायविज्ञानादिसाधनपरंपरयाभूमानमुपदि-
शति ॥ तत्रयत्प्राणादधिसत्यंवक्तव्यंप्रतिज्ञातंतदेवेहभूमेत्युच्यतइतिगम्यते ॥ तस्मादस्ति प्राणादधि
भूम्नउपदेशइत्यतः प्राणादन्यः परमात्माभूमाभवितुमर्हति ॥ एवंचेहात्मविविदिषयाप्रकरणस्यो-
त्थानमुपपन्नंभविष्यति प्राणएवेहात्माविवक्षितइत्येतदपिनोपपद्यते ॥ नहिप्राणस्यमुख्ययावृ-
त्त्यात्मत्वमस्ति ॥ नचान्यत्रपरमात्मज्ञानाच्छोकविनिवृत्तिरस्ति ॥ नान्यःपंथाविद्यतेऽयनायेतिश्रुत्यं-
तरात् ॥ तंमाभगवान्शोकस्यपारंतारयत्विति चोपक्रम्योपसंहरति ॥ तस्मैमृदितकषायायतमसः
पारंदर्शयति भगवान्सनत्कुमारइति ॥ तमइतिशोकादिकारणमविद्योच्यते ॥ प्राणांतेचानुशासनेनप्रा-
णस्यात्मायतनतोच्येतात्मनः प्राणइतिचब्राह्मणं

वाक्यापेक्षइहभूमाग्राह्यइत्याह ॥ एवंचेति ॥ किंचशोकस्यपारमित्युपसं-
हारात् शोकस्यमूलोच्छेदंविनातरणायोगाच्चशोकपदेनमूलतमोगृह्यतेतन्निवर्तकज्ञानगम्यत्वलिंगात् आत्माब्रह्मेत्याह ॥ नचा-
न्यत्रेति ॥ ब्राह्मणमात्मायतनत्वंप्राणस्यवदतीतिसंबंधः ॥

शा॰भा॰
टी॰

अ॰पा॰
२१३

नन्विदं त्वरमेवाह्मण्ं ब्रह्मपरमस्तु मतः प्राणान्तो भूमा प्राण इति शंकते प्रकरणादिति तच्छब्देन भूमानुकर्षान्मैवमित्याह॥ नेति॥ ८॥ भूम्नो ब्रह्मत्वे लिंगान्तरमाह॥ धर्मेति सूत्रे॥ यदुक्तं भूम्नो लक्षणं सुखत्वममृतत्वं च प्राणेष्वयोग्यमिति तदनूद्य विघटयति॥ योप्यसावित्यादिना॥

र॰प्र॰
१०१

प्रकरणात्तेपरमात्मविवक्षाभविष्यति भूमा तु प्राण एवेति चेन्न॥ स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नीत्यादिना भूम्न एवाप्रकरणसमाप्तेरनुकर्षणात्॥ वैपुल्यात्मिका च भूमरूपता सर्वकारणत्वात्परमात्मनः सुतरामुपपद्यते॥ ८॥ धर्मोपपत्तेश्च॥ ९॥ अपि च ये भूम्नि श्रूयंते धर्मास्ते परमात्मन्युपपद्यंते। यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमेति दर्शनादिव्यवहाराभावं भूमन्यवगमयति॥ परमात्मनि चायं दर्शनादिव्यवहाराभावोऽवगतो यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येदित्यादिश्रुत्यंतरात्॥ योप्यसौ सुषुप्त्यवस्थायां दर्शनादिव्यवहाराभाव उक्तः सोप्यात्मन एवासंगत्वविवक्षया उक्तो न प्राणस्वभावविवक्षया परमात्मप्रकरणात्॥ यदपि तस्यामवस्थायां सुखमुक्तं तदप्यात्मन एव सुखरूपत्वविवक्षयोक्तं॥ यत आह॥ एषोस्य परम आनंद एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंतीति॥ इहापि यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखमिति॥ सामयसुखनिराकरणेन ब्रह्मैव सुखं भूमानं दर्शयति॥ यो वै भूमा तदमृतमिति अमृतत्वमपीह श्रूयमाणं परमकारणं गमयति॥ विकाराणाममृतत्वं सापेक्षिकत्वादतोन्यदार्तमिति च श्रुत्यंतरात्॥ तथा च सत्यत्वं स्वमहिमप्रतिष्ठितत्वं सर्वगतत्वं सर्वात्मत्वमिति चैते धर्माः श्रूयमाणाः परमात्मन्येवोपपद्यंते नान्यत्र॥ ९॥ सति तु प्राणोपाधावात्मनो द्रष्टृत्वादिलराभावे सुषुप्तौ तदभावद्दृत्वा

राम॰
१०१

संगत्वज्ञानार्थं प्रश्नोपनिषदि न शृणोति न पश्यतीति परमात्मानं प्रकृत्योक्तं तथा तत्रैवात्मनः सुखत्वमुक्तं न प्राणस्य यतः श्रुत्यंतरमात्मन एव सुखत्वमाह तस्मादित्यर्थः॥ आमयो नाशादिदोषस्तत्सहितं सामयमार्तं नश्वरं॥ स एवाधस्तात्स उपरिष्टादिति सर्वगतत्वं स एवेदं सर्वमिति

तस्माद्भूमाख्योयोनिर्गुणेसमन्वितइतिसिद्धं॥९॥अक्षरमंबरांतधृतेः बृहदारण्यकेपठति॥ कस्मिन्निति॥यद्भूतंभवच्चभविष्यच्च।
तत्सर्वंकस्मिन्नोतमितिगार्ग्यापृष्टेनमुनिनायाज्ञवल्क्यनाम्नाकृताकाशः कार्यमात्राश्रयउक्तः आकाशः कस्मिन्नोतइतिद्वितीयप्रश्नेस
मुनिरुवाचतद्व्याकृतस्याधिकरणमेतदक्षरंअस्थूलादिरूपमित्यर्थः॥ उभयत्राक्षरशब्दप्रयोगात्संशयः यथा सत्यशब्दोब्रह्मणिरूढ
इतिब्रह्मभूमेत्युक्तंतथाक्षरशब्दोवर्णेरूढइतिदृष्टांतेनपूर्वपक्षस्तत्रोंकारोपास्तिःफलंसिद्धांतेनिर्गुणब्रह्मधीरितिविवेकः॥ ननुन

तस्मात्भूमापरमात्मेतिसिद्धं॥९॥अक्षरमंबरांतधृतेः॥१०॥कस्मिन्नुखल्वाकाशओतश्चप्रोतश्चेति॥
सहोवाचैतद्वैतदक्षरंगार्गिब्राह्मणाअभिवदंत्यस्थूलमनण्वित्यादिश्रूयते॥ तत्रसंशयः॥किमक्षरशब्देन
वर्णउच्यते॥किंवापरमेश्वरइति॥तत्राक्षरसमाम्नायइत्यादावक्षरशब्दस्यवर्णेप्रसिद्धत्वात्॥प्रसिद्धातिक्र
मस्यचायुक्तत्वात्॥ॐकारएवेदंसर्वमित्यादौचश्रुत्यंतरेवर्णस्याप्युपास्यत्वेनसर्वात्मकत्वावधारणात् व
र्णएवाक्षरशब्दइत्येवंप्राप्तउच्यते॥परएवात्माक्षरशब्दवाच्यः॥कस्मादंबरांतधृतेःपृथिव्यादेराकाशांत
स्यविकारजातस्यधारणात् तत्रहिपृथिव्यादेःसमस्तस्यविकारजातस्यकालत्रयविभक्तस्याकाशएवतदोतं
चप्रोतंचेत्याकाशेप्रतिष्ठितत्वमुक्त्वाकस्मिन्नुखल्वाकाशओतश्चप्रोतश्चेत्यनेनप्रश्नेनेदमक्षरमवतारितं
तथाचोपसंहृतमेतस्मिन्नुखल्वक्षरेगार्ग्याकाशओतश्चप्रोतश्चेति॥नचेयमंबरांतधृतिर्ब्रह्मणोन्यत्रसंभवति

क्षरतीत्यचलत्वामाशित्वयोगात् ब्रह्मण्यप्यक्षरशब्दोमुख्यइत्यतआह॥ प्रसिद्धातिक्रमस्येति॥ रूढिर्योगमपहरतीतिन्यायादित्य
र्थः॥वर्णस्योंकारस्यसर्वाश्रयत्वंकथमित्याशंक्याध्यानार्थमिदंयथाश्रुत्यंतरेसर्वात्मत्वमित्याह॥ ॐकारइति॥प्रश्नप्रतिवचनाभ्यांम
आकाशांतजगदाधारत्वेनान्यर्थेनिश्चयात्तद्ध्यानार्थेनाभतस्तल्लिंगबलाद्रूढिंबाधित्वायोगवृत्तिर्ग्राह्येतिसिद्धांतयति॥ एवमित्यादि

आकाशं भूतं कृत्वाशंक्यते ॥ स्यादेतदिति ॥ चेतनकर्तृकशिष्यात्र श्रुतेर्मैवमित्याह ॥ सा चेति ॥ सूत्रं व्याचष्टे ॥ सा चेति ॥ चकारा
आकाशस्य भूतत्वनिरासार्थः भूताकाशस्य कार्यत्वेन पातित्वेः श्रुतसर्वकार्याश्रयत्वायोगात् ॥ अव्याकृतमज्ञानमेवाकाशः प्रधानम्



यद्यपि कारणत्वेदं सर्वमिति तदपि ब्रह्मप्रतिपत्तिसाधनत्वात्स्तुत्यर्थं द्रष्टव्यं ॥ तस्मान्नाक्षरस्य श्रुतेश्चेति नि
त्यत्वव्यापित्वाभ्यामक्षरं परमेव ब्रह्म ॥ १० ॥ स्यादेतत्कार्यस्य चेत्कारणाधीनत्वं अम्बरान्तधृतेरभ्युपगम्यते
॥ प्रधानकारणवादिनोपीयमुपपद्यते कथमम्बरान्तधृतेर्ब्रह्मत्वप्रतिपत्तिः ॥ अत उत्तरं पठति ॥ सा च प्रशासना
त् ॥ ११ ॥ सा चाम्बरान्तधृतिः परमेश्वरस्यैव कर्म कस्मात्प्रशासनात् ॥ प्रशासनं हीह श्रूयते एतस्य वा अक्षरस्य प्रशा
सने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत इत्यादि ॥ प्रशासनं च पारमेश्वरं कर्म नाचेतनस्य प्रधानस्य प्रशासनं संभव
ति ॥ नह्यचेतनानां घटादिकारणानां मृदादीनां घटादिविषयं प्रशासनमस्ति ॥ ११ ॥ अन्यभावव्यावृत्तेश्च ॥ १२ ॥ अ
न्यभावव्यावृत्तेश्च कारणात् ब्रह्मैवाक्षरशब्दवाच्यं ॥ तस्यैव चाम्बरान्तधृतिः कर्म नान्यस्य कस्यचित् किमिदमन्य
भावव्यावृत्तेरिति । अन्यस्य भावोऽन्यभावस्तस्माद्व्यावृत्तिरन्यभावव्यावृत्तिरिति ॥ एतदुक्तं भवति ॥ यदन्यद्ब्र
ह्मणोऽक्षरशब्दवाच्यमिहाशंक्यते तद्भावादिदमम्बरान्तविधारणमक्षरं व्यावर्तयति श्रुतिः ॥ तद्वा एतदक्षरं गा
र्ग्यदृष्टं द्रष्टृ श्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञात्रिति ॥ तत्रादृष्टत्वादिव्यपदेशः प्रधानस्यापि संभवति । द्रष्टृत्वादिव्य
पदेशस्तु न संभवत्यचेतनत्वात् ॥ तथा नान्यदतोस्ति द्रष्टृ नान्यदतोस्ति श्रोतृ नान्यदतोस्ति मन्तृ नान्यदतोस्ति वि
ज्ञात्रित्यात्मभेदप्रतिषेधात्

शब्दितं इति तदाश्रयत्वात्साक्षरं न प्रधानमित्यर्थः ॥ विधृतौ विषयत्वेन धृतौ ॥ ११ ॥ प्रश्नपूर्वकं सू
त्रं व्याकरोति । किमिदमिति घटत्वात् व्यावृत्तिरिति भ्रान्तिं निरस्यति ॥ एतदिति ॥ अम्बरान्तस्याधारमक्षरं श्रुतिरचेतनत्वाद्व्यावर्तयतीत्यर्थः ॥ जी

अन्यभावोभेदस्तन्निषेधादितिसूत्रार्थः तर्हिशोधितोजीवएवास्तुसंनपरइत्यतआह॥ नहीति॥ शोधितजीवत्वंनास्तीत्यर्थः॥ तस्माद्दा
र्गिग्राह्यंनिर्गुणात्परेसमन्वितमितिसिद्धं॥३॥ ईक्षतिकर्मव्यपदेशात्सः॥ प्रश्नोपनिषदमुदाहरन्ति॥ एतदिति॥ पिप्पलादोगुरुः सत्यका
मेनपृष्टोब्रूतेहेसत्यकामपरंनिर्गुणमपरंसगुणंचब्रह्मैतदेवयोयमोंकारःसहिप्रतिमेवविष्णोस्तस्यप्रतीकस्तस्मात्प्रणवंब्रह्मात्म
नाविद्वानेतेनैवोंकारध्यानेनायतनेनप्राप्तिसाधनेनयथाध्यानंपरमपरंवान्वेतिप्राप्नोतीतिप्रकृत्यमध्येएकमात्रद्विमात्रोंकारयोर्ध्यान
मुक्त्वाब्रवीति॥ यःपुनरिति॥ इत्थंभावेतृतीयाब्रह्मोंकारयोरभेदोपक्रमात्॥ योह्यकारादिमात्रात्रयेएकस्यामात्रायाअकारस्यश्र

नशारीरस्याप्युपाधिमतोऽक्षरशब्दवाच्यत्वमचक्षुष्कमश्रोत्रमवागमनइतिचोपाधिमतःप्रतिषेधात्॥ न
हिनिरुपाधिकःशारीरोनामभवति॥ तस्मात्परमेवब्रह्माक्षरमितिनिश्चयः॥१२॥ ईक्षतिकर्मव्यपदेशात्सः॥
१३॥ एतद्वैसत्यकामपरंचापरंचब्रह्मयदोंकारस्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेतीतिप्रकृत्यश्रूय
तेयःपुनरेतंत्रिमात्रेणोमित्येतेनैवाक्षरेणपरंपुरुषमभिध्यायीतेति॥ किमस्मिन्वाक्येपरंब्रह्माभिध्यात
व्यमुपदिश्यतआहोस्विदपरमित्येतेनैवायतनेनपरमपरंचैकतरमन्वेतीतिप्रकृतत्वात्संशयःतत्रापर

व्यादिकंजाग्रदादिविभूतिंचजानातीतितेनसम्यक् ज्ञाताएकामात्रायस्योंकारस्यसएकमात्रएवंमात्रा''मिदंब्रह्मेतिमात्रे॥ ८
द्वयस्यसम्यग्विभूतिज्ञानेद्विमात्रस्तथात्रिमात्रस्तमोंकारंपुरुषंयोभिध्यायीतसओंकारविभूतित्वेनध्यातैःसामभिःसूर्यद्वाराब्रह्मलोकं
गत्वापरमात्मानंपुरुषंईक्षतइत्यर्थः॥ संशयंतद्बीजंचाह॥ किमित्यादिना॥ अस्मिन्त्रिमात्रवाक्यइत्यर्थः॥ पूर्वत्रपूर्वपक्षत्वेनोक्तेओं
कारेबुद्धिस्थंध्यातव्यंनिर्धार्यतइतिप्रसंगसंगतिः॥ यद्वापूर्वत्रवर्णेरूढस्याक्षरशब्दस्यलिंगात् ब्रह्मणिवृत्तिरुक्तातद्वदत्रापिब्रह्मलो
कप्राप्तिलिंगात्परशब्दस्यहिरण्यगर्भेवृत्तिरितिदृष्टान्तेनपूर्वपक्षयति॥ तत्रापरमितिकार्येपरब्रह्मणोरुपास्तिरुभयत्रफलं॥ ६॥

स उपासकः सूर्ये संपन्नः प्रविष्टः ननु वसुदान ईश्वर इति ध्यानात् किं तदेव सिद्धं स्यात् किमपि फलं ब्रह्मोपासकस्यात्र न भिन्नं तत आह ॥ नहीति ॥ अन्यत्र तथात्वेऽपि अत्र परवित् परमपरविद् परमन्वेतीत्युपक्रमात् परविदोऽपरप्राप्तिर्युक्ता उपक्रमविरोधात् न चात्र परप्राप्तिरेवोक्तेति वाच्यं परस्य सर्वगतत्वात् अत्रैव प्राप्तिसंभवे न सूर्यद्वारा गतिवैयर्थ्यात् तस्मात् उपक्रमानुगृहीतादपरप्राप्तिरूपाल्लिंगात् ॥ परं पुरुषमिति परस्मादिति वा ध्येयत्वार्थः परस्मान्नेगेतिंष्टछनि ॥ तस्मिन्निति ॥ पिंडः स्थूलो विराट् तदपेक्षया सूत्रस्य परत्वमिति समाध्यर्थः ॥ सूत्रे सम

कस्मात् स तेजसि सूर्ये संपन्नः स सामभिरुन्नीयते ब्रह्मलोकमिति च तद्धि देशपरिच्छिन्नस्य फलस्योच्यमानत्वात् ॥ न हि परब्रह्मविदे शपरिच्छिन्नं फलमश्नुवीतेति युक्तं ॥ सर्वगतत्वात्परस्य ब्रह्मणः ॥ नन्वपरब्रह्मपरिग्रहे परं पुरुषमिति विशेषणं नोपपद्यते ॥ नैष दोषः ॥ पिंडापेक्षया प्राणस्य परत्वोपपत्तेः ॥ इत्येवं प्राप्तेऽभिधीयते ॥ परमेव ब्रह्मेहाभिध्यातव्यमुपदिश्यते कस्मात् ॥ ईक्षतिकर्मव्यपदेशात् ईक्षतिर्दर्शनं दर्शनव्याप्यमीक्षतिकर्म ईक्षतिकर्मत्वेनास्याभिध्यातव्यस्य पुरुषस्य वाक्यशेषे व्यपदेशो भवति स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत इति ॥ तत्राभिध्यायतेरतथाभूतमपि वस्तु कर्म भवति मनोरथकल्पितस्यापि अभिध्यायतिकर्मत्वात् ॥ ईक्षतेस्तु तथाभूतमेव वस्तु लोके कर्म दृष्टमित्यतः परमात्मैवायं सम्यग्दर्शनविषयभूत ईक्षतिकर्मत्वेन व्यपदिष्ट इति गम्यते ॥ स एव चेह परपुरुषशब्दाभ्यामभिध्यातव्यः प्रत्यभिज्ञायते ॥

व्य ईश्वरपर इति प्रतिज्ञात्वेन तं व्याचष्टे ॥ परमेवेति स उपासक एतस्माद्धिरण्यगर्भात्परं पुरुषं ब्रह्माहमितीक्षत इत्यर्थः ॥ नन्वीक्षणविषयोऽप्यपरोऽस्तु तत्राह ॥ तत्राभिध्यायतेरिति । नन्वीक्षणं प्रमात्वाद्विषयसत्यतामपेक्षत इति भवतु सत्यः परः ईक्षणीयः ध्यातव्यस्त्वसत्योऽपरः किं न स्यादित्यत आह ॥ स एवेति ॥ श्रुतिभ्यां प्रत्यभिज्ञानात्सत्य एवायमिति सौत्रः सशब्दो व्याख्यातः ॥ अत्रैवं सूत्रयोजना ॐकारे योऽध्येयः

ननु शब्दभेदान् न प्रत्यभिज्ञेति शंकते नन्विति ॥ परात्पर इति शब्दभेदं अंगीकृत्य श्रुतिभ्यामुक्तप्रत्यभिज्ञाया अविरोधमाह ॥ अत्रेति
॥ नन्वेतस्माज्जीवघनात्परादित्येतत्पदेनोपक्रान्तध्यातव्यपरामर्शो दीक्षणीयः परात्माध्येयादन्य इत्यत आह ॥ नचात्रेति ॥ ध्यान-
स्य तत्फलेक्षणस्य च लोके समानविषयत्वाद्ध्येय एवेक्षणीय एवं चोपक्रमोपसंहारयोरेकवाक्यता भवतीति भावः ॥ स सामभिरुन्नी-
यते ब्रह्मलोकं स एतस्माज्जीवघना—दित्येतत्पदेन सन्निहितत्वाद्ब्रह्मलोकस्वामी परामृश्यत इति प्रश्नपूर्वकं व्याचष्टे ॥ कस्त-

नन्वभिध्याने परः पुरुष उक्त ईक्षणे तु परात्परः कथमितर इतरत्र प्रत्यभिज्ञायत इत्युच्यते परपुरुष-
शब्दौ तावदुभयत्र साधारणौ ॥ नचात्र जीवघनशब्देन प्रकृतोऽभिध्यातव्यः परः पुरुषः परामृश्यते येन
तस्मात्परात्परोऽयमीक्षितव्यः पुरुषोऽन्यः स्यात् ॥ कस्तर्हि जीवघन इत्युच्यते घनो मूर्तिर्जीवलक्षणो घनो जीव-
घनः ॥ सैंधवखिल्यवद्यः परमात्मनो जीवरूपः खिल्यभाव उपाधिकृतः परश्च विषयेन्द्रियेभ्यः सोऽत्र जीव-
घन इति ॥ अपर आह ॥ स सामभिरुन्नीयते ब्रह्मलोकमित्यतीतानन्तरवाक्यनिर्दिष्टो यो ब्रह्मलोकः परश्च
लोकान्तरेभ्यः सोऽत्र जीवघन इत्युच्यते जीवानां हि सर्वेषां करणपरिवृतानां सर्वकरणात्मनि हिरण्यगर्भे ब्रह्म-
लोकनिवासिनि संघातोपपत्तेः भवति ब्रह्मलोको जीवघनः तस्मात्परो यः परमात्मेक्षणकर्मभूतः स एवाभि-

हीत्यादिना ॥ मूर्तौ घन इति सूत्रादिति भावः सैंधवखिल्यो लवणपिंडः खिल्यवदल्पी((ध्यानेऽपि कर्मभूत इति गम्यते ॥ ६ ॥
भावः परिच्छेदो यस्य स खिल्यभावः ॥ एतत्पदेन ब्रह्मलोको वा परामृश्यत इत्याह ॥ अपर इति जीवघनशब्दस्य ब्रह्मलोके लक्षणां ॥
दर्शयति ॥ जीवानां हीति ॥ व्यष्टिकरणाभिमानिनां जीवानां घनः संघातो यस्मिन्सर्वकरणाभिमानिनि स जीवघनः तत्स्वामिकत्वात्
परंपरासंबंधेन लोको लक्ष्य इत्यर्थः तस्मात्परः सर्वलोकातीतः शुद्ध इत्यर्थः ॥ श्री० ॥ ॥ श्री० ॥

परपुरुषशब्दस्य परमात्मनि मुख्यत्वाच्च स एव ध्येय इत्याह ॥ परमिति ॥ यस्मात्परं नापरमस्ति किंचित्स एव मुख्यः परः न तु पिंडात्परः सू-
त्रात्मेत्यर्थः ॥ किंच परशब्देनोपक्रमे निर्दिष्टं परं ब्रह्मैवात्रैकाक्षरे ध्यातव्यमित्याह ॥ परं चापरं चेति ॥ पापनिर्मुक्तिलिंगाच्चेत्याह ॥ य-
थेति पादोदरः सर्पः ॥ ॐकारेण परब्रह्मोपासनया सूर्यद्वारा ब्रह्मलोकं गत्वा परब्रह्मेक्षितृत्वात्तदेव शांतमभयं परं मात्रेनीत्यविरोधमाह ॥ अ-

परं पुरुषमिति च विशेषणं परमात्मपरिग्रह एवावकल्पते ॥ परो हि पुरुषः परमात्मैव भवति यस्मात्परं किंचि-
दन्यन्नास्ति पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिरिति च श्रुत्यंतरात् ॥ परं चापरं च ब्रह्म यदोंकार इति च वि-
विभज्यानंतरमोंकारेण परं पुरुषमभिध्यातव्यं ब्रुवन् परमेव ब्रह्म परं पुरुषं गमयति ॥ यथा पादोदरस्त्वचा वि-
निर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्त इति पाप्मविनिर्मोकफलत्ववचनं परमात्मानमिहाभिध्यातव्यं सूचय-
ति ॥ अथ यदुक्तं परमात्माभिध्यायिनो न देशपरिच्छिन्नफलं युज्यत इति ॥ अत्रोच्यते त्रिमात्रेणोंकारेणालंबने-
न परमात्मानमभिध्यायतः फलं ब्रह्मलोकप्राप्तिः क्रमेण च सम्यग्दर्शनोत्पत्तिरिति क्रममुक्त्यभिप्रायमेतद्भ-
विष्यतीत्यदोषः ॥ १३ ॥ दहर उत्तरेभ्यः ॥ १४ ॥ अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुंडरीकं वेश्म दहरोऽस्मिन्नंतरा-
काशस्तस्मिन्यदंतस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमित्यादि वाक्यं समाम्नायते ॥ तत्र योऽयं दहरे हृदय-
पुंडरीके दहर आकाशः श्रुतः स किं भूताकाशोऽथवा विज्ञानात्माऽथवा परमात्मेति संशय्यते ॥ कुतः संशयः ॥

त्रोच्यत इति ॥ एवमेकवाक्यतासमर्थनप्रकरणानुगृहीतपरपुरुषश्रुतिभ्यां परब्रह्मप्रत्यभिज्ञया ब्रह्मलोकप्राप्तिलिंगं बाधित्वा वाक्यं प्र-
णवध्येये ब्रह्मणि समन्वितमिति सिद्धं ॥ १३ ॥ दहर उत्तरेभ्यः ॥ छांदोग्यमुदाहरति ॥ अथेति ॥ भूमविद्यानंतरं दहरविद्यारंभार्थोऽथशब्दः ॥
ब्रह्मणोऽभिव्यक्तिस्थानत्वात् ब्रह्मपुरं शरीरं अस्मिन् यत्प्रसिद्धं दहरमल्पं हृत्पद्मं तस्मिन् हृदये यदंतराकाशशब्दितं ब्रह्म तदन्वेष्टव्यं विचा-

अत्राकाशो जिज्ञास्यस्तदंतस्थं वेति प्रथमं संशयः कल्प्यः तत्र यद्याकाशस्तदा संशयद्वयं तत्राकाशशब्दादेकं संशयमुक्त्वा ब्रह्मपुरशब्दात्सं
शयांतरमाह ॥ तथा ब्रह्मपुरमितीति अत्र शब्दे जीवस्य ब्रह्मणो वा पुरमिति संशयः ॥ तत्र तस्मिन्संशये सतीति योजना ॥ परपुरुषशब्दस्य ब्र
ह्मणि मुख्यत्वाद्ब्रह्म ध्येयमित्युक्तं ॥ तथेहाप्याकाशपदस्य भूताकाशे रूढत्वाद्भूताकाशो ध्येय इति दृष्टांतेन पूर्वपक्षयति तत्राकाशेत्यादिना द
हराकाशस्यानंतरप्रजापतिवाक्यस्य च सगुणे निर्गुणे च समन्वयोक्तेः श्रुत्यादिसंगतयः पूर्वपक्षे भूताकाशाद्युपास्तिः सिद्धांते सगुणब्र

आकाशब्रह्मपुरशब्दाभ्यामाकाशशब्दो ह्ययं भूताकाशे परस्मिंश्च प्रयुज्यमानो दृश्यते ॥ तत्र किं भूताकाश एव
दहरः स्यात् किं वा पर इति संशयः ॥ तथा ब्रह्मपुरमिति किं जीवोऽत्र ब्रह्मनामा तस्येदं पुरं शरीरं ब्रह्मपुरमथवा प
रस्यैव ब्रह्मणः पुरं ब्रह्मपुरमिति ॥ तत्र जीवस्य परस्य वान्यतरस्य पुरस्वामित्वे दहराकाशत्वे संशयः तत्राका
शशब्दस्य भूताकाशे रूढत्वाद्भूताकाश एव दहरशब्द इति प्राप्ते ॥ तस्य च दहरायतनापेक्षया दहरत्वं यावा
नयमाकाशस्तावानेषोंतर्हृदय आकाश इति च बाह्याभ्यंतरभावकृतभेदस्योपमानोपमेयभावो द्यावा
पृथिव्यादि च तस्मिन्नंतः समाहितमवकाशात्मनाऽऽकाशस्यैकत्वात् ॥ अथवा जीवो दहर इति प्राप्ते ॥ ब्र
ह्मपुरशब्दाज्जीवस्य हीदं पुरं सच्छरीरं ब्रह्मपुरमित्युच्यते ॥ तस्य स्वकर्मणोपार्जितत्वात् ॥ ऽ ह्मोपास्त्या निर्गुणधीरि

तिफलभेदः ॥ न चाकाशस्तल्लिंगादित्यनेनास्य पुनरुक्तताशंकनीया अत्र तस्मिन्यदंतस्तदन्वेष्टव्यमित्याकाशांतस्थस्यान्वेष्टव्यत्वा
दिलिंगान्वयेन दहराकाशस्य ब्रह्मत्वे स्पष्टलिंगाभावात् ॥ ननु भूताकाशस्याल्पत्वं कथमेकस्योपमानत्वमुपमेयत्वं च कथं उभे अ
स्मिन्द्यावापृथिवी अंतरेव समाहिते उभावग्निश्च वायुश्चेत्यादिना श्रुतं सर्वाश्रयत्वं कथमित्याशंकां क्रमेण परिहरति ॥ तस्येत्यादिना
॥ दहरयापेक्षयाल्पत्वं ध्यानार्थं कल्पितभेदात्सादृश्यं ॥ स्वतएकत्वात्सर्वाश्रयत्वमित्यर्थः ॥ नन्वेष आत्मेत्यात्मशब्दो भूतेन युक्त इत्य

भक्तोतिचैतन्यगुणयोगेनेत्यर्थः ॥ पुरत्वं ब्रह्मगृह्यतामित्यत आह ॥ नहीति ॥ अस्तु पुरस्वामी जीवो हृदयस्याकाशस्तु ब्रह्मेत्यत आह ॥ नत्रेति ॥ पुरस्वामिन एव तदंतस्थत्वसंभवात् नान्यापेक्षेत्यर्थः ॥ व्यापिनो न तस्थत्वं कथमित्यत आह ॥ मन इति ॥ आकाशपदेन दहर मनुकृष्योक्तोपमादिकं ब्रह्माभेदविवक्षया भविष्यतीत्यत आह ॥ आकाशेति ॥ ननु जीवस्याकाशपदार्थत्वमयुक्तमित्याशंक्य न हि भूताकाशवद्दहरोस्तु तस्मिन्नंतस्थं किंचित् ध्येयमिति पक्षांतरमाह ॥ नचात्रेति ॥ परमं तस्यैव स्तुतद्विशेषणत्वेनाधारत्वेन द

भक्त्या च तस्य ब्रह्मशब्दवाच्यत्वं ॥ नहि परस्य ब्रह्मणः शरीरेण स्वस्वामिभावः संबंधोस्ति ॥ तत्र पुरस्वामिनः पुरैकदेशे वस्थानं दृष्टं यथा राज्ञः ॥ मन उपाधिकश्च जीवो मनश्च प्रायेण हृदये प्रतिष्ठितमित्यतो जीवस्यैवेदं हृदयेंतरवस्थानं स्यात् ॥ दहरत्वमपि तस्यैवाराग्रमात्रोपमितत्वादवकल्पते ॥ आकाशोपमितत्वादि च ब्रह्माभेदविवक्षया भविष्यति ॥ नचात्र दहरस्याकाशस्यान्वेष्टव्यत्वं विजिज्ञासितव्यत्वं च श्रूयते ॥ तस्मिन्यदंतरिति परविशेषणत्वेनोपादानादित्यत उत्तरं ब्रूमः ॥ परमेश्वर एवात्र दहराकाशो भवितुमर्हति न भूताकाशो जीवो वा ॥ कस्मादुत्तरेभ्यो वाक्यशेषगतेभ्यो —————— हेतुभ्यः ॥ तथा हि अन्वेष्टव्यतयाभिहितस्य दहरस्याकाशस्य तं चेद्ब्रूयुरित्युपक्रम्य किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमित्येवमाक्षेपपूर्वकं प्रतिसमाधानवचनं भवति स ब्रूयाद्यावान्वा अयमाकाशस्तावानेषोंतर्हृदय आकाश उभे अस्मिन्द्यावापृथिवी अंतरेव समाहिते इत्यादि ॥ ६ ॥

हराकाशस्य तच्छब्देनोपादानादित्यर्थः ॥ यद्वा अन्वेष्यत्वादिलिंगात् दहरस्य ब्रह्मत्वनिश्चयादाकाशस्तल्लिंगादित्यनेन गतार्थत्वमिति शंका अत्र निरसनीया अन्वेष्यत्वादेः परविशेषणत्वेन ग्रहणात् दहरास्य ब्रह्मत्वे लिंगं नास्तीत्यर्थः ॥ अपहतपाप्मत्वादिलिंगोपेतात्मश्रुत्या केवलाकाशश्रुतिर्बाध्येति सिद्धांतयति परमेश्वर इत्यादिना ॥ ६ ॥

आकाशस्याक्षेपपूर्वकमितिसंबंधः॥ नमाचार्यं प्रतियदिन्नयुष्मदृदयमेवतावदल्पं तत्रत्याकाशोल्पतरः किंतदत्रास्ति विद्यतेयदि
चार्यं ज्ञेयमितितदासआचार्योऽन्नूयाद्दहराकाशस्याल्पत्वानिवृत्तिमित्यर्थः॥ वाक्यस्यतात्पर्यमाह॥ नत्रेति॥ निवर्तयति॥ आचार्य इतिशेषः॥
नन्वाकाशशब्देनरूढ्याभूताकाशस्यभानात् कथंतन्निवृत्तिरित्याशंक्याह॥ यद्यपीति॥ ननुरामरावणयोर्युद्धं रामरावणयोरिवेत्यभे
देप्युपमादृष्टेतिचेत् नभभेदे सादृश्यस्यानन्वयेनयुद्धस्यनिरुपमत्वेतात्पर्यात् अयमनन्वयालंकार इतिकाव्यविदः पूर्वोक्तमनूद्यनिरस्य

तत्रपुंडरीकदहरत्वेनप्राप्तदहरत्वस्याकाशस्यप्रसिद्धाकाशोपम्येनदहरत्वं निवर्त्तयतु भूताकाशत्वंदहर
स्याकाशस्यनिवर्त्तयतीतिगम्यते यद्यप्याकाशशब्दोभूताकाशेरूढस्तथापितेनैवतस्योपमानोपपद्यतइ
तिभूताकाशशंकानिवर्तिताभवति॥ नन्वेकस्याप्याकाशस्यबाह्याभ्यंतरत्वकल्पितेनभेदेनोपमानोपमेय
भावः संभवतीत्युक्तं॥ नैवंसंभवत्यगतिकाहीयंगतिर्यत्काल्पनिकभेदाश्रयणमपिचकल्पयित्वापिभेद
मुपमानोपमेयभावंवर्णयतः परिच्छिन्नत्वाद्भ्यंतराकाशस्यतबाह्याकाशपरिमाणत्वमुपपद्यते॥ ननुप
रमेश्वरस्यापिज्यायानाकाशादिति श्रुत्यंतरान्नैवाकाशपरिमाणत्वमुपपद्यते॥ नैषदोषः पुंडरीकवेष्ट
नप्राप्तदहरत्वनिवृत्तिपरत्वाद्बाह्याकाशस्यतनतावत्वप्रतिपादनपरत्वं॥ उभयप्रतिपादनेहिवाक्यंभिद्येत॥ ६॥

ति॥ नन्वित्यादिना॥ सीताक्ष्लिष्ट इवाभातिकोदंडप्रभयायुतइत्यादौप्रभायोगसीताश्लेषरूपविशेषणभेदाद्भेदाश्रयणमेकस्यैवश्री
रामस्योपमानोपमेयभावसिध्यर्थमगत्याकृतमित्यनुदाहरणंद्रष्टव्यंनैवमत्राश्रयणंयुक्तंवाक्यस्याल्पत्वनिवृत्तिपरत्वेनगतिस
द्भावात्॥ किंचहार्दाकाशस्यांतरत्वाऽत्यागेअल्पत्वेनव्यापकबाह्याकाशसादृश्यंनयुक्तमित्याह॥ अपिचेति॥ आंतरत्वत्यागेतुअत्यंताभे
दात्नसादृश्यमितिभावः॥ ननुहार्दाकाशस्याल्पत्वनिवृत्तौतावत्वेचतात्पर्यंकिंनस्यादित्यतआह॥ उभयेति॥ अतोल्पत्वनिवृत्तावेवता
स्यसिसिमिभावः॥

एवमाकाशोपमितत्वाद्दहराकाशोनभूतमित्युक्तंसर्वाश्रयत्वादिलिंगेभ्यस्तत्रैवेत्याह ॥ नचेत्यादिना ॥ विगताजिघत्साजग्धुमिच्छाय
स्यसोयंविजिघत्सः बुभुक्षाशून्यइत्यर्थः ॥ प्रथमस्तुतत्रब्रह्मशब्देनतत्सापेक्षत्वरमस्तुतत्षष्ठीविभक्त्यर्थः संबंधोनेयः ननुब्रह्मणःपुर
मितिषष्ठ्यर्थः स्वस्वामिभावोग्राह्यः निरपेक्षेणतत्सापेक्षंबाध्यमितिन्यायादित्याह ॥ अत्रब्रूमइति ॥ शरीरस्यब्रह्मणानदुपलब्धि

नचकस्मिंतभेदेपुंडरीकवेष्टितआकाशैकदेशेद्यावापृथिव्यादीनामंतः समाधानमुपपद्यते ॥ एषआ
त्मापहतपाप्माविजरोविमृत्युर्विशोकोविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पइतिचात्मत्वापह
तपाप्मत्वादयश्चगुणानभूताकाशेसंभवंति ॥ यद्यप्यात्मशब्दोजीवेसंभवतितथापीतरेभ्यः कारणेभ्योजी
वाशंकापिनिवर्तिताभवति ॥ नह्युपाधिपरिच्छिन्नस्याराग्रोपमितस्यजीवस्यपुंडरीकवेष्टनकृतंदहरत्वं
शक्यंनिवर्तयितुं ॥ ब्रह्माभेदविवक्षयाजीवस्यसर्वगतत्वादिविवक्ष्येतेतिचेत् ॥ यदात्मतयाजीवस्यसर्वग
तत्वादिविवक्षेततस्यैवब्रह्मणः साक्षात्सर्वगतत्वादिविवक्ष्यतामितियुक्तं ॥ यदप्युक्तंब्रह्मपुरमितिजीवे
नपुरस्योपलक्षितत्वाद्राज्ञइवजीवस्यैवेदंपुरस्वामिनः पुरैकदेशवर्तित्वमस्त्वित्यत्रब्रूमः ॥ परस्यैवेदं
ब्रह्मणः पुरंसत्शरीरंब्रह्मपुरमित्युच्यते ॥ ब्रह्मशब्दस्यतस्मिन्मुख्यत्वात् ॥ तस्याप्यस्तिपुरेणानेनसंबंध
उपलब्ध्यधिष्ठानत्वात् ॥ सएतस्माज्जीवघनात्परात्परंपुरिशयंपुरुषमीक्षते । सवाअयंपुरुषःसर्वासु
पूर्षुपुरिशयइत्यादिश्रुतिभ्यः ॥ अथवाजीवपुरएवास्मिन्ब्रह्मसन्निहितमुपलक्ष्यते ॥ ११ स्यानत्वरूपेसंबंधेमा
नमाह ॥ सइति ॥ पूर्षुशरीरेषुपुरिहृदयेशयइतिपुरुषइत्यन्वयः ॥ ननुब्रह्मशब्दस्यजीवेप्यन्नादिनाशरीरवृद्धिहेतोर्मुख्यत्वात्तष
स्यर्थः कथंचिन्नेयइत्यतआह ॥ अथवेति ॥ स्वंहयतिदेहमितिब्रह्मजीवस्तत्स्वामिकेपुरेहृदयंब्रह्मवेश्मभवतु राजपुरेमैत्रसद्मवदि

अनंतफलत्वलिंगादपि दहरः परमात्मेत्याह ॥ यथेति ॥ अथ कर्मफलाद्वैराग्यानंतरमिह जीवदशायामात्मानं दहरं तदाश्रितांश्च सत्यकामादिगुणान् आचार्योपदेशमनुविद्य ध्यानेनानुभूय ये परलोकं गच्छंति तेषां सर्वेषु लोकेष्वनंतमैश्वर्यं स्वेच्छया संकल्पनादि

यथा शालग्रामे विष्णुः सन्निहित इति तद्वत् ॥ तद्यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयत इति च कर्मणामनंतवत्फलत्वमुक्त्वाथ य इहात्मानमनुविद्य व्रजंत्येतांश्च सत्यान्कामांस्तेषां सर्वेषु लोकेषु कामचारो भवतीति प्रकृतदहराकाशविज्ञानस्यानंतफलत्वं वदन्परमात्मत्वमस्य सूचयति ॥ यदस्येतदुक्तं ॥ न दहरस्याकाशस्यान्वेष्टव्यत्वं विजिज्ञासितव्यत्वं च श्रुतं परविशेषणत्वेनोपादानादित्यत्र ब्रूमः । यद्याकाशेनान्वेष्टव्यत्वेनोक्तः स्यात् ॥ यावान्वा अयमाकाशस्तावानेषोंतर्हृदय आकाश इत्याकाशस्वरूपप्रदर्शनं नोपयुज्येत ॥ नन्वेतदप्यंतर्वर्तिवस्तुसद्भावप्रदर्शनायैव प्रदर्श्यते ॥ तं चेद्ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुंडरीकं वेश्म दहरोस्मिन्नंतराकाशः किं तदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमित्याक्षिप्य परिहारावसर आकाशौपम्यापक्रमेण द्यावापृथिव्यादीनामंतः समाहितत्वदर्शनात् ॥ नैतदेवं ॥ एवं हि सति यदंतः समाहितं द्यावापृथिव्यादि तदन्वेष्टव्यं विजिज्ञासितव्यं चोक्तं स्यात् ॥ तत्र वाक्यशेषो नोपपद्यते अस्मिन्कामाः समाहिता एष आत्मापहतपाप्मेति हि प्रकृतं द्यावापृथिव्यादिसमाधानाधारमाकाशमाकृष्याथ य इहात्मानमनुविद्य व्रजंत्येतांश्च सत्यान्कामानिति समुच्चयार्थेन चशब्देनात्मानं कामाधारमाश्रितांश्च कामान्विज्ञेयान्वाकाशे

कं भवतीत्यर्थः ॥ दहर उक्तलिंगान्यन्यथासिद्धानि तेषां तदंतस्थगुणत्वादित्युक्तं स्मारयित्वा दूषयति ॥ यदपी "सोदर्शयति ॥ इत्यादिना ॥ उत्तरस्याकाशस्वरूपप्रतिपादनान्यथानुपपत्त्या पूर्वं तस्यान्वेष्यत्वादिकमित्यत्रान्यथोपपत्तिं शंकते ॥ ७९ ॥ ७९ ॥

नन्विति ॥ एतदाकाशस्वरूपं आसेपबीजम्नाकाशस्याल्पत्वं उपमया निरस्यां तस्थवस्तूक्तेस्तदंतस्थमेव ध्येयमित्यर्थः ॥ नहि जगदेवा
ध्येयंस्यादित्याह ॥ नैतदेवमिति ॥ अस्तु कोदोषस्तत्राह ॥ तत्रेति ॥ सर्वनामभ्यां दहराकाशमाकृष्यात्मत्वादिगुणानुक्तागुणैः सहतस्ये
वध्येयत्ववाक्यशेषोक्तेनतद्विरोधइत्यर्थः तस्मिन्यदंतरिति तत्पदेनव्यवहितमपि हृदयं योग्यतया ग्राह्यमित्याह ॥ तस्मादिति ॥ य
द्वा आकाशस्तस्मिन्यदंतस्तदुभयमन्वेष्टव्यमिति योजनां सूचयति ॥ सहांतः स्थैरिति ॥ १४ ॥ दहराकाशस्यब्रह्मत्वेहेत्वंतरमाह ॥ गती

तस्माद्वाक्योपक्रमेपि दहरस्वाकाशो हृदयपुण्डरीकाधिष्ठानः ॥ सहांतःस्थैः समाहितैः पृथिव्यादिभिः सत्यैश्च
कामैर्विज्ञेयउक्तइतिगम्यते ॥ सचोक्तेभ्यो हेतुभ्यः परमेश्वरइति ॥ १४ ॥ गतिशब्दाभ्यां तथाहिदृष्टं लिंगंच ॥ १५ ॥
दहरः परमेश्वरउत्तरेभ्यो हेतुभ्यइत्युक्तं ॥ तएवोत्तरेहेतवइदानीं प्रपंच्यंते ॥ इतश्चपरमेश्वरएवदहरोयस्मा
त्दहरवाक्यशेषेपरमेश्वरस्यैवप्रतिपादकौगतिशब्दौभवतः ॥ इमाः सर्वाः प्रजाअहरहर्गच्छंत्यएतंब्रह्मलो
कंनविंदंतीति ॥ तत्रप्रकृतंदहरंब्रह्मलोकशब्देनाभिधायतद्विषयागतिः प्रजाशब्दवाच्यानांजीवानांअभि
धीयमानादहरस्यब्रह्मतांगमयति ॥ तथाह्यहरहर्जीवानांसुषुप्तावस्थायांब्रह्मविषयंगमनंदृष्टंश्रूयंतरे ॥
सतासोम्यतदासंपन्नोभवतीत्येवमादौ ॥ लोकेपिकिलगाढंसुषुप्तमाचक्षते ॥ ब्रह्मीभूतोब्रह्मतांगतइति ॥
तथाब्रह्मलोकशब्दोपिप्रकृतेदहरेप्रयुज्यमानोजीवभूताकाशशंकांनिवर्तयन् ब्रह्मतामस्यगमयति ॥

ति ॥ प्रजाजीवाएतंहृदयस्थंदहरंब्रह्मस्वरूपंलोकमहरहः प्रत्यहंस्वापेगच्छंत्यस्तदात्मनास्थिताअप्यनृताः ज्ञानेनाच्छन्नास्तंन
जानंतिअतः पुनरुत्तिष्ठंतीत्यर्थः ॥ नन्वेतत्पदपरामृष्टदहरस्यस्वापेजीवगम्यत्वेपिब्रह्मत्वेकिमायातमित्याशंक्यतथाहिदृष्टमि
तिव्याचष्टे ॥ तथाहीतिलोकेपिदृष्टमित्यर्थांतरमाह ॥ लोकेपीति ॥ गतिलिंगंव्याख्यायशब्दंव्याचष्टे ॥ तथेति ॥ जीवभूताकाशयोर्

दृष्टमिति साक्षादेवेत्यर्थः ॥

ब्रह्मण्यपि तस्याप्रसिद्धिं शंकते ॥ नन्विति ॥ निषादस्थपतिन्यायेन समाधत्ते ॥ गमयेदिति ॥ षष्ठे चिंतितं ॥ स्थपतिर्निषादः शब्दसाम
र्थ्यात् रौद्रीमिष्टिं विधाय एतया निषादस्थपतिं याजयेदित्याम्नायते ॥ तत्र निषादानां स्थपतिः स्वामी निषष्ठीसमासेन त्रैवर्णिको ग्रा
ह्यः ॥ अग्निविद्यादिसामर्थ्यात् ननु निषादश्चासौ स्थपतिश्चेति कर्मधारयेण निषादो ग्राह्यो ऽसामर्थ्यादिति प्राप्ते सिद्धांतः निषाद ए
व स्थपतिः स्यात् निषादशब्दस्य निषादे शक्तत्वात् तस्याश्रुतषष्ठ्यर्थसंबंधलक्षकत्वकल्पनायोगात् ॥ श्रुतद्वितीयाविभक्तेः पू

ननु कमलासनलोकमपि ब्रह्मलोकशब्दो गमयेत् ॥ गमयेद्यदि ब्रह्मणो लोक इति षष्ठीसमासवृत्त्याव्यु
त्पादेन ॥ सामानाधिकरण्यवृत्त्या तु व्युत्पाद्यमानो ब्रह्मैव लोको ब्रह्मलोक इति परमेव ब्रह्म गमयिष्यति ॥
एतदेव चाहरहर्ब्रह्मलोकगमनं दृष्टं ब्रह्मलोकशब्दस्य सामानाधिकरण्यवृत्तिपरिग्रहे लिंगं ॥ न ह्यहरहरि
माः प्रजाः कार्यब्रह्मलोकं सत्यलोकाख्यं गच्छंतीति शक्यं कल्पयितुं ॥ १५ ॥ धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः
॥ १६ ॥ धृतेश्च हेतोः परमेश्वर एवायं दहरः ॥ कथं दहरोस्मिन्नंतराकाश इति हि प्रकृत्याकाशौपम्यपूर्वकं त
स्मिन् सर्वसमाधानमुक्त्वा तस्मिन्नेव चात्मशब्दं प्रयुज्यापहतपाप्मत्वादिगुणयोगं चोपदिश्य तमेवानतिवृत्त
प्रकरणं निर्दिश्यत्यथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदायेति ॥ तत्र विधृतिरित्यात्मशब्दसामा
र्थपदसंबंधकल्पनायां लाघवात् ॥ अतो निषादस्येष्टिसामर्थ्यमात्रं कल्प्यमिति तद्वद्ब्रह्म नाधिकरण्याद्विधारयितोच्यते ॥ ए
लोकशब्दे कर्मधारय इत्यर्थः ॥ कर्मधारये लिंगं चास्तीत्याचष्टे ॥ एतदेवेति ॥ सूत्रे च कार उक्तन्यायसमुच्चयार्थः ॥ १५ ॥ सर्वं जगद्धार
णलिंगाच्च दहरः पर इत्याह ॥ धृतेरिति ॥ नन्वथशब्दाद्दहरप्रकरणं विच्छिद्य श्रुता धृतिर्न दहरलिंगमिति शंकते ॥ कथमिति य आत्मे
ति प्रकृताकर्षात् अथशब्दो दहरस्य धृतिगुणविधिप्रारंभार्थ इत्याह ॥ दहरोस्मिन्नित्यादिना ॥ श्रुतौ विधृतिशब्दः कर्तृवाचित्वात् किं च

शा·भा· टी· १·प्र· १०९

सूत्रे तु महिमशब्दसामानाधिकरण्यात् धृतिशब्दः क्तिजंतो विधारणं ब्रूते स्त्रियां क्तिन्निति भावे क्तिनो विधानादिति विभागः सेतुर
संकरहेतुः विधृतिस्तु स्थितिहेतु क्रियेति स्वरूपोक्तमाह ॥ यथोदकेति ॥ सूत्रं योजयति ॥ एवमिहेति ॥ धृतेश्च दहरः परः ॥ अस्य धृतिरूपस्य
नियमनस्य च महिम्नोऽस्मिन्परमात्मन्येव श्रुत्यंतरउपलब्धेरिति सूत्रार्थः ॥ धृतेश्चेति चकारात्सेतुपदोक्त नियामकत्वलिंगं ग्राह्यं न

क्तिचः कर्तरि स्मरणात् ॥ यथोदकसंतानस्य विधारयिता लोके सेतुः क्षेत्रसंपदामसंभेदायैवमयमात्मा एषां
मध्यात्मादिभेदभिन्नानां लोकानां वर्णाश्रमादीनां च विधारयिता सेतुरसंभेदायाऽसंकरायेति ॥ एवमिह प्रकृते
दहरे विधारणलक्षणं महिमानं दर्शयत्ययं च महिमा परमेश्वरस्यैव श्रुत्यंतरादुपलभ्यते ॥ एतस्य वा अक्षरस्य
प्रशासने गार्गि सूर्याचंद्रमसौ विधृतौ तिष्ठत इत्यादेः ॥ तथान्यत्रापि निश्चिते परमेश्वरवाक्ये श्रूयते ॥ एष सर्वेश्वर
एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदायेत्येवं धृतेश्च हेतोः परमेश्वर एवायं दहरः
॥ १६ ॥ प्रसिद्धेश्च ॥ १७ ॥ इतश्च परमेश्वरो दहरोऽस्मिन्नंतर आकाश उच्यते ॥ यत्कारणमाकाशशब्दं परमेश्वरे प्रसिद्धं
॥ आकाशो वै नाम नामरूपयोर्निर्वहिता सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यंत इत्यादि प्रयोगदर्शनात् ॥
जीवे तु न क्वचिदाकाशशब्दः प्रयुज्यमानो दृश्यते ॥ भूताकाशस्तु सत्यामप्याकाशशब्दप्रसिद्धौ उपमानोपमेयभा
वाद्यसंभवान्न गृहीतव्य इत्युक्तं ॥ १७ ॥ इतरपरामर्शात्स इति चेन्नासंभवात् ॥ १८ ॥ यदि वाक्यशेषबलेन दहर इ
ति परमेश्वरः परिगृहीतोऽस्तीतरस्यापि जीवस्य वाक्यशेषे परामर्शः ॥ अथ य एष संप्रसादोऽस्माच्छरीरात्समुत्था
य परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाचेति ॥ १ ॥ अनियमेऽश्रुत्यंतरोपलब्धिमाह ॥ एतस्ये

राम· १०९

ति ॥ धृतौ नामाह ॥ तथेति ॥ १६ ॥ आसमंतात्काशते दीप्यत इति स्वयंज्योतिषि ब्रह्मण्याकाशशब्दस्य विभुत्वगुणतो वा प्रसिद्धिः प्रयोग
प्राचुर्यं ॥ १७ ॥ यदि स एष आत्माऽपहतपाप्मेत्यादिवाक्यशेषबलेन दहरः परस्तर्हि जीवोपीमाशंका निषेधति ॥ ६ ॥ ० ७ १ ॥ ६ ॥

अ·पा· १३

इतरेति ॥ जीवस्यापि वाक्यशेषमाह ॥ अथेति ॥ दहरोस्मिन्नंतरं सुकोपसृप्यप्रसुद्धं ब्रह्मोच्यते य एष संप्रसादो जीवोऽस्मात्कार्यकरणसं
घातात् समुत्थाय आत्मानं तस्माद्विविच्य विविक्तमात्मानं स्वेन ब्रह्मरूपेणाभिनिष्पद्यते साक्षात्कारात्तदेव प्रत्यक्रूपं ज्योतिरुपसं
पद्यते प्राप्नोतीति व्याख्येयं यथा सुखं स्यात्तथा यः स्वपिति निर्व्याकुलं सुप्तः सुखं स्यादिति व्याख्यायते तद्वत् ज्योतिषोऽनात्मत्वं निरस्य
ति ॥ स एष इति ॥ संप्रसादेरत्वाच्च वृत्तिर्दिस्तुत्यंतरं ॥ अवस्थावदुत्थानमपि जीवस्य लिंगमित्याह ॥ तथेति ॥ तदाश्रितस्य तस्मा

अत्र हि संप्रसादशब्दः श्रुत्यंतरे सुषुप्तावस्थायां दृष्टत्वात्तदवस्थावंतं जीवं शक्नोत्युपस्थापयितुं नार्थां
तरं ॥ तथा शरीरव्यपाश्रयस्यैव जीवस्य शरीरात्समुत्थानं संभवति ॥ यथाकाशव्यपाश्रयाणां वाय्वादी-
नामाकाशात्समुत्थानं तद्वत् यथा चाऽदृष्टोपि लोके परमेश्वरविषय आकाशशब्दः परमेश्वरधर्मसमा-
भिव्याहारादाकाशो वै नाम नामरूपयोर्निर्वहिता इत्येवमादौ परमेश्वरविषयोऽभ्युपगत एवं जीवविषयोपि भवि-
ष्यति ॥ तस्मादितरपरामर्शात् दहरोस्मिन्नंतराकाश इत्यत्र स एव जीव उच्यते इति चेत् ॥ नैतदेवं स्यात् कस्मा-
दसंभवात् ॥ नहि जीवो बुद्ध्याद्युपाधिपरिच्छेदाभिमानी सन्नाकाशेनोपमीयते न चोपाधिधर्मानभिमन्यमान-
स्यापहतपाप्मत्वादयो धर्माः संभवंति ॥ प्रपंचितं चैतत्प्रथमसूत्रे ॥ अतिरेकाशंकापरिहारायत्वत्र पुनरुपन्य-
स्तं ॥ पठिष्यति चोपरिष्टादन्यार्थश्च परामर्श इति ॥ ५ ॥ १८ ॥

१९ स्यमुत्थाने दृष्टान्तः यथेति ॥ ननु क्वाप्याकाशशब्दो जी
वे न दृष्टः इत्याशंक्याऽवस्थोत्थानलिंगबलात्कल्प्य इत्याह ॥ यथा चेति ॥ नियामकाभावाज्जीवो दहरः किं न स्यादिति प्राप्ते नियामकमा
ह ॥ नैतदित्यादिना दहरे श्रुतधर्माणामसंभवात् न जीवो दहर इत्यर्थः तर्हि पुनरुक्तिस्तत्राह ॥ अतिरेकेति ॥ उत्तराद्वेत्यधिकाशंकानि
रासार्थमित्यर्थः ॥ का तर्हि जीवपरामर्शस्य गतिस्तत्राह ॥ पठिष्यतीति जीवस्य स्वापस्थानभूतब्रह्मज्ञानार्थोयं परामर्श इति वक्ष्यते ॥ १९ ॥

असंभवादिति हेतोरसिद्धिमाशंक्य परिहरति ॥ उत्तराच्चेदिति सूत्र निरस्तजीवाशंकायाः प्रजापतिवाक्यबलात्पुनः समुत्थानं क्रियते तत्र जीवस्यैवापहतपाप्मत्वादिग्रहणेनासंभवासिद्धेरित्यर्थः ॥ कथं तत्र जीवोक्तिस्तत्राह ॥ तत्रेत्यादिना ॥ यद्यप्युपक्रमे जीवशब्दो नास्ति तथाप्यपहतपाप्मत्वादिगुणकमात्मानमुपक्रम्य तस्य जाग्रदाद्यवस्थात्रयोपन्यासादवस्थालिंगेन जीवनिश्चयात्तस्यैव ते गुणाः संभवंतीति समुदायार्थः ॥ इंद्रप्रजापतिवृत्तेयस्सषड्इति ॥ प्राधान्यादक्षिग्रहणं सर्वैरिंद्रियैर्विषयदर्शनरूपजाग्रदवस्थापन्नमित्याह ॥

उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १९ ॥ इतरपरामर्शाद्या जीवाशंकाजाता सा असंभवान्निराकृता ॥ अथेदानीं मृतस्येवामृतसेकात्पुनः समुत्थानं जीवाशंकायाः क्रियते उत्तरस्मात्प्राजापत्याद्वाक्यात् ॥ तत्र हि य आत्मापहतपाप्मेत्यपहतपाप्मत्वादिगुणकं आत्मानमन्वेष्टव्यं विजिज्ञासितव्यं च प्रतिज्ञाय य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति ब्रुवन्नक्षिस्थं द्रष्टारं जीवमात्मानं निर्दिशति ॥ एतं त्वेव ते भूयोनुव्याख्यास्यामीति च तमेव पुनः पुनः परामृश्य य एष स्वप्ने महीयमानश्चरत्येष आत्मेति ॥ तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मेति च जीवमेवावस्थांतरगतं व्याचष्टे तस्यैव चापहतपाप्मत्वादि दर्शयत्येतदमृतमभयमेतद्ब्रह्मेति नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानीति च सुषुप्तावस्थायां

द्रष्टारमिति ॥ महीयमानः वासनामयैर्विषयैः पूज्यमानइति स्वप्नपर्याये ॥ तद्यत्रेति ॥ सुषुप्तिपर्याये च जीवमेव प्रजापतिर्व्याचष्ट इत्यन्वयः यत्र काले तदेतत्स्वपनं यथा स्यात्तथा सुप्तः सम्यक् अस्तो निरस्तः करणग्रामो यस्य स समस्तः अत एवोपहतकरणत्वात्तत्कृतकालुष्यहीनः संप्रसन्नः स्वप्नं प्रपंचमज्ञानमात्रत्वेन विलापयति अतोऽज्ञानसत्वात् मुक्ताद्विलक्षणः प्राज्ञः एषस्तस्यैव तत्त्वेन कारणशरीरसाक्षीतस्य साक्ष्यस्य सत्तास्फूर्तिप्रदत्वादात्मेत्यर्थः ॥ चतुर्थपर्याये ब्रह्मोक्तेस्तस्यैवापहतपाप्मत्वादिगुणा इत्या- ॥

शंकेतत्तस्यापि पर्यायस्य जीवत्वमाह ॥ नाहेति ॥ अहेति निपातः खेदार्थे विद्यमानो हींद्र उवाच ॥ न खलु सुप्तः पुमानयं संप्रति सुषुप्त
वस्थायामयं देवदत्तोऽहमित्येवमात्मानं जानाति ॥ नो एवेमानि भूतानि जानाति किंतु विनाशमेव प्राप्तो भवति नाहमत्र भोग्यं पश्या
मीति दोषमुपलभ्य पुनः प्रजापतिमुपससाद तं दोषं श्रुत्वा प्रजापतिराह ॥ एतमिति ॥ एतं तस्मात्प्रकृतादात्मनोऽन्यत्रान्यं न व्याख्या
स्यामीत्युपक्रम्य मघवन्मर्त्यं वा इदं शरीरमिति निंदापूर्वकं जीवमेव दर्शयतीत्यर्थः ॥ तस्मात्प्रजापतिवाक्यादतोऽसंभवासिद्धेः सिद्धांत

एतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्मादिति चोपक्रम्य शरीरसंबंधनिंदापूर्वकमेष संप्रसादोऽ
स्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमपुरुष इति जीवमेव शरीरात्स
मुत्थितं उत्तमपुरुषं दर्शयति ॥ तस्मादस्ति संभवो जीवे पारमेश्वराणां धर्माणामतो दहरोऽस्मिन्नंतराकाश इ
ति जीव एवोक्त इति चेत्कश्चिद्ब्रूयात्तं प्रतिब्रूयादाविर्भूतस्वरूपस्त्विति ॥ तुशब्दः पूर्वपक्षव्यावृत्त्यर्थो नोत्तर
स्मादपि वाक्याद्दिह जीवस्याशंकासंभवतीत्यर्थः ॥ कस्माद्यतस्तत्रापि आविर्भूतस्वरूपो जीवो विवक्ष्यते ॥ आ
विर्भूतं स्वरूपमस्येत्याविर्भूतस्वरूपः भूतपूर्वगत्या जीववचनं ॥ एतदुक्तं भवति ॥ य एषोऽक्षिणीत्यक्षिलक्षितं
द्रष्टारं निर्दिश्योदशरावब्राह्मणेनैनं शरीरात्मताया व्युत्थाप्यैतं त्वेव त इति पुनः पुनस्तमेव व्याख्येयत्वेनाकृ
ष्य स्वप्नसुषुप्तोपन्यासक्रमेण परं ज्योतिरुपसंपद्य स्वेन स्वरूपेणाभिनिष्पद्यत इति ॥ ९ यति ॥ तं प्रतीति ॥ अवस्थात्र
यशोधनेनाविर्भूतत्वं शोधितत्वमर्थस्य वाक्येऽन्यत्वत्यभिव्यक्तत्वमित्यर्थः ॥ नहि सूत्रे पुल्लिंगेन जीवोक्तिः कथं ज्ञानेन जीवत्वस्यानिवृ
त्तत्वादित्यत आह ॥ भूतपूर्वमिति ॥ ज्ञानात्पूर्वमविद्यातत्कार्यप्रतिबिंबितत्वरूपं जीवत्वमभूदिति कृत्वा ज्ञानानंतरं ब्रह्मरूपोऽपि जीवनाम्नो
च्यत इत्यर्थः ॥ विश्वतैजसप्राज्ञतुरीयपर्यायचतुष्टयात्मकप्रजापतिवाक्यस्य तात्पर्यमाह ॥ एतदिति ॥ जन्मनाशवत्वात्प्र- ॥ ॥

शा॰ भा॰ टी॰ ६ प्र॰ ११०

अ॰ पा॰ ३१२

तिविंचवद्विंवदेहोनात्मेतिज्ञापनार्थं प्रजापतिरिंद्रविरोचनौप्रत्युवाचोदशरावआत्मानमवेक्ष्ययदात्मनोनविजानीथस्तन्मेप्रब्रू
तमित्यादिब्राह्मणेनेत्याहोदशरावेतिउदकपूर्णेशरावेप्रतिबिंबात्मानंदेहंदृष्ट्वास्वस्याज्ञानंपतत्त्वमहंवाच्यमित्युक्तश्रुत्यर्थः श्रुत्याप्यवि
चार्याभिनिष्पद्यतइत्यत्रैतदुक्तंभवतीतिसंबंधः किमुक्तमित्यतआह ॥ यदस्येति ॥ जीवत्वरूपेणजीवंतत्याचष्टेलोकसिद्धत्वात् किं
तुतमनूद्यपरस्परव्यभिचारिणीभ्योऽवस्थाभ्योविविच्यब्रह्मस्वरूपंबोधयतिअतोपहत्पाप्मत्वादिधर्मकंतजीवइ

यदस्यपारमार्थिकंस्वरूपंपरंब्रह्मतद्रूपतयैनंजीवंव्याचष्टेनजैवेनरूपेणयत्परंज्योतिरुपसंपत्तव्यंश्रुतंतत्
त्परंब्रह्म ॥ तच्चापहतपाप्मत्वादिधर्मकं ॥ तदेवचजीवस्यपारमार्थिकंस्वरूपंतत्वमसीत्यादिशास्त्रेभ्योने
तरदुपाधिकल्पितं ॥ यावदेवहिस्थाणाविवपुरुषबुद्धिंद्वैतलक्षणामविद्यांनिवर्तयन्कूटस्थनित्यदृक्
स्वरूपमात्मानमहंब्रह्मास्मीतिनप्रतिपद्यतेतावज्जीवस्यजीवत्वं ॥ यदातुदेहेंद्रियमनोबुद्धिसंघातात्व्यु
त्थाप्यश्रुत्याप्रतिबोध्यते ॥ नासित्वंदेहेंद्रियमनोबुद्धिसंघातोनासिसंसारी ॥ किंतर्हितद्यत्सत्यंसआत्माचैत
न्यमात्रस्वरूपस्तत्वमसीति ॥ तदाकूटस्थनित्यदृक्स्वरूपंआत्मानंप्रतिबुध्यास्माच्छरीराद्यभिमानात्समुत्ति
ष्ठन्सएवकूटस्थनित्यदृक्स्वरूपआत्माभवतिसयोहवैतत्परमंब्रह्मवेदब्रह्मैवभवतीत्यादिश्रुतिभ्यः तदेव
चास्यपारमार्थिकंस्वरूपंयेनशरीरात्समुत्थायस्वेनरूपेणाभिनिष्पद्यते ॥ ९ ॥ एतदुक्तंभवतिशोधितस्यब्रह्माभेदेनतत्

द्रूपोक्तेरित्यर्थः ॥ एवमवस्थोपन्यासस्यविवेकार्थत्वान्नजीवलिंगत्वमेतदमृतमभयमेतद्ब्रह्मेतिलिंगोपेतश्रुतिविरोधादितिमंतव्यं
॥ ननुजीवत्वब्रह्मत्वविरुद्धधर्मवतोः कथमभेदस्तत्राह ॥ तदेवेति ॥ अन्वयव्यतिरेकाभ्यांजीवत्वस्याविद्याकल्पितत्वादविरोधइति
मत्वादृष्टांतेनान्वयमाह ॥ यावदिति ॥ व्यतिरेकमाह ॥ यदेति ॥ अविद्यायांसत्यांजीवत्वंतत्वाक्योत्थप्रबोधात्तन्निवृत्तौतन्निवृत्तिरित्याविद्यकंत

राम॰ ११०

समुत्थाय स्वेन स्वरूपेणाभिनिष्पद्यत इति श्रुतिं व्याख्यातुं आक्षिपति ॥ कथं पुनरित्यादिना ॥ कूटस्थनित्यस्य स्वरूपमित्यन्वयः ॥ मल
संगिनो हि क्रियया मलनाशादभिव्यक्तिर्न तु कूटस्थस्यासंगिन इत्याह ॥ सुवर्णेति द्रव्यांतरं पार्थिवो मलः अभिभूतेत्यस्य व्याख्यानम
नभिव्यक्तेति असाधारणो भास्वरत्वादिः ॥ अभिभावकः सौरालोकः ॥ जीवस्वरूपस्याभिभवे बाधकमाह ॥ दृष्टेति ॥ विज्ञानघनए
वेति श्रुत्या चिन्मात्रस्तावदात्मा तच्चैतन्यं चक्षुरादिजन्यवृत्तिव्यक्तं दृष्ट्यादिपदवाच्यं सत् व्यवहारांगं जीवस्य स्वरूपं भवति ॥ न ।

कथं पुनः स्वं च रूपं स्वेनैव च निष्पद्यत इति संभवति कूटस्थनित्यस्य ॥ सुवर्णादीनां तु द्रव्यांतरसंपर्काद
भिभूतस्वरूपाणामनभिव्यक्तासाधारणविशेषाणां क्षारप्रक्षेपादिभिः शोध्यमानानां स्वरूपेणाभिनिष्प
त्तिः स्यात् ॥ तथा नक्षत्रादीनामहन्यभिभूतप्रकाशानामभिभावकवियोगे रात्रौ स्वरूपेणाभिनिष्पत्तिः
स्यात् न तु तथात्मचैतन्यज्योतिषो नित्यस्य केनचिदभिभवः संभवत्यसंसर्गित्वात् व्योमवत् इव ॥ दृष्टविरो
धाच्च दृष्टिश्रुतिमतिविज्ञानयो हि जीवस्य स्वरूपं ॥ तच्च शरीरात् समुत्थितस्यापि जीवस्य सतत निष्पन्नमे
व दृश्यते ॥ सर्वो हि जीवः पश्यन् शृण्वन्मन्वानो विजानन्व्यवहरत्यन्यथा व्यवहारानुपपत्तेः ॥ तच्चेच्छरी
रात्समुत्थितस्य निष्पद्येत प्राक्समुत्थानात् दृष्टो व्यवहारो विरुध्येत ॥ अतः किमात्मकमिदं शरीरात्समु
त्थानं किमात्मिका वा स्वरूपेणाभिनिष्पत्तिरित्यत्रोच्यते ॥ ९ स्याभिभूतत्वे दृष्टो व्यवहारो विरुध्येत हेत्वभावाद्व्यवहारो
न स्यादित्यर्थः ॥ अत्रस्यापि स्वरूपं दृष्टिषु व्यक्तमित्यंगीकार्यं व्यवहारदर्शनादित्याह ॥ तच्चेति ॥ अन्यथेत्युक्तं स्फुटयति ॥ तच्चेदि
ति ॥ स्वरूपं चेत् ज्ञानित्वं सर्वव्यक्तं येन ज्ञानात्पूर्वं व्यवहारो ऽच्छिन्नित्यर्थः ॥ अतः सदैव व्यक्तस्वरूपत्वादित्यर्थः सदा दृष्टिषु व्यक्तस्य
वस्तुनः संगस्यात्मनः आविद्यकदेहाद्यविवेकरूपस्य मलसंगस्य सत्वात्तद्विवेकापेक्षया समुत्थानादिश्रुतिरित्युत्तरमाह अत्रेति

वेदनाहर्षशोकादिः अविविक्तमिवेति तादात्म्यस्य संगस्य कल्पितत्वमुक्तं न त्वकल्पितसंगे दृष्टान्तो यथेति ॥ श्रुतिकृतमिति ॥ त्वंपदार्थ श्रुत्या योऽयं विज्ञानमयः प्राणेष्वित्याद्यया सिद्धमित्यर्थः ॥ प्राणादिभिन्नशुद्धत्वंपदार्थज्ञानस्य वाक्यार्थसाक्षात्कारः फलमित्याह ॥ के केवलेति ॥ सशरीरत्वस्य सत्यत्वात् समुत्थानमुक्तं निरिति व्याख्येयं न विवेक इत्याशंक्याह ॥ तथा विवेकेति ॥ उक्तश्रुत्यनुसारेणेत्य



प्राक्विवेकविज्ञानोत्पत्तेः शरीरेंद्रियमनोबुद्धिविषयवेदनोपाधिभिरविविक्तमिवजीवस्यदृगादिज्यो तिःस्वरूपंभवति यथाशुद्धस्यस्फटिकस्यस्वाच्छ्यंशौक्ल्यंचस्वरूपंप्राक्विवेकग्रहणाद्रक्तनीलाद्युपाधिभिर विविक्तमिवभवति ॥ प्रमाणजनितविवेकग्रहणात्तु पराचीनः स्फटिकः स्वाच्छ्येन शौक्ल्येनचस्वेनरूपेणा भिनिष्पद्यतइत्युच्यते प्रागपितथैवसन् तथादेहाद्युपाध्यविविक्तस्यैवसतोजीवस्यश्रुतिकृतंविवेकवि ज्ञानंशरीरात्समुत्थानंविवेकविज्ञानफलंस्वरूपेणाभिनिष्पत्तिः केवलात्मस्वरूपावगतिस्तथाविवेकावि वेकमात्रेणैवात्मनोऽशरीरत्वंशरीरत्वंचमंत्रवर्णात् अशरीरंशरीरेष्विति ॥ शरीरस्थोपिकौंतेयनकरोतिन लिप्यतइतिचशरीरत्वाऽशरीरत्वविशेषाभावस्मरणात् ॥ तस्माद्विवेकविज्ञानाभावादनाविर्भूतस्वरूपः सन्विवेकविज्ञानादाविर्भूतस्वरूपइत्युच्यते ॥ नत्वन्यादृशावाविर्भावानाविर्भावौस्वरूपस्यसंभवतः स्व रूपत्वादेव ॥

र्थः ॥ शरीरेष्वशरीरमवस्थितमिति श्रुतेः ॥ अविवेकमात्रकल्पितं सशरीरत्वं अतो विवेक एव समुत्थानमित्य र्थः ॥ ननु स्वकर्मार्जिते शरीरे भोगस्यापरिहार्यत्वात् कथं जीवत एव स्वरूपाविर्भाव इत्यत आह ॥ शरीरस्थोपीति ॥ अशरीरत्ववत् शरीर स्थस्यापि बंधाभावस्मृतेर्जीवतो मुक्तिर्युक्तेत्यर्थः ॥ अविरुद्धे श्रुत्यर्थे सूत्रशेषो युक्त इत्याह ॥ तस्मादिति ॥ अन्यादृशौ सत्यावित्यर्थः ॥ ६ ॥

ज्ञानाज्ञानकृताथाविर्भावतिरोभावाविति स्थिते भेदोऽप्यंशांशित्वकृतो निरस्त इत्याह॥ एवमिति॥ अंशादिशून्यत्वमसंगत्वं आत्माद्यस्यत
व्याप्यज्ञातिशून्यः विभुत्वात् व्योमवदित्यात्मैक्यसिद्धेर्भेदो मिथ्येत्यर्थः प्रजापतिवाक्याच्च भेदो मिथ्येत्याकांक्षापूर्वकमाह कुतश्चेत्या
दिना॥ एतच्छब्देन स्वसत्यत्वमेव नास्तीति कुतः छायायां ब्रह्मदृष्टिपरमिदं वाक्यं नाभेदपरमित्यत आह॥ नापीति॥ यस्य ज्ञानान्ते॥

एवं मिथ्याज्ञानकृत एव जीवपरमेश्वरयोर्भेदो न वस्तुकृतः॥ व्योमवदसंगत्वाविशेषात्॥ कुतश्चै
तदेवं प्रतिपत्तव्यं॥ यतो य एषोऽक्षिणी पुरुषो दृश्यत इत्युपदिश्यैतदमृतमभयमेतत् ब्रह्मेत्युपदिशति॥
योऽक्षिणि प्रसिद्धो द्रष्टृत्वेन विभाव्यते॥ सोऽमृताभयत्वलक्षणात् ब्रह्मणोऽन्यश्चेत्स्यात्ततोऽमृताभयब्रह्म
सामानाधिकरण्यं न स्यात् नापि प्रतिच्छायात्मायमक्षिलक्षितो निर्दिश्यते॥ प्रजापतेर्मृषावादित्वप्रसंगा
त् तथा द्वितीयेऽपि पर्याये य एष स्वप्ने महीयमानश्चरतीति न प्रथमपर्यायनिर्दिष्टादक्षिपुरुषात् द्रष्टुर
न्यो निर्दिष्ट एतं त्वेव ते भूयोऽनुव्याख्यास्यामीत्युपक्रमात्॥ किंचाहमद्य स्वप्ने हस्तिनमद्राक्षं नेदानीं तं प
श्यामीति दृष्टमेव प्रतिबुद्धः प्रत्याचष्टे॥ द्रष्टारं तु तमेव प्रत्यभिजानाति य एवाहं स्वप्नमद्राक्षं स एवाहं जा
गरितं पश्यामीति॥ तथा तृतीयेऽपि पर्याये नाह खल्वयमेवं संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवे
मानि भूतानीति सुषुप्त्यवस्थायां विशेषविज्ञानाभावमेव दर्शयति॥ न विज्ञातारं प्रतिषेधति यत्तु तत्र विना
तत्कल्पना सर्वकामप्राप्तिस्तमात्मानमन्विच्छाव इति प्रवृत्तयोरिंद्रविरोचनयोर्येयघनात्मच्छायां ‘‘ शमेवापीतो भवतीति॥ ६
प्रजापतिर्ब्रूयात् तदा मृषावादी स्यादित्यर्थः॥ प्रथमवत् द्वितीयादिपर्यायेष्वावृत्तास्ववस्थासु अनुस्यूतात्मा ब्रह्मत्वेनोक्त इत्याह
॥ तथेति॥ अवस्थाभेदेऽप्यनुस्यूतौ युक्तिमाह किंचेति॥ सुषुप्तौ ज्ञातुर्व्यावृत्तिमाशंक्याह॥ तथा तृतीय इति॥ ६॥ ~~ ॥ ६॥

सुषुप्तौ निर्विकल्पज्ञानरूप आत्मास्तीत्यत्र बृहदारण्यकश्रुतिमाह ॥ नहीति ॥ बुद्धेः साक्षिणो नाशो नास्ति नाशकाभावादित्यर्थः ॥ एवमवस्थाभिरसंगत्वेनोक्त आत्मैव तुरीयेऽपि ब्रह्मत्वेनोक्त इत्याह ॥ तथेति ॥ श्रुतेरेकदेशिव्याख्यां दूषयति ॥ केचित्त्विति जीवपरत्वे भेदादिति भावः ॥ श्रुतिबाधान्नैवमित्याह ॥ तेषामिति ॥ सन्निहितो जीव एव सर्वनामार्थ इत्यर्थः ॥ उक्तस्य पुनरुक्तौ भूय इति युज्यते

तदपि विशेषविज्ञानविनाशाभिप्रायमेव ॥ न विज्ञातृविनाशाभिप्रायं। नहि विज्ञातुर्विज्ञातेर्विपरिलोपो। विद्यतेऽविनाशित्वादिति श्रुत्यंतरात् ॥ तथा चतुर्थेऽपि पर्याये एतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्मादित्युपक्रम्य मघवन्मर्त्यं वा इदं शरीरमित्यादिना प्रपंचेन शरीराद्युपाधिसंबंधप्रत्याख्यानेन संप्रसादशब्दोदितं जीवं स्वेन रूपेणाभिनिष्पद्यत इति ब्रह्मस्वरूपापन्नं दर्शयन् न परस्माद्ब्रह्मणोऽमृताभयस्वरूपादन्यं जीवं दर्शयति। केचित्तु परमात्मविवक्षायां एतं त्वेव त इति जीवाकर्षणमन्याय्यं मन्यमाना एतमेव वाक्योपक्रमसूचितमपहतपाप्मत्वादिगुणकमात्मानं ते भूयोऽनुव्याख्यास्यामीति कल्पयन्ति तेषामेतमिति सन्निहितावलंबिनी सर्वनामश्रुतिर्विप्रकृष्येत भूय श्रुतिश्चोपरुध्येत ॥ पर्यायांतराभिहितस्य पर्यायांतरेऽनभिधीयमानत्वात् एतं त्वेव त इति च प्रतिज्ञाय प्राक् चतुर्थात्पर्यायादन्यमन्यं व्याचक्षाणस्य प्रजापतेः प्रतारकत्वं प्रसज्येत ॥ तस्माद्यदविद्याप्रत्युपस्थापितमपारमार्थिकं जैवं रूपं कर्तृ भोक्तृ रागद्वेषादिदोषकलुषितमनेकानर्थयोगि तद्विलयनेन तद्विपरीतमपहतपाप्मत्वादिगुणकं पारमेश्वरं स्वरूपं विद्यया प्रतिपा

तवतूपक्रांतपरमात्मनश्चतुर्थ एवोक्तिस्तद्बाध इत्याह ॥ भूय इति ॥ लोकसिद्धजीवानुवादे ॥ द्यते ॥ सर्पादिविलयनेनेव रज्ज्वादेः प्रत्यक्त्वं बोध्यत इति स्वमतमुपसंहरति ॥ तस्मादिति ॥ व्याख्यानांतरासंभवादित्यर्थः ॥ विलयनं शोधनं विद्यया महावाक्येनेत्यर्थः

येतु संसारं सत्यमिच्छन्ति तेषामिदं शारीरकमेवोत्तरमित्याह॥ अपरेत्वित्यादिना॥ शारीरकस्यार्थं संक्षेपेणोपदिशति एक एवेति अविद्यामा
ययोर्भेदं निरस्यति तुल्यमानाधिकरण्यं आवरणविक्षेपशक्तिरूपशब्दप्रवृत्तिनिमित्तभेदात्सहप्रयोगः॥ ब्रह्मैवाविद्यया संसरतीति ततोन्यो जी-
व इति शारीरकार्थं इत्यर्थः॥ तर्हि सूत्रकारः किमिति भेदं ब्रूते तत्राह। यत्त्विति॥ परमात्मनोऽसंसारित्वसिध्यर्थं जीवाद्भेदं द्रढयति॥ तस्यासंसा

अपरे तु वादिनः पारमार्थिकमेव जैवं रूपमिति मन्यंते॥ अस्मदीयाश्च केचित् तेषां सर्वेषामात्मैकत्वसम्यग्दर्शन
प्रतिपक्षभूतानां प्रतिबोधायेदं शारीरकमारब्धं एक एव परमेश्वरः कूटस्थनित्यो विज्ञानधातुरविद्यया मायया
मायाविवदनेकधा विभाव्यते॥ नान्यो विज्ञानधातुरस्तीति॥ यत्त्विदं परमेश्वरवाक्ये जीवमाशंक्य प्रतिषेधति
सूत्रकारो नासंभवादित्यादिना॥ तत्रायमभिप्रायः नित्यशुद्धबुद्धमुक्तस्वभावे कूटस्थनित्य एकस्मिन्नसंगेप
रमात्मनि तद्विपरीतं जैवं रूपं व्योम्नीव तलमलादि परिकल्पितं॥ तदात्मैकत्वप्रतिपादनपरैर्वाक्यैर्न्यायोपेतैर्द्वैत
वादप्रतिषेधैश्चापनेष्यामीति परमात्मनो जीवादन्यत्वं द्रढयति॥ जीवस्य तु न परस्मादन्यत्वं प्रतिपिपादयिष
ति॥ किं त्वनुवदत्येवाविद्याकल्पितं लोकप्रसिद्धं जीवभेदं॥ एवं हि स्वाभाविककर्तृत्वभोक्तृत्वानुवादेन प्रवृत्ताः
कर्मविधयो न विरुध्यंत इति मन्यते॥ प्रतिपाद्यं तु शास्त्रार्थमात्मैकत्वमेव दर्शयति॥ शास्त्रदृष्ट्या तूपदेशो वा
मदेववदित्यादिना॥ वर्णितश्चास्माभिर्विद्वदविद्वद्भेदेन कर्मविधिविरोधपरिहारः॥१९॥

रित्वनिश्चयाभावे तदा
भेदोक्तावपि जीवस्य संसारित्वानपायादित्यर्थः॥ अधिष्ठानस्य कल्पिताद्भेदेपि कल्पितस्याधिष्ठानान्न पृथक्सत्वमित्याह॥ जीवस्य त्विति॥
कल्पितभेदानुवादस्य फलमाह॥ एवं हीति॥ सूत्रेषु भेदो नोक्त इति भ्रांतिं निरस्यति॥ प्रतिपाद्यमिति॥ आत्मेति तूपगच्छंतीत्यादिसूत्राणि आ
दिपदार्थः॥ नन्वद्वैतस्य शास्त्रार्थत्वे द्वैतापेक्षविधिविरोधस्तत्राह॥ वर्णितश्चेति॥ अद्वैतमजानतः कल्पितद्वैताश्रया विधयो न विरुध्यंत इति सर्वं

एवं प्रजापतिवाक्ये जीवानुवादेन ब्रह्मण एवापहतपाप्मत्वाद्युक्तेर्जीवेन दहरसंभवान्न जीवो दहर इत्युक्तं तर्हि जीवपरामर्शस्य का गतिरित्यत
आह ॥ अन्यार्थश्चेति ॥ सूत्रं व्याचष्टे ॥ अथेत्यादिना ॥ प्रकृते दहरे विशेषो गुणस्तदुपदेशोऽपि नेत्यर्थः ॥ तत्र दहरवाक्यशेषरूपं संप्रसाद

अन्यार्थश्च परामर्शः २० ॥ अथ यो दहरवाक्यशेषे जीवपरामर्शो दर्शितः अथ य एष संप्रसाद इत्यादिः ॥ स दहरे परमेश्वर उपास्यमाने न जीवोपासनोपदेशो न प्रकृतविशेषोपदेश इत्यनर्थकत्वं प्राप्नोतीत्यत आह ॥ अन्यार्थोऽयं जीवपरामर्शः न जीवस्वरूपपर्यवसायी ॥ किं तर्हि परमेश्वरस्वरूपपर्यवसायी ॥ कथं संप्रसादशब्दोदितो जीवो जागरितव्यवहारे देहेन्द्रियपञ्जराध्यक्षो भूत्वा तद्वासनानिर्मितांश्च स्वप्नान्नाडीचरोऽनुभूय श्रान्तः शरणं प्रेप्सुरुभयरूपादपि शरीराभिमानात्समुत्थाय सुषुप्त्यवस्थायां परं ज्योतिराकाशशब्दितं परं ब्रह्मोपसंपद्य विशेषविज्ञानवत्त्वं च परित्यज्य स्वेन स्वरूपेणाभिनिष्पद्यते यदस्योपसंपत्तव्यं परं ज्योतिर्येन स्वेन रूपेणायमभिनिष्पद्यते स एष आत्मापहतपाप्मत्वादिगुण उपास्य इत्येवमर्थोऽयं जीवपरामर्शः परमेश्वरवादिनोऽप्युपपद्यते ॥ २० ॥ अल्पश्रुतेरिति चेत्तदुक्तं ॥ २१ ॥ यदप्युक्तं दहरोऽस्मिन्नन्तराकाश इत्याकाशस्याल्पत्वं श्रूयमाणं परमेश्वरे नोपपद्यते ॥ जीवस्य त्वाराग्रोपमितस्याल्पत्वमवकल्पत इति तस्य परिहारो वक्तव्यः ॥ उक्तो ह्यस्य परिहारः परमेश्वरस्यापेक्षिकमल्पत्वमवकल्पत इत्यर्भकौकस्त्वात्तद्व्यप--देशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्चेत्यत्र स एवेह परिहारोऽनुसंधातव्य इति सूचयति ॥ श्रुत्यैव चेदमल्पत्वं प्रत्युक्तं प्रसिद्धेनाकाशेनोपमिमानया यावान्वा (अयमाकाशस्तावानेषोऽन्तर्हृदय आ

वाक्यमाशंकापूर्वकं दहरब्रह्मपरत्वेन व्याचष्टे ॥ कथमित्यादिना ॥ २० ॥ उपास्यत्वाद
ल्पत्वमुक्तमिति व्याख्याय श्रुत्या निरस्तमित्यर्थान्तरमाह ॥ श्रुत्यैव चेदमिति ॥ एवं दहरवाक्यं प्रजापतिवाक्यं च सगुणे निर्गुणे च समन्वि

अनुकृतेस्तस्य च ॥ मुंडकवाक्यमुदाहरति ॥ न तत्रेति ॥ तस्मिन्ब्रह्मणि विषयेन भाति तन्न भासयतीति यावत् ॥ यदा चंद्रभास्करादिर्न भासयति।
तदाल्पदीप्तेरग्नेः का कथेत्याह ॥ कुत इति ॥ किंच सर्वस्य सूर्यादेस्तद्भास्यत्वान्न तद्भासकत्वमित्याह ॥ तमेवेति ॥ अनुगमनवदनुभानं स्व
गतमिति शंकां निरस्यति ॥ तस्येति ॥ तत्रेति सप्तम्याः सति विषये च साधारण्यात्संशयमाह ॥ तत्रेति ॥ पूर्वत्रात्मश्रुत्यादिवलादाकाशशब्द
स्य रूढित्यागादीश्वरे वृत्तिराश्रिता तथेहापि सति सप्तमीवलात् वर्तमानार्थत्यागेन यस्मिन्सति सूर्यादयो न भास्यंति स तेजोविशेष उपास्य

अनुकृतेस्तस्य च ॥ २२ ॥ न तत्र सूर्यो भाति न चंद्रतारकं नेमा विद्युतो भांति कुतोऽयमग्निः ॥ तमेव भांतमनुभा
ति सर्वं तस्य भासा सर्वमिदं विभातीति समामनंति ॥ तत्र यं भांतमनुभाति सर्वं यस्य च भासा सर्वमिदं विभाति स
किं तेजोधातुः कश्चिदुत प्राज्ञ आत्मेति विचिकित्सायां तेजोधातुरिति तावत्प्राप्तं ॥ कुतः तेजोधातूनामेव सूर्या
दीनां भानप्रतिषेधात् ॥ तेजःस्वभावकं हि चंद्रतारकादि तेजःस्वभावक एव सूर्ये भासमानेऽहनि न भासत इ
ति प्रसिद्धं ॥ तथा सह सूर्येण सर्वमिदं चंद्रतारकादि यस्मिन्न भासते सोऽपि तेजःस्वभावक एव कश्चिदित्यवग
म्यते ॥ अनुभानमपि तेजःस्वभावकस्यैवोपपद्यते ॥ समानस्वभावकेष्वनुकारदर्शनात् ॥ गच्छंतमनुगच्छती
तिवत् तस्मात्तेजोधातुः कश्चिदित्येवं प्राप्ते ब्रूमः ॥ प्राज्ञ एवायमात्मा भवितुमर्हति ॥ कस्मात् अनुकृतेः अनुकर
णमनुकृतिः ॥ यदेतत्तमेव भांतमनुभाति सर्वमित्यनुभानं तत्प्राज्ञपरिग्रहेऽवकल्पते ॥ ९ इति भविष्यदर्थे वृत्तिरा

श्रवणीया अधुना भासमाने सूर्यादौ न भातीति विरोधात् इति दृष्टांतेन पूर्वपक्षयति ॥ तेजोधात्विति ॥ तेजोध्यानं निर्गुणस्वयंज्योतिरात्म
ज्ञानमित्युभयत्र फलं तेजोधातुत्वे लिंगमाह ॥ तेजोधातूनामिति ॥ यत्तेजस्सोऽभिभावकं तत्तेज इति व्याप्तिमाह ॥ तेजःस्वभावकमिति यस्मिन्सति
यन्न भाति तत्तदनु तद्भातीति विरुद्धमित्यत आह ॥ अनुभानमिति ॥ ततो निकृष्टभानं विवक्षितमिति भावः ॥ मुख्यसंभवे विवक्षाऽनुपपत्तेः मुख्या

तुमानलिंगात् सर्वभासकः परमात्मा स्वप्रकाशको न ग्राह्य इति
सिद्धांतमाह ॥ प्राज्ञ इति ॥ प्राज्ञत्वं स्वप्रकाशकत्वम् ॥

भासकत्वाय समुक्तं तत्र श्रुतिमाह भारूपइति मानाभावाच्च तेजोधातुर्न ग्राह्य इत्याह ॥ नत्विति ॥ किंच सूर्योदयस्तेजोन्तरभानमनु न भान्तीति ते
जस्त्वात्प्रदीपवदित्याह ॥ समत्वाच्चेति ॥ योयमनुकरोति स तज्जातीय इति नियमो नास्तीत्याह ॥ नायमेकान्त इति ॥ पौनरुक्त्यमाशंक्योक्ता
नुवादपूर्वकं सूत्रोक्तं हेत्वन्तरं व्याचष्टे ॥ अनुकृतेरिति ॥ तमेव भान्तमित्येवकारोक्तं तद्भानं विना सर्वस्य पृथग्भानाभावरूपं अनुभानमनु

भारूपः सत्यसंकल्प इति हि प्राज्ञमात्मानमामनन्ति ॥ न तु तेजोधातुं कंचित्सूर्यादयोनुभान्तीति प्रसिद्धं ॥ स
मत्वाच्च तेजोधातूनां सूर्यादीनां न तेजोधातुमन्यं प्रत्यपेक्षास्ति यं भान्तमनुभायुः ॥ न हि प्रदीपः प्रदीपान्तर
मनुभाति ॥ यदप्युक्तं समानस्वभावकेष्वनुकारो दृश्यत इति ॥ नायमेकान्तो नियमः भिन्नस्वभावकेष्वप्य
नुकारो दृश्यते यथा सुतप्तोयःपिंडोग्न्यनुकृतिरग्निं दहन्तमनुदहति भौमं वा रजो वायुं वहन्तमनुवहतीति ॥
अनुकृतेरित्यनुभानमनुकारः सूचित तस्य चेति चतुर्थपादमस्य श्लोकस्य सूचयति तस्य भासा सर्वमिदं विभा
तीति तद्धेतुकं भानं सूर्यादेरुच्यमानं प्राज्ञमात्मानं गमयति ॥ तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेमृत
मिति हि प्राज्ञमात्मानमामनन्ति ॥ तेजोन्तरेण सूर्यादितेजो विभातीत्यप्रसिद्धं विरुद्धं च तेजोन्तरेण तेजोन
रस्य प्रतिघातात् ॥ अथवा न सूर्यादीनामेव श्लोकपरिपठितानामिदं तद्धेतुकं विभानमुच्यते ॥ किं तर्हि स
र्वमिदमित्यविशेषश्रुतेः सर्वस्यैवास्य नामरूपक्रियाकारकफलजातस्य याभिव्यक्तिः सा ब्रह्मज्योतिःस
त्तानिमित्ता ॥ यथा सूर्यादिज्योतिःसत्तानिमित्ता सर्वस्य रूपजातस्याभिव्यक्तिस्तद्वत् ॥ श्री० ॥ श्री० ॥

कृतेरित्यनेनोक्तं ॥ तस्य चेति सर्वभासकत्वमुक्तं इत्यपौनरुक्त्यमित्यर्थः ॥ आत्मनः सूर्यादिभासकत्वं श्रुत्यंतरप्रसिद्धमविरुद्धं
चेत्याह ॥ तद्देवा इति ॥ सर्वशब्दः प्रकृतसूर्यादिवाचकत्वेन व्याख्यातः संप्रति तस्याऽसंकुचद्वृत्तितां मत्वार्थांतरमाह ॥ अथवेति

तत्रेति सर्वनामश्रुत्या प्रकृतं ब्रह्म ग्राह्यमित्याह ॥ न तत्र सूर्य इति ॥ किंच सप्तब्रह्मपरपूर्वमंत्राकांक्षापूरकत्वादयं मंत्रो ब्रह्मपर इत्याह अ
नेन रूपेणेति ॥ हिरण्मये ज्योतिर्मये अन्नमयाद्यपेक्षया परे कोशे आनंदमयाख्ये पुच्छशब्दितं ब्रह्म विरजं आगंतुकमलशून्यं निष्कलं निरव
यवं शुभ्रं नैसर्गिकमलशून्यं सूर्यादिसाक्षिभूतं ब्रह्म विभ्रसिद्धमित्यर्थः सतिसप्तमीपक्षमनुवदति ॥ यदपीति ॥ सूर्याद्यभिभावके तेजो
न्तरे प्रामाणिके न स्येह ग्रहणशंका स्यात् न तत्र प्रमाणमस्तीत्याह ॥ तत्रेति ॥ सिद्धांतेन न तत्रेति वाक्यार्थः कथमित्याशंक्याह ॥ ब्रह्मण्य

न तत्र सूर्यो भातीति च तत्र शब्दमाहृत्य प्रकृतग्रहणं दर्शयति ॥ प्रकृतं च ब्रह्म यस्मिन्द्यौः पृथिवी चांतरिक्ष
मोतमित्यादिना ॥ अनेन रूपेण च हिरण्मये परे कोशे विरजं ब्रह्म निष्कलं ॥ तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो वि
दुरिति ॥ कथं तत् ज्योतिषां ज्योतिरित्यत इदमुत्थितं ॥ न तत्र सूर्यो भातीति ॥ यदप्युक्तं सूर्यादीनां तेजसां भानप्र
तिषेधस्तेजोधातावेवान्यस्मिन्नवकल्पते सूर्य इवेतरेषामिति ॥ तत्र तु स एव तेजोधातुरन्यो न संभवतीत्यु
पपादितं ॥ ब्रह्मण्यपि चैषां भानप्रतिषेधोऽवकल्पते ॥ यतो यदुपलभ्यते तत्सर्वं ब्रह्मणैव ज्योतिषोपलभ्यते ॥ ब्र
ह्म तु नान्येन ज्योतिषोपलभ्यते स्वयंज्योतिःस्वरूपत्वात् ॥ येन सूर्योदयस्तस्मिन्भायुः ॥ ब्रह्म ह्यन्यद्व्यनक्ति न तु
ब्रह्मान्येन व्यज्यते ॥ आत्मनैवायं ज्योतिषास्ते ॥ अगृह्यो न हि गृह्यत इत्यादिश्रुतिभ्यः ॥ २२ ॥ अपि च स्मर्यते ॥ २३ ॥

वीति ॥ सतिसप्तमीपक्षे न भातीति श्रुतं वर्तमानत्वं व्यक्तात्तस्मिन्सति न भास्यतीत्यश्रुतं भविष्यत्त्वं कल्पनीयं प्रत्यक्षविरोधनिरासाय विष
यसप्तमीपक्षे तु न भासयतीत्यश्रुतणिजध्याहारमात्रं कल्प्यं न श्रुतत्याग इति लाघवं ॥ अतो ब्रह्मणि विषये सूर्यादेर्भासकत्वनिषेधेन ब्र
ह्मभास्यत्वमुच्यत इत्यर्थः ॥ येनात्मभास्यत्वेन हेतुना सूर्यादयस्तस्मिन्ब्रह्मणि विषये भासकाः स्युः तथा तु ब्रह्मान्येन नोपलभ्यते स्वप्र
काशत्वादिति योजना उक्तमेव श्रुत्यंतरेण दृढयति ॥ ब्रह्मेति ॥ स्वप्रकाशत्वेऽन्याभास्यत्वे च श्रुतिद्वयं ॥ ग्रहणायोग्यत्वादग्राह्य इत्यर्थः ॥

णिजध्याहारं प्रदेशस्मृतिबलमप्यस्तीत्याह ॥ अपिचेति ॥ सूत्रं व्याचष्टे ॥ अपिचेति ॥ अभास्यत्वे सर्वभासकत्वे च श्लोकद्वयं द्रष्टव्यं ॥ तस्माद्द्युभ
नमंत्रो ब्रह्मणि समन्वित इति सिद्धं ॥ २३ ॥ शब्दादेव प्रमितः ॥ काठकवाक्यं पठति ॥ अंगुष्ठेति ॥ पुरुषः पूर्णोप्यात्मनि देहमध्ये अंगुष्ठमात्रे हृदये ति
ष्ठतीत्यंगुष्ठमात्र उच्यते तस्यैव परमात्मत्ववादिवाक्यांतरमाह ॥ तमेति ॥ अधूमकमिति पठनीयं ॥ योंगुष्ठमात्रो जीवः स वस्तुतो निर्धूमज्योतिर्व
न्निर्मलप्रकाशरूप इति तत्त्वमर्थं संशोध्य तस्य ब्रह्मत्वमाह ॥ ईशान इति ॥ तस्याद्वितीयत्वमाह ॥ स एवेति ॥ कालत्रयेपि स एवास्ति नान्य इति ॥

अपि चेदृग्रूपत्वं प्राज्ञस्यैवात्मनः स्मर्यते भगवद्गीतासु ॥ न तद्भासयते सूर्यो न शशांको न पावकः ॥ यद्गत्वा न नि
वर्तंते तद्धाम परमं ममेति ॥ यदादित्यगतं तेजो जगद्भासयतेऽखिलं ॥ यच्चंद्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक
मिति च ॥ ७ ॥ शब्दादेव प्रमितः ॥ २४ ॥ अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठतीति श्रूयते ॥ तथांगुष्ठमात्रः पुरु
षो ज्योतिरिवाधूमकः ॥ ईशानो भूतभव्यस्य स एवाद्य स उ श्व एतद्वै तदिति च ॥ तत्र योयमंगुष्ठमात्रः पुरुषः श्रू
यते स किं विज्ञानात्मा किंवा परमात्मेति संशयः ॥ तत्र परिमाणोपदेशात् तावद्विज्ञानात्मेति प्राप्तं ॥ नह्यनंता
यामविस्तारस्य परस्य परमात्मनोंगुष्ठपरिमाणमुपपद्यते ॥ विज्ञानात्मनस्तु उपाधिमत्त्वात्संभवति कयाचित्क
ल्पनयांगुष्ठमात्रत्वं ॥ स्मृतेश्च ॥ अथ सत्यवतः कायात् पाशबद्धं वशं गतं ॥ अंगुष्ठमात्रं पुरुषं निश्चकर्ष यमो बला

चित् यत्तु नचिकेतसा पृष्टं ब्रह्म तदेतदेवेत्यर्थः ॥ परिमाणेशानशब्दाभ्यां संशयमाह ॥ तत्रेति ॥ यथानुमानादिलिंगात् णिजध्याहारेण
सूर्योद्यगोचरो ब्रह्मेत्युक्तं तथा प्रथमश्रुतपरिमाणलिंगात् जीवमतीतावीशानोस्मीति ध्यायेदिति विध्यध्याहारेण ध्यानपरं वाक्यमिति पूर्व
पक्षयति ॥ तत्र परिमाणेति ॥ पूर्वपक्षे ब्रह्मदृष्ट्या जीवोपास्तिः सिद्धांते तु प्रत्यग्ब्रह्मैक्यज्ञानं फलमिति मंतव्यं ॥ आयामो दैर्घ्यं विस्तारो म
हत्त्वमिति भेदः ॥ कयाचिदिति ॥ अंगुष्ठमात्रहृदयस्य विज्ञानशब्दितबुद्ध्यभेदाध्यासकल्पनयेत्यर्थः ॥ स्मृतिसंवादादप्यंगुष्ठमात्रो जीव इ

तत्रापीश्वरः किं न स्यादित्यत आह ॥ नहीति ॥ प्रभवति संयमने ममापि विष्णुरिति यमस्येश्वरनियम्यत्वस्मरणादिति भावः ॥ भूतभव्यस्येत्यु
पपदाद्बाधकाभावाच्चेईशान इतीशानशब्दान्निरंकुशमीशितृत्वं भातीति श्रुत्या लिंगं बाध्यमिति सिद्धांतयति ॥ परमात्मैवेति प्रकरणाच्च
ब्रह्मपरमिदं वाक्यमित्याह ॥ स एतदिति ॥ शब्दो वाक्यं लिंगात् दुर्बलमित्याशंक्याह शब्दादिति ॥ २४ ॥ करःसकनिष्ठिकोऽरत्निः ॥ मु

नहि परमेश्वरो बलात्प्रयमेन निष्कृष्टुं शक्यस्तेन तत्र संसार्यंगुष्ठमात्रो निश्चितः ॥ स एवेहापीत्येवं प्राप्ते ब्रूमः ॥
परमात्मैवायमंगुष्ठमात्रपरिमितः पुरुषो भवितुमर्हति ॥ कस्मात् शब्दात् ईशानो भूतभव्यस्येति ॥ न ह्य
न्यः परमेश्वरात् भूतभव्यस्य निरंकुशमीशिता ॥ एतद्वै तदिति च प्रकृतं पृष्टमिहानुसंदधाति ॥ एतद्वै तद्यत्पृ
ष्टं ब्रह्मेत्यर्थः पृष्टं चेह ब्रह्म अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतादन्यत्र भूताच्च भव्याच्च यत्त
त्पश्यसि तद्वदेति शब्दादेवेत्यभिधानश्रुतेरेवेशान इति परमेश्वरोऽवगम्यत इत्यर्थः ॥ २४ ॥ कथं पु
नः सर्वगतस्य परमात्मनः परिमाणोपदेश इत्यत्र ब्रूमः ॥ हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ २५ ॥ स
र्वगतस्यापि परमात्मनो हृदयेवस्थानमपेक्ष्यांगुष्ठमात्रत्वमिदमुच्यते ॥ आकाशस्येव वंशपर्वापेक्षम
रत्निमात्रत्वं ॥ नह्यंजसातिमात्रस्य परमात्मनोंगुष्ठमात्रत्वमुपपद्यते ॥ न चान्यः परमात्मन इह ग्रहणम
र्हति ॥ ईशानशब्दादिभ्य इत्युक्तं ॥ ननु प्रतिप्राणिभेदं हृदयानामनवस्थितत्वात्तदपेक्षमप्यंगुष्ठमात्रत्वं नो
क्त्यांगुष्ठमात्रो जीवो गृह्यतां किं गौणग्रहणेनेत्यत आह ॥ न चान्य इति ॥ सति संभवे मुख्यग्रहो ९९ पपद्यत इत्यत उत्तरमुच्यते
त्याप्यः अत्र तु श्रुतिविरोधाद संभव इति गौणग्रह इत्यर्थः ॥ मनुष्यानेवेति त्रैवर्णिकानेवेत्यर्थः ॥ शक्तत्वादित्यनेन पश्वादीनां देवानामृषी
णां चाधिकारो वारितः तत्र पश्वादीनां शास्त्रार्थज्ञानादिसामग्र्यभावात्कर्मण्यशक्तिः इन्द्रादेः स्वदेवताकेकर्मणि स्वोद्देशेन द्रव्यत्यागायो

शा· भा·
टी·
र· प्र·
९९६

ऋषीणामार्षेयवरणेऽन्यतराभावादशक्तिः॥ अर्थित्वादित्यनेन निष्कामानां मुमुक्षूणां स्थावराणां चाधिकारो वारितः तत्र मुमुक्षू-
णां मुमुक्ष्वर्थित्वे नित्यादिष्वधिकारो न काम्येषु शुद्धचित्तानां मोक्षार्थित्वे श्रवणादिषु व्यंजकेष्वधिकारो न कर्मस्विति मंतव्यं॥ शूद्रस्या-
धिकारं निरस्यति॥ अपर्युदस्तत्वादित्यादिना॥ शूद्रो यज्ञेऽनवक्लृप्त इति पर्युदासात् उपनयीत तमध्यापयीतेति शास्त्राच्च न शूद्रस्य
वैदिके कर्मण्यधिकारः तस्यैकजातित्वस्मृतेरुपनयनप्रयुक्तद्विजातित्वाभावेन वेदाध्ययनाभावात् अत्रापेक्षितो न्यायः षष्ठा-
ध्याये वर्णित इत्याह॥ वर्णितमिति॥ स्वर्गकामो यजेतेत्यादिशास्त्रस्याविशेषेण सर्वान्फलार्थिनः प्रतिप्रवृत्तत्वात् प्राणिमात्रस्य सु

मनुष्याधिकारत्वादिति॥ शास्त्रं ह्यविशेषप्रवृत्तमपि मनुष्यानेवाधिकरोति॥ शक्तत्वादर्थित्वात्॥ अपर्युद-
स्तत्वादुपनयनादिशास्त्राच्चेति वर्णितमेतदधिकारलक्षणे॥ मनुष्याणां च नियतपरिमाणः कायः औचित्ये-
न नियतपरिमाणमेव चैषामंगुष्ठमात्रं हृदयं अतो मनुष्याधिकारत्वाच्छास्त्रस्य मनुष्यहृदयावस्थानापेक्षमं-
गुष्ठमात्रत्वमुपपन्नं परमात्मनः॥ यदप्युक्तं परिमाणोपदेशात् स्मृतेश्च संसार्येवायमंगुष्ठमात्रः प्रत्येतव्य इति
॥ तत्प्रत्युच्यते॥ स आत्मा तत्त्वमसीत्यादिवत् संसारिण एव सतोंऽगुष्ठमात्रस्य ब्रह्मत्वमिदमुपदिश्यत इति॥

स्वार्थित्वाच्च॥ फलार्थे कर्मणि पश्वादीनामप्यधिकार इत्याशंक्योक्तरीत्या नेषां शक्तत्वाद्यभावात् स्वर्गकामपदं मनुष्यपरतया संको-
च्य मनुष्याधिकारत्वे स्थापिते चातुर्वर्ण्याधिकारित्वमाशंक्य वसंते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्य इति त्रयाणामे-
वाग्निसंबंधश्रवणात् तेषामेवाधिकार इति वर्णितमित्यर्थः॥ अस्तु प्रस्तुते किमायातं तत्राह॥ मनुष्याणां चेति प्रायेण सप्तवितस्तिपरिमि-
तो मनुष्यदेह इत्यर्थः॥ एवमंगुष्ठशब्दो हृत्परिमाणवाचकस्तत्रस्थं ब्रह्म लक्षयतीत्युक्तं संप्रति तत्त्वंपदेनांगुष्ठमात्रं जीवमनूद्यायमी-
शान इति ब्रह्माभेदो बोध्य इति वक्तुमनुवदति॥ यदपीति प्रतिपाद्याभेदविरोधात् अनुवाद्यांगुष्ठमात्रत्वं बाध्यं तात्पर्यार्थस्य बलवत्त्वादि-

अ· पा·
१।३

राम·
९९

क्वचिदस्थूलमित्यादौ॥ क्वचित्तत्त्वमसीत्यादौ॥ एकत्वार्थैवाक्यशेषमनुकूलयति॥ एतमिति॥ अनियैमोवाकर्त्तोद्रष्टव्यः॥ तंजीवंस्व
देहात् पृथक्कुर्यात् धैर्येणबलवदिंद्रियनिग्रहादिना तं विविक्तमात्मानंशुक्रंस्वप्रकाशममृतंकूटस्थंब्रह्मजानीयादित्यर्थः॥
तस्मात्कठवाक्यंप्रत्यक्ब्रह्मणिज्ञेयमन्वितमितिसिद्धं॥२५॥ शास्त्रस्यमनुष्याधिकारत्वेदेवादीनांब्रह्मविद्यायामप्यनधिकारः
स्यादित्याशंक्याह॥ तदुपर्यपिबादरायणःसंभवात्॥ ननुसमन्वयाध्यायेऽधिकारचिंतानसंगतेत्यतआह॥ अंगुष्ठेति॥ स्मृतस्यो

द्दिरूपाहिवेदांतवाक्यानांप्रवृत्तिः क्वचित्परमात्मस्वरूपनिरूपणपराक्वचिद्विज्ञानात्मनःपरमात्मनै
कत्वोपदेशपरा॥ तदत्रविज्ञानात्मनःपरमात्मनैकत्वमुपदिश्यते॥ नांगुष्ठमात्रत्वंकस्यचित्॥ एतमे
वार्थंपरेणस्फुटीकरिष्यति॥ अंगुष्ठमात्रःपुरुषोंतरात्मासदाजनानांहृदयेसन्निविष्टः॥ तंस्वाच्छरीरात्प्र
वृहेन्मुंजादिवेषीकांधैर्येणतंविद्याच्छुक्रममृतमिति॥२५॥ तदुपर्यपिबादरायणःसंभवात्॥२६॥
अंगुष्ठमात्रश्रुतिर्मनुष्यहृदयापेक्षयामनुष्याधिकारत्वाच्छास्त्रस्येत्युक्तं॥ तत्प्रसंगेनेदमुच्यते॥ बाढं
मनुष्यानधिकरोतिशास्त्रंनतुमनुष्यानेवेतीहब्रह्मविज्ञानेनियमोस्ति तेषांमनुष्याणामुपरिष्टाद्येदेवा
दयस्तानप्यधिकरोतिशास्त्रमितिबादरायणआचार्योमन्यते॥ कस्मात्संभवात् संभवतिहितेषामप्यर्थि

पित्वानर्हत्वंप्रसंगः अत्रमनुष्याधिकारत्वोक्त्यास्मृतानांदेवादीनांवेदांतश्रवणाद्यधिकारोस्तिन ॥ त्वाद्यधिकारकारणं
वेतिसंदेहेभोगसक्तानांवैराग्याद्यसंभवान्नेतिप्राप्तेसिद्धांतमाह॥ बाढमिति॥ एवमधिकारविचारात्मकाधिकरणद्वयस्यप्रासं
गिकीसंगतिः अत्रपूर्वपक्षेदेवानांज्ञानानधिकारात्देवत्वप्राप्तिद्वाराक्रममुक्तिफलासुदहराद्युपासनासुक्रममुक्त्यर्थिनांमनु
ष्याणांअप्रवृत्तिः फलंसिद्धांतेतुप्रवृत्तिः उपासनाभिर्देवत्वंप्राप्तानांश्रवणादिनाज्ञानान्मुक्तिसंभवादितिसफलोयंविचारः॥९॥

शा.भा.
टी.
र.प्र.
१९७

ननुभोगासक्तानांतेषांमोक्षार्थित्वाभावान्नाधिकारइत्यतआह॥अर्थित्वंतावदिति॥विकारत्वेनानृतविषयसुखस्यक्षयासूयादिदोषदृष्ट्यानिर
तिशयसुखमोक्षार्थित्वंसत्वप्रकृतीनांदेवानांसंभवतीत्यर्थः॥नन्विंद्रायस्वाहेत्यादौचतुर्थ्यंतशब्दातिरिक्ताविग्रहवतीदेवतानास्तिशब्दस्यचासा
मर्थ्यान्नाधिकारइत्यतआह॥नचेति॥अर्थित्ववदित्यर्थः॥अपर्युदस्तत्वमाह॥नचतेषामिति॥शूद्रोयज्ञेनवक्लृप्तइतिवत्देवादीनांवि
द्याधिकारनिषेधोनास्तीत्यर्थः॥ननुविग्रहवत्त्वेनदृष्टसामर्थ्येसत्यप्युपनयनाभावात्शास्त्रीयसामर्थ्यंनास्तीत्यतआह॥नचेति॥जन्मांत
राध्ययनबलात्स्वयमेवप्रतिभाताःस्मृतावेदायेषांतेतथातद्भावादित्यर्थः॥बालादिषुप्रविष्टपिशाचादीनांवेदोद्घोषदर्शनात्देवयोनीनांज

अ.पा.
१।३

**तथार्थित्वंतावन्मोक्षविषयंदेवादीनामपिसंभवति॥विकारविषयविभूत्यनित्यत्वालोचनादिनिमित्तंतथा**
**सामर्थ्यमपितेषांसंभवति॥मंत्रार्थवादेतिहासपुराणलोकेभ्योविग्रहवत्त्वाद्यवगमात्॥नचतेषांकश्चित्प्र**
**तिषेधोस्ति॥नचोपनयनशास्त्रेणैषामधिकारोनिवर्त्येतोपनयनस्यवेदाध्ययनार्थत्वात्तेषांचस्वयंप्रतिभा**
**तवेदत्वात्॥अपिचैषांविद्याग्रहणार्थंब्रह्मचर्यादिदर्शयति॥एकशतंहवैवर्षाणिमघवान्प्रजापतौब्रह्म**
**चर्यमुवास॥भृगुर्वैवारुणिःवरुणंपितरमुपससार॥अधीहिभगवोब्रह्मेत्यादि॥यदपिकर्मस्वनधि**
**कारकारणमुक्तं॥नदेवानांदेवतांतराभावान्नऋषीणामार्षेयांतराभावादिति॥नतद्विद्यास्वस्ति॥ २ ॥**

न्मांतरस्मरणमस्तीतिस्मृतवेदानांनामर्थविचारोयुक्तइत्यर्थः॥देवानांऋषीणांचविद्याधिकारेकारणमर्थित्वादिकमुक्त्वाश्रौतंगुरुकु
लवासादिलिंगमाह॥अपिचेति॥ननुब्रह्मविद्यादेवादीनांनाधिकारोनिवेद्यार्थत्वात्अग्निहोत्रवदित्यतआह॥यदपीति॥देवानांकर्मसु
नाधिकारःदेवतांतराणामुद्देश्यानामभावादितिप्रथमसूत्रार्थः ऋषीणामनधिकारः ऋष्यंतराभावात्॥ऋषियुक्तेकर्मण्यशक्तेरितिद्वि
तीयसूत्रार्थः॥असामर्थ्यमुपाधिरितिपरिहरति॥नतदिति॥असामर्थ्यरूपंकारणमित्यर्थः॥नह्यस्तियेनासामर्थ्यंस्यादितिशेषः॥नद्यो

राम.
१९७

तथर्षीणामिति वाक्यबाधोप्यनुमानस्य द्रष्टव्यः॥ ननु देवादीन्प्रत्यंगुष्ठमात्रश्रुतिः कथं तेषां महादेहत्वेन हृदयस्यास्मदंगुष्ठमात्रत्वाभावात्।
अतः श्रुतिषु तेषां नाधिकार इत्यत आह॥ देवाद्यधिकारेपीति॥ २६॥ ननु मंत्रादीनां प्रतीयमानविग्रहवत्त्वे तात्पर्यं कल्पयित्वा देवादीनामधिका
र उक्तः स चायुक्तः॥ अन्यपराणां तेषां प्रत्यक्षादिविरोधेन स्वार्थे तात्पर्यकल्पनानुपपत्तेरित्याक्षिप्य सूत्रचतुष्टयेन परिहरति॥ विरोधः कर्मणी
त्यादिना॥ वर्ण्येत न हीति शेषः स्वरूपं विग्रहः अभ्युपगमे प्रत्यक्षेण देवता दृश्येत न च दृश्यते अतो योग्यानुपलब्ध्या देवताया विग्रहवत्त्वा॥

नहींद्रादीनां विद्यास्वधिक्रियमाणानामिंद्राद्युद्देशेन किंचित्कृत्यमस्ति॥ न च भृग्वादीनां भृग्वादिसगोत्रतया॥
तस्माद्देवादीनामपि विद्यास्वधिकारः केन वार्यते॥ देवाद्यधिकारेप्यंगुष्ठमात्रश्रुतिः स्वांगुष्ठापेक्षया न विरु
ध्यते॥ २६॥ विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्॥ २७॥ स्यादेतत् यदि विग्रहवत्त्वाद्यभ्युपगमेन दे
वादीनां विद्यास्वधिकारो वर्ण्येत विग्रहवत्त्वात् ऋत्विगादिवत् इंद्रादीनामपि स्वरूपसन्निधानेन कर्मांग
भावोभ्युपगम्येत तदा च विरोधः कर्मणि स्यात्॥ नहींद्रादीनां स्वरूपसन्निधानेन यागेंऽगभावो दृश्यते न च सं
भवति॥ बहुषु यागेषु युगपदेकस्येंद्रस्य स्वरूपसन्निधानाऽनुपपत्तेरिति चेन्न॥ नायमस्ति विरोधः कस्मा
दनेकप्रतिपत्तेरेकस्यापि देवतात्मनो युगपदनेकस्वरूपप्रतिपत्तिः संभवति॥ कथमेतदवगम्यते॥ दर्शनात्

अभावात् संप्रदानकारकाभावेन कर्मनिष्पत्तिर्न स्यादित्याह॥ तदा चेति॥ विग्रहस्यांगत्वं अनुपलब्धिबाधितं युक्त्या च न संभवतीत्याह॥ न
चेति तस्मादर्थोपहितशब्दस्यैव देवतात्वात्तस्याश्चेतनत्वाभावान्न विद्याधिकार इति शंकार्थः॥ परिहरति॥ नायमिति॥ एकस्यापि देवस्य योगब
लादनेकदेहप्राप्तिः श्रुतिस्मृतिदर्शनात्संभवति अतो न कर्मण्यपि विरोध इति व्याचष्टे कस्मादित्यादिना॥ वैश्वदेवशस्त्रे शस्यमानदेवाः क
तीति शाकल्येन पृष्टो याज्ञवल्क्यो निविदास्त्रयश्चेत्यादिरूपया उत्तरं ददौ निविन्नाम शस्यमानदेवसंख्यावाचकः शब्दः षडधिकानि त्रीणि

पा.भा.
टी.
द.प्र.
९१८

शतानि त्रीणि सहस्राणीति संख्योक्तो संख्येयस्वरूपप्रश्ने महिमानो विभूतयः सर्वे देवा एषां त्रयस्त्रिंशद्देवानां अनो ष्टौ वसवः एकादश रुद्रा द्वा-
दशादित्याः इंद्रः प्रजापतिश्चेति त्रयस्त्रिंशद्देव इ देवास्ते पि षण्णां अग्नि पृथिवी वाय्वंतरिक्षादित्य दिवां महिमानस्ते पि षट्सु देवेषु अंतर्भवंति ॥ षट्
देवास्त्रिषु लोकेषु त्रयश्च द्वयोरन्नप्राणयोः द्वौ चैकस्मिन् प्राणे हिरण्यगर्भे अंतर्भवत इति दर्शितमित्यर्थः ॥ त्रयस्त्रिंशतो पि देवतानामिति संबंधः
दर्शनं श्रौतं व्याख्याय स्मार्तं व्याचष्टे ॥ तथा स्मृतिरिति ॥ वसंयोगसिद्धिं ॥ अणिमा महिमा चैव लघिमा प्राप्तिरीशता ॥ प्राकाम्यं च वशित्वं च यत्र

अ.पा.
९१३

तथाहि कति देवा इत्युपक्रम्य त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति च निरुच्य कतमे त इत्यस्यां पृच्छायां महि-
मान एवैषामेते त्रयस्त्रिंशत्त्वेव देवा इति निर्ब्रुवती श्रुतिरेकैकस्य देवतात्मनो युगपदनेकरूपतां दर्शयति ॥ त-
था त्रयस्त्रिंशतोपि षडाद्यंतर्भावक्रमेण कतम एको देव इति प्राण इति प्राणैकरूपतां देवतानां दर्शयंती तस्यै-
वैकस्य प्राणस्य युगपदनेकरूपतां दर्शयति ॥ तथा स्मृतिरपि ॥ आत्मनो वै शरीराणि बहूनि भरतर्षभ ॥ यो-
गी कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत् ॥ प्राप्नुयाद्विषयान्कैश्चित्कैश्चिदुग्रं तपश्चरेत् ॥ संक्षिपेच्च पुनस्तानि
सूर्यो रश्मिगणानिवेत्येवंजातीयका ॥ प्राप्ताणिमाद्यैश्वर्याणां योगिनामपि युगपदनेकशरीरयोगं दर्शयति ॥ किमु
वक्तव्यमाजानसिद्धानां देवानामनेकरूपप्रतिपत्तिसंभवात्त्वैकैका देवता बहुभी रूपैरात्मानं प्रविभज्य बहुषु यागे-
षु युगपदंगभावं गच्छतीति ॥ परैश्च न दृश्यते अंतर्धानादिक्रियायोगादित्युपपद्यते ॥ अनेकप्रतिपत्तेर्दर्शनादित्यस्या

कामावसायित्वेत्यष्टैश्वर्याणि ॥ तपेन अणुर्महान् लघुर्गुरुश्च भवति योगी अंगुल्या (( पराख्याख्या विग्रहवतामपि कर्मांगभावश्चोद
चंद्रस्पर्शः प्राप्तिः ईशिता सृष्टिशक्तिः प्राकाम्यमिच्छानभिघातः वशित्वं नियमनशक्तिः संकल्पमात्रादिष्टलाभो यत्र कामावसायित्वमिति भेदः
आजानसिद्धानां जन्मना सिद्धानामित्यर्थः फलितमाह ॥ अनेकेति ॥ अनेकेषु कर्मस्वेकस्य प्रतिपत्तिरंगभावस्तस्य लोके दर्शनादिति वक्तुं

राम.
९९८

कश्चिदेकदेशिप्रवृत्तोपयुक्तमन्वयदृष्टांतमाह ॥ क्वचिदिति ॥ २७ ॥ कर्मण्यविरोधमंगीकृत्य शब्दप्रामाण्यविरोधमाशंक्यापरिहरति ॥ शब्द इ-
ति चेदिति ॥ मा प्रसंजि प्रसक्तो मा भून्नामेत्यर्थः ॥ औत्पत्तिकसूत्रे शब्दार्थयोरनाद्योः संबंधस्यानादित्वाद्वेदस्य स्वार्थे मानांतराऽनपेक्षत्वेन प्रामा-
ण्यमुक्तं इदानीं अनित्यविग्रहव्यक्त्यभ्युपगमेन संबन्धस्याप्यनित्यत्वात् मानांतरेण व्यक्तिं ज्ञात्वा शब्दस्य संकेतः पुंसा कर्त्तव्य इति मानांतरापे-

कश्चिदेकोऽपि विग्रहवाननेकत्र युगपदंगभावं न गच्छति ॥ यथा बहुभिर्भोजयद्भिर्नैको ब्राह्मणो युगपद्भोज्यते ॥ क्व-
चित्त्वेकोऽपि विग्रहवाननेकत्र युगपदंगभावं गच्छति ॥ यथा बहुभिर्नमस्कुर्वाणैरेको ब्राह्मणो युगपन्नमस्क्रियते
तद्वदिहोद्देशपरित्यागात्मकत्वात् यागस्य विग्रहवतीमप्येकां देवतामुद्दिश्य बहवः स्वं स्वं द्रव्यं युगपत्परित्य-
क्ष्यंतीति विग्रहवत्त्वेऽपि देवतानां न किंचित्कर्मणि विरुध्यते २७ शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्यां ॥ २८
मा नाम विग्रहवत्त्वेऽपि देवादीनामभ्युपगम्यमाने कर्मणि कश्चिद्विरोधः प्रसंजि ॥ शब्दे तु विरोधः प्रसज्येत ॥ कथ-
म् ॥ औत्पत्तिकं हि शब्दस्यार्थेन संबंधमाश्रित्यानपेक्षत्वादिति वेदस्य प्रामाण्यं स्थापितं इदानीं तु विग्रह-
वती देवताऽभ्युपगम्यमाना यद्यप्यैश्वर्ययोगाद्युगपदनेककर्मसंबन्धीनि हवींषि भुंजीत तथापि विग्रहयोगा-
दस्मदादिवज्जननमरणवती सेति नित्यस्य शब्दस्य नित्येनार्थेन नित्ये संबंधे प्रतीयमाने यद्वैदिके शब्दे प्रामा-
ण्यं स्थितं तस्य विरोधः स्यादिति चेत् ॥ नायमप्यस्ति विरोधः कस्मात् अतः प्रभवात् ॥ अत एव हि वैदिकाच्छब्दाद्देवा-
दिकं जगत्प्रभवति ॥ ननु जन्माद्यस्य यत इत्यत्र ब्रह्मप्रभवत्वं जगतोऽवधारितं कथमिह शब्दप्रभवत्वमुच्यते ॥

क्षत्वात्प्रामाण्यस्य विरोधः स्यादित्याह ॥ कथमित्यादिना ॥ किं शब्दानामनित्यतया संबन्धस्य कार्यत्वमापाद्यते ऽनार्थानामनित्यतया नाद्य
इत्याह ॥ नायमपीति ॥ कर्मण्यविरोधवत् इत्यपेरर्थः देवादिव्यक्तिहेतुत्वेन प्रागेव शब्दानां सत्वात् नानित्यत्वमिति भावः ॥ अत्र पूर्वापरविरोधं

शब्दस्य निमित्तत्वेन ब्रह्मसहकारित्वाद्विरोध इत्याशंक्य द्वितीयं कल्पमुत्थापयति ॥ अपिचेति ॥ अनित्यत्वं सादित्वं व्यक्तिरूपार्थाना
मनित्यतया शब्दानां संबन्धस्यानित्यत्वं दुर्वारम् ॥ तस्मात्पौरुषेयसंबन्धसापेक्षत्वात्प्रामाण्यविरोध इत्यर्थः नच व्यक्तीनामनित्यत्वेपिघ
टत्वादिजातिसमवायवत् शब्दसंबन्धोपि नित्यः स्यादिति वाच्यं ॥ उभयाश्रितसंबन्धस्यान्यतराभावे स्थित्ययोगेन दृष्टान्तासिद्धेरिति भावः ॥ य
थागोत्वादयो गवादिशब्दवाच्यास्तथा वसुत्वाद्याकृतयो वस्वादिशब्दार्थाः न व्यक्तय इति परिहरति ॥ नेत्यादिना ॥ शब्दानां तदर्थानां जाती
नांच नित्यत्वात्तत्संबंधोपि नित्य इति प्रतिपादयति महीत्यादिना ॥ व्यक्तीनामानंत्यादिति ॥ न गोत्वावच्छेदेन व्यक्तिषु शक्तिः सुग्रहेति वाच्यं ॥

अपिच यदि नाम वैदिकाच्छब्दादस्य प्रभवोभ्युपगमः कथमेतावता विरोधः शब्दे परिहृतो यावता वसवो रु
द्रा आदित्या विश्वेदेवा मरुत इत्येतेर्था अनित्या एवोत्पत्तिमत्त्वात् तदनित्यत्वे च तद्वाचिनां वैदिकानां वस्वादिश
ब्दानामनित्यत्वं केन वार्यते ॥ प्रसिद्धं हि लोके देवदत्तस्य पुत्र उत्पन्ने यज्ञदत्त इति तस्य नाम क्रियत इति ॥ त
स्माद्विरोध एव शब्द इति चेन्न ॥ गवादिशब्दार्थसंबन्धनित्यत्वदर्शनात् ॥ नहि गवादिव्यक्तीनां उत्पत्तिमत्त्वे तदाकृती
नामप्युत्पत्तिमत्त्वं स्यात् ॥ द्रव्यगुणकर्मणां हि व्यक्तय एवोत्पद्यन्ते ॥ नाकृतयः ॥ आकृतिभिश्च शब्दानां संबंधो न
(९ व्यक्तिभिः

सामान्यस्याप्रत्यासत्तित्वेन सर्वव्यक्त्युपस्थित्यभावात् गोत्वं शक्यतावच्छेदकमिति ग्रहापेक्षया गोत्वं शक्यमिति ला
घवात् निरूढाजहल्लक्षणया व्यक्तेर्लाभेनानन्यलभ्यत्वाभावाच्चेति भावः ॥ यद्वा केवलव्यक्तिषु शक्तिरत्र निरस्यते अनुपपत्तिज्ञानं विनै
व व्यक्तेः शाब्दज्ञानायत्तजातिज्ञानविषयत्वेन उभयशक्तेरावश्यकत्वात् ॥ तथा च नित्यजातितादात्म्येन व्यक्तेरनादित्वात्तत्संबंधोप्यनादिः
सत्कार्यवादात् ॥ अत एव वाक्यवृत्तौ तत्त्वमस्यादिवाक्ये भागलक्षणोक्तायुज्यते केवलसामान्यस्य वाच्यत्वे अखंडार्थस्य वाच्यैकदेशत्वा
भावात् अतः प्रभवादिति सूत्रस्वारस्याच्च केवलव्यक्तिशक्तिनिरास इति गम्यते केवलव्यक्तिवचनाः खल्वित्यादिशब्दाः ॥ ७ ॥

अर्थो नं न रभाविनः सांकेतिकाः गवादिशब्दास्तु व्यक्तिप्रभवहेतुत्वेन प्रागेव संनीतिनव्यक्तिमात्रवचनाः सांकेतिकाः किंतु स्थूलसूक्ष्मभावेना
तुसूतव्यप्यविनाभूतसामान्यवचनाइतिमंतव्यं ॥ नचेंद्रादिव्यक्तेरेकत्वेन जात्यभावादाकाशशब्दवत् इंद्रचंद्रादिशब्दाः केवलव्यक्तिवचनाइ
तिसांप्रतं ॥ अतीतानागतव्यक्तिभेदेन जात्युपपत्तेरित्यलंप्रपंचेन दृष्टांतमुपसंहृत्य दार्ष्टांतिकमाह ॥ व्यक्तिष्वित्यादिना ॥ आकृतिर्जातिः ॥ ननु
कासाव्यक्तिः यदनुगतेंद्रत्वादिजातिशब्दार्थः स्यादित्यतआह ॥ आकृतिविशेषस्त्विति ॥ वज्रहस्तः पुरंदर इत्यादिरूपइत्यर्थः ॥ इंद्रादिशब्दानां

व्यक्तीनामानंत्यात्संबंधग्रहणानुपपत्तेः व्यक्तिषूत्पद्यमानास्वपि आकृतीनां नित्यत्वान्न गवादिशब्देषु कश्चिद्विरो
धोदृश्यते ॥ तथा देवादिव्यक्तिप्रभवाभ्युपगमेप्याकृतिनित्यत्वान्न कश्चिदिंद्रादिशब्देषु विरोधइति द्रष्टव्यम् ॥ आकृति
विशेषस्तु देवादीनां मंत्रार्थवादादिभ्यो विग्रहवत्त्वाद्यवगमादवगंतव्यः स्थानविशेषसंबंधनिमित्ताश्चेंद्रादिशब्दाः से
नापत्यादिशब्दवत् ॥ ततश्च यो यस्तत्तत्स्थानमधिरोहति स स इंद्रादिशब्दैरभिधीयतइति न दोषो भवति ॥ न चेदं शब्द
प्रभवत्वं ब्रह्मप्रभवत्ववदुपादानकारणाभिप्रायेणोच्यते कथं तर्हि स्थिते वाचकात्मना नित्ये शब्दे नित्यार्थसंबंधिनि
शब्दव्यवहारयोग्यार्थव्यक्तिनिष्पत्तिरतः प्रभव इत्युच्यते ॥ कथं पुनरवगम्यते शब्दात्प्रभवति जगदिति ॥ प्रत्यक्षानु
मानाभ्यां ॥ प्रत्यक्षं श्रुतिः प्रामाण्यं प्रत्यनपेक्षत्वात् ॥ अनुमानं स्मृतिः प्रामाण्यं प्रति सापेक्षत्वात् ॥ ते हि शब्दपूर्वां सृष्टिं

जातिः इंद्रादिषु प्रवृत्तिनिमित्तमित्युक्त्वा उपाधिनिमित्तमाह ॥ स्थानेति व्यक्तिप्रलयेपि स्थानस्य स्थायित्वात् शब्दार्थसंबंधनित्यतेत्याह ॥ त
तश्चेति ॥ उक्तं पूर्वापरविरोधं परिहरति ॥ न चेति ॥ शब्दो निमित्तमित्यविरोधं मत्वा सूत्रशेषमवतारयति ॥ कथं पुनरिति स्मृत्यास्वप्रामाण्यार्थं मू
लश्रुतिरनुमीयतइत्यनुमानं स्मृतिः ॥ एतेअसृग्रमिंदवस्तिरः पवित्रमाशवः विश्वान्यभिसौभगेत्येतन्मंत्रस्थैः पदैः स्मृत्वा प्रजा देवादीन सृज
त् ॥ तत्रैतइतिपदं सर्वनामत्वाद्देवानां स्मारकं असृग्रमिति तत्रथाने देहे रमंतइति असृग्राः मनुष्याः ॥ चंद्रस्थानां पितृणां इंदुशब्दः स्मारकः पवित्रं सो

ब्र॰ भा॰ टी॰ त॰ प्र॰ १२०

अ॰ पा॰ १।३

स्वांतस्तिरस्कुर्वतां ग्रहाणां तिरःपवित्रशब्दः ऋचोऽस्तुवतां स्तोत्राणां गीतिरूपाणामास्तुशब्दः ऋच्यध्यूढं सामेति श्रुतेः ॥ स्तोत्रानंतरं प्रयोगं विशनां
शस्त्राणां विश्वशब्दः सर्वत्र सौभाग्ययुक्तानामभिसौभगाशब्दः स्मारक इति छंदोगब्राह्मणवाक्यार्थः ॥ स प्रजापतिर्मनसा वाचं त्रयीं मिथुनं सम
भवत् ॥ मनो वाग्रूपं मिथुनं संभावितवान् मनसा त्रयीं प्रकाशितां सृष्टिमालोचितवानित्यर्थः ॥ रश्मिरित्येवादित्यमसृजतेत्यादिश्रुतिरादिशब्दार्थः ॥
सा तदिति वै प्रजापतिर्देवानसृजतासृग्रमिति मनुष्यानिंदव इति पितृंस्तिरःपवित्रमिति ग्रहानाशव इति स्तोत्रं विश्वा
नीति शस्त्रं अभिसौभगेत्यन्याः प्रजा इति श्रुतिः ॥ तथान्यत्रापि स मनसा वाचं मिथुनं समभवदित्यादिना तत्र तत्र श
ब्दपूर्विका सृष्टिः श्राव्यते ॥ स्मृतिरपि ॥ अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ॥ आदौ वेदमयी दिव्या य
तः सर्वाः प्रवृत्तय इति उत्सर्गोऽप्ययं वाचः संप्रदायप्रवर्तनेनात्मकोऽद्रष्टव्यः ॥ अनादिनिधनाया अन्यादृश्यस्योत्सर्ग
स्यासंभवात् ॥ तथा नामरूपं च भूतानां कर्मणां च प्रवर्तनं ॥ वेदशब्देभ्य एवादौ निर्ममे स महेश्वर इति ॥ सर्वेषां तु स
नामानि कर्माणि च पृथक् पृथक् ॥ वेदशब्देभ्य एवादौ पृथक् संस्थाश्च निर्ममे इति च ॥ अपि च ॥ चिकीर्षितमर्थम
नुतिष्ठंस्तस्य वाचकं शब्दं पूर्वं स्मृत्वा पश्चात्तमर्थमनुतिष्ठतीति सर्वेषां नः प्रत्यक्षमेतत् ॥ तथा प्रजापतेरपि स्रष्टुः सृष्टेः
पूर्वं वैदिकाः शब्दा मनसि प्रादुर्बभूवुः पश्चात्तदनुगतानर्थान्ससर्जेति गम्यते ॥ तथा च श्रुतिः ॥ स भूरिति व्याहरन्स भू
मिमसृजतेत्येवमादिका भूरादिशब्देभ्य एव मनसि प्रादुर्भूतेभ्यो भूरादिलोकान् सृष्टान्दर्शयति ॥ किमात्मकं पुनः
संप्रदायो गुरुशिष्यपरंपराध्ययनं ॥ संस्था अवस्थाः ॥ या प्रजापतिसृष्टिः सा शब्दपूर्विका सृष्टित्वात् ॥ शब्दमभिप्रेत्येदं शब्दप्रभव
प्रत्यक्ष घटादिवदिति प्रत्यक्षानुमानाभ्यामित्यस्यार्थान्तरमाह ॥ अपि चेति ॥ अतः प्रभवत्वप्रसंगात् शब्दस्वरूपं वक्तुमुक्तमाक्षिपति ॥ किमा
त्मकमिति ॥ वर्णरूपं तदतिरिक्तस्फोटरूपं वेति किंशब्दार्थः ॥ तत्र वर्णानामनित्यत्वात् स्फोटस्य चासत्त्वात् न जगद्धेतुत्वं इत्याक्षेपे द्वितीयपक्षं

राम॰ १२०

स्फोटमिति ॥ स्फुटत्येव वर्णैर्व्यज्यत इति स्फोटो वर्णाभिव्यंग्योऽर्थस्य व्यंजको गवादिशब्दो नित्यः तमभिप्रेत्येदमुच्यत इति पूर्वेणान्वयः स एवात्रोपसंहृ
ष्यति ॥ वर्णेति ॥ सोयं गकार इति प्रत्यभिज्ञया वर्णनित्यत्वसिद्धेर्नानुपपत्तिरित्यत आह ॥ उत्पन्नेति ॥ तारत्वमंदत्वादिविरुद्धधर्मवत्त्वेन तारो
गकारो मंदो गकार इति प्रतीयमानगकारस्य भेदानुमानात् प्रत्यभिज्ञा गत्वजातिविषयेत्यर्थः ॥ ननु विरुद्धधर्मज्ञानं ध्वन्युपाधिकं भ्रम इत्यत
आह ॥ न चेति तथा च वर्णानामनित्यत्वात् न जगद्धेतुत्वमिति भावः ॥ किंच तेषामर्थबोधकत्वायोगात् स्फोटोंगीकार्य इत्याह ॥ न च वर्णे

स्फोटमित्याह ॥ वर्णपक्षे हि तेषामुत्पन्नप्रध्वंसित्वादनित्येभ्यः शब्देभ्यो देवादिव्यक्तीनां प्रभव इत्यनुपपन्नं स्या
त् ॥ उत्पन्नप्रध्वंसिनश्च वर्णाः प्रत्युच्चारणमन्यथान्यथा च प्रतीयमानत्वात् ॥ तथा ह्यदृश्यमानोपि पुरुषविशे
षोध्ययनध्वनिश्रवणादेव विशेषतो निर्धार्यते देवदत्तोयमधीते यज्ञदत्तोयमधीत इति ॥ न चायं वर्णविषयो
न्यथात्वप्रत्ययो मिथ्याज्ञानं बाधकप्रत्ययाभावात् ॥ न च वर्णेभ्योऽर्थावगतिर्युक्ता ॥ न ह्येकैको वर्णोऽर्थं प्रत्याप
येत् ॥ व्यभिचारात् ॥ न च वर्णसमुदायप्रत्ययोऽस्ति क्रमवत्त्वाद्वर्णानां ॥ पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितों
त्यो वर्णोऽर्थं प्रत्यापयिष्यतीति यद्युच्येत तन्न ॥ संबंधग्रहणापेक्षो हि शब्दः स्वयं प्रतीयमानोऽर्थं प्रत्याययेत् ॥
धूमादिवत् ॥ न च पूर्वपूर्ववर्णानुभवजनितसंस्कारसहितस्यांत्यवर्णस्य प्रतीतिरस्त्यप्रत्यक्षत्वात्संस्काराणां ॥

व्यर्थ इत्यादिना ॥ व्यभिचारात् एकस्माद्वर्णादर्थप्रतीत्यदर्शनात् वर्णांतरवैयर्थ्यप्रसंगाच्चेत्यर्थः ॥ न हि वर्णानां समुदायो बोधक इत्याशंक्य
क्षणिकानां सत्ता नास्तीत्याह ॥ न चेति ॥ वर्णानां स्वतः साहित्याभावेपि संस्कारलक्षणाऽपूर्वद्वारा साहित्यमाग्नेयादियागानामिवेति शंकते ॥ पूर्वेति
किमयं संस्कारो वर्णैर्जनितोऽपूर्वाख्यः कश्चित् उत वर्णानुभवजनितो भावनाख्यः नाद्यो मानाभावात् ॥ किंचायमज्ञातो ज्ञातो वार्थधीहेतुः नाद्य इ
त्याह ॥ न चेति ॥ संस्कारसहितः शब्दो ज्ञात एवार्थधीहेतुः संबंधग्रहणमपेक्ष्य बोधकत्वात् धूमादिवदित्यर्थः ॥ द्वितीये किं प्रत्यक्षेण ज्ञात उत कार्य

द्वितीयं शंकते कार्यैरिति॥ कार्यमर्थधीस्तस्यां जातायां संस्कारमन्त्यस्तस्मिन्जाते सेति परस्पराश्रयेण दूषयति॥ नेति॥ पदार्थस्मरणस्यापि पद-
ज्ञानानंतरभावित्वात् तेन संस्कारसहितान्त्यवर्णात्मकपदस्य ज्ञानेन युक्तमित्यक्षरार्थः॥ अपिशब्दः परस्पराश्रयद्योतनार्थः एतेन भावनासंस्का-
रपक्षोपि निरस्तः न स्ववर्णस्मृतिमात्रहेतुत्वेनार्थधीहेतुत्वाऽयोगात् नचान्यवर्णसाहित्यादर्थधीहेतुत्वं केवलसंस्कारस्य तु वर्णस्मृतिहेतुत्वा-
मिति वाच्यं अर्थधीपूर्वकाले भावनायास्ज्ञानाभावेनार्थधीहेतुत्वायोगात्॥ नच वर्णस्मरणे नानुमितासा अन्त्यवर्णसहितार्थधीहेतुरिति वाच्यं तत्का-
र्यस्य क्रमिकस्य वर्णस्मरणस्याप्यन्त्यवर्णानुभवानंतरभावित्वेन तेनानुमितभावनानामन्त्यवर्णसाहित्याभावादिति भावः वर्णानामर्थबोधक-
त्वासंभवे फलमाह॥ तस्मादिति स्फोटे किंमानमित्याशंक्यैकं पदमिति प्रत्ययं प्रमाणमित्याह॥ सचेति॥ यथा रत्नतत्त्वं बहुभिश्चाक्षुषप्रत्ययैः।

कार्यप्रत्यायितैः संस्कारैः सहितोऽन्त्यो वर्णः प्रत्याययिष्यतीति चेत् न संस्कारकार्यस्यापि स्मरणस्य क्रमवर्तित्वात्॥ तस्मात्स्फोट एव शब्दः॥ सचैकैकवर्णप्रत्ययाहितसंस्कारबीजेऽन्त्यवर्णप्रत्ययजनितपरिपाके प्रत्ययिन्येकप्रत्ययविषयतया झटिति प्रत्यवभासते॥ नचायमेकप्रत्ययो वर्णविषया स्मृतिर्वर्णानामनेकत्वादेकप्रत्ययविषयत्वानुपपत्तेः॥ तस्य च प्रत्युच्चारणं प्रत्यभिज्ञायमानत्वान्नित्यत्वं॥ श्रीः ॥ श्रीः ॥

स्फुटं भासते तथा मवादिपदस्फोटे गकाराद्येकैकवर्णकृतप्रत्ययैः स्फोटविषयैः आहिता संस्कारा बीजं यस्मिन् चित्ते तस्मिन्नन्त्यवर्ण-
कृतप्रत्ययेन जनितः परिपाकोऽन्त्यः संस्कारो यस्मिंस्तस्मिन्प्रत्ययिनि चित्ते एकं गौरिति पदमिति प्रत्ययः प्रत्ययस्तद्विषयतया स्पष्टा-
आभासत इत्यर्थः॥ अनेन वर्णान्वयव्यतिरेकयोः स्फोटज्ञानेऽन्यथासिद्धिः॥ नचैकस्माद्वर्णात्सम्यक्स्फोटाभिव्यक्तिः येन वर्णांतर-
वैयर्थ्यं किंतु रत्नवद्बहुप्रत्ययसंस्कृते चित्ते सम्यक्स्फोटाभिव्यक्तिरित्युक्तं भवति॥ नन्वेकपदमेकं वाक्यमिति प्रत्ययः पदवाक्यस्फो-
टयोर्न प्रमाणं तस्य वर्णसमूहालंबनस्मृतित्वादित्याशंक्य निषेधति॥ नचेति॥ स्फोटस्य जगद्धेतुत्वार्थं नित्यत्वमाह॥ तस्य चेति॥ ९

ननु तदेवेदं पदमिति प्रत्यभिज्ञा भ्रमः उदात्तादिभेदप्रत्ययादित्यत आह भेदेति ॥ आचार्यसंप्रदायोक्तिपूर्वकं सिद्धान्तयति ॥ वर्णा एवेति
॥ वर्णातिरिक्तस्फोटात्मकशब्दस्यानुभवानारोहादित्यर्थः ॥ सादृश्यदोषादियं भ्रान्तिरिति निशंकते ॥ सादृश्यादिति ॥ वपनानन्तरं तस्यैवमे केशा इति
धीभ्रान्तिरित्युक्तं ॥ भेदधीविरोधात् स एवायं वर्ण इति धीस्तु प्रमैव बाधकाभावादित्याह ॥ नेति ॥ गोत्वादिप्रत्यभिज्ञावत् वर्णेषु प्रत्यभिज्ञा गत्वा
दिविषयेति शंकते ॥ प्रत्यभिज्ञानमिति ॥ व्यक्तिभेदे सिद्धे प्रत्यभिज्ञाया जातिविषयत्वं स्यात् यत्त्वपापीतं जलं तदेवमयापीतमित्यादौ तत्र येह व्य

भेदप्रत्ययस्य वर्णविषयत्वात् तस्मात् नित्यात् शब्दात् अभिधायकात् स्फोटरूपात् क्रियाकारकफललक्षणं जगदभिधे
यभूतं प्रभवतीति ॥ वर्णा एव तु शब्द इति भगवानुपवर्षः ननु प्रत्यक्षप्रध्वंसित्वं वर्णानामुक्तं ॥ तत्राह तस्यैवेति प्रत्यभिज्ञानात् ॥ सा
दृश्यात्प्रत्यभिज्ञानं केशादिष्विवेति चेत् ॥ न प्रत्यभिज्ञानस्य प्रमाणान्तरेण बाधानुपपत्तेः प्रत्यभिज्ञानमाकृतिनिमित्तमिति चेत्
॥ न ॥ व्यक्तिप्रत्यभिज्ञानात् ॥ यदि हि प्रत्युच्चारणं गवादिव्यक्तिवदन्या अन्या वर्णव्यक्तयः प्रतीयेरन् तत आकृतिनिमित्तं प्रत्य
भिज्ञानं स्यात् ॥ न त्वेतदस्ति ॥ वर्णव्यक्तय एव हि प्रत्युच्चारणं प्रत्यभिज्ञायन्ते ॥ द्विर्गोशब्द उच्चारित इति हि प्रतिपत्तिर्न तु द्वौ गोश
ब्दाविति ॥ ननु वर्णा अप्युच्चारणभेदेन भिन्नाः प्रतीयन्ते देवदत्तयज्ञदत्तयोरध्ययनध्वनिश्रवणादेव भेदप्रतीतेरित्युक्तं ॥
अत्राभिधीयते ॥ सति वर्णविषये निश्चिते प्रत्यभिज्ञाने संयोगविभागाभिव्यंग्यत्वाद्वर्णानामभिव्यंजकवैचित्र्यनिमित्तोऽयं व
र्णविषयो विचित्रः प्रत्ययो न स्वरूपनिमित्तः ॥ अपि च वर्णव्यक्तिभेदवादिनापि प्रत्यभिज्ञानसिद्धये वर्णाकृतयः कल्पनीयाः

क्तिभेदः सिद्ध इति परिहरति न व्यक्तीति ॥ न त्वेतदिति ॥ व्यक्त्यन्यत्वज्ञानमित्यर्थः उदात्तत्वादिविरुद्धधर्मत्वात् व्यक्तिभेदोऽनुमानसिद्ध इत्यनुवदति ॥
ननु चेति ॥ भेदप्रत्ययस्य कुंभकूपाकाशभेदप्रत्ययवदौपाधिकभेदविषयत्वादन्यथासिद्धेः अनन्यथासिद्धव्यक्त्यैक्यप्रत्यभिज्ञया निरपेक्षस्वरूपा
लंबनया बाध इत्युत्तरमाह ॥ अत्रेति ॥ ताल्वादिदेशैः कोष्ठस्य वायुसंयोगविभागाभ्यां विचित्राभ्यां व्यंग्यत्वात् वर्णेषु वैचित्र्यधीरित्यर्थः ॥ कल्पना

अनंताः गकारादिव्यक्तयस्तासु प्रत्यभिज्ञानार्थं गत्वादिजातयस्तासु चोदात्तत्वादिभेदस्यौपाधिकत्वमिति कल्पनाद्वरं वर्णे व्यक्तिभेदमात्रस्यौपा-
धिकत्वकल्पनमिति व्यक्तीनां तत्स्थजातीनां च कल्पनमयुक्तमित्यर्थः ॥ ननु भेदस्य बाधकाभावात् नौपाधिकत्वमित्यत आह ॥ एवमिति ॥ अ-
स्तु नहि प्रत्ययद्वयप्रामाण्याय भेदाभेदयोः सत्यत्वं तत्राह ॥ कथमिति ॥ उभयोरेकत्र विरोधात् भेद औपाधिक एवेत्यर्थः ॥ ननु वायुसंयोगादे-
रतींद्रियत्वात् न तद्गतवैचित्र्यस्योदात्तत्वादेर्वर्णेषु प्रत्यक्षारोपः संभवतीत्यरुचिं च दिष्यन्स्वमतमाह ॥ अथवेति ॥ ध्वनिधर्मोऽउदात्तत्वादयो

नासु च परोपाधिको भेदप्रत्ययइत्यभ्युपगंतव्यः ॥ तद्वरं वर्णव्यक्तिष्वेव परोपाधिको भेदप्रत्ययः स्वरूपनिमित्तं च
प्रत्यभिज्ञानमिति कल्पनालाघवं ॥ एवमेव च वर्णविषयस्य भेदप्रत्ययस्य बाधकः प्रत्ययो यत्प्रत्यभिज्ञानं ॥ कथं
ह्येकस्मिन्काले बहूनामुच्चारयतामेकस्यैव सतो गकारो युगपदनेकरूपः स्यात् ॥ उदात्तश्चानुदात्तश्च स्वरितश्च सा-
नुनासिकश्च निरनुनासिकश्चेति ॥ अथवा ध्वनिकृतोयं प्रत्ययभेदो न वर्णकृत इत्यदोषः ॥ कः पुनरयं ध्वनिर्नाम
यो दूरादाकर्णयतो वर्णविवेकमप्रतिपद्यमानस्य कर्णपथमवतरति । प्रत्यासीदतश्च पटुमृदुत्वादिभेदं वर्णेष्वासंजयति
॥ तन्निबंधनाश्चोदात्तादयो विशेषा न वर्णस्वरूपनिबंधनाः ॥ वर्णानां प्रत्युच्चारणं प्रत्यभिज्ञायमानत्वात् ॥ ६ ॥

ध्वन्यभेदाध्यासाद्वर्णेषु भांतीत्यर्थः ॥ प्रश्नपूर्वं ध्वनिस्वरूपमाह ॥ कइति ॥ अवतरति ॥ स ध्वनिरिति शेषः । वर्णातिरिक्तः शब्दो ध्वनिरित्यर्थः
॥ समीपंगतस्य पुंसस्तारत्वमंदत्वादिधर्मान् स्वगतान्वर्णेषु स एवारोपयतीत्याह ॥ प्रत्यासीदतश्चेति ॥ आदिपदं विवृणोति ॥ तदिति । नत्वव्य-
क्तवर्णा एव ध्वनिर्नातिरिक्त इत्यत आह ॥ वर्णानामिति प्रत्युच्चारणं वर्णा अनुवर्त्तंते ध्वनिर्व्यावर्त्तत इति भेद इत्यर्थः ॥ अन्यथा वाचिके-
जपे वर्णेष्वव्यक्तेषु ध्वनिवृद्धिः स्यात् दुंदुभ्यादिध्वनौ शब्दत्वमात्रेण गृह्यमाणे यमव्यक्तो वर्ण इति धीः स्यादिति मंतव्यं ॥ १७ ॥

एवं ध्वन्युपाधिकत्वे स्वमते गुणं वदन् वायूपाधिकत्वे पूर्वोक्तामरुचिं दर्शयति एवं चेत्यादिना॥ अस्तु को दोषस्तत्राह॥ संयोगेति॥ वायुसं-
योगादेरश्रावणत्वादित्यर्थः॥ तस्मात् श्रावणध्वनिरेवोदात्तत्वाद्यारोपोपाधिरिति भावः॥ एवं विरुद्धधर्मकध्वनीनां भेदेऽप्यनुगतानां वर्णानामभि-
न्नत्वमित्युक्तं॥ तदेव दृष्टान्तेन दृढयति॥ अपि चेति॥ यथा खंडमुंडादिविरुद्धानेकव्यक्तिषु भिन्नं गोत्वं तथा ध्वनिषु वर्णा अभिन्ना एवेत्यर्थः॥
उदात्तादिध्वनिस्वलक्षणेन हेतुना वर्णानामपीति योजना प्रत्यभिज्ञाविरोधादित्यक्षरार्थः॥ यद्वा उदात्तत्वादिभेदविशिष्टतया प्रत्यभिज्ञायमानत्वा-

एवं च सति सालंबना उदात्तादिप्रत्यया भविष्यंति॥ इतरथा हि वर्णानां प्रत्यभिज्ञायमानानां निर्भेदत्वात् संयोगविभाग-
कृता उदात्तादिविशेषाः कल्प्येरन्॥ संयोगविभागानां चाप्रत्यक्षत्वात् न तदाश्रया विशेषाः वर्णेष्वध्यवसितुं शक्यंत इत्य-
तो निरालंबना एवैते उदात्तादिप्रत्ययाः स्युः॥ अपि च नैवैतदभिनिवेष्टव्यमुदात्तादिभेदेन वर्णानां प्रत्यभिज्ञायमा-
नानां भेदो भवेदिति॥ न ह्यन्यस्य भेदेनान्यस्याभिद्यमानस्य भेदो भवितुमर्हति न हि व्यक्तिभेदेन जातिं भिन्नां मन्यंते॥ व-
र्णेभ्यश्चार्थप्रतीतिः संभवात् स्फोटकल्पना ऽनर्थिका॥ न कल्पयाम्यहं स्फोटं प्रत्यक्षमेव त्वेनमवगच्छामि॥ एकैक-
वर्णग्रहणाहितसंस्कारायां बुद्धौ झटिति प्रत्यवभासनादिति चेत्॥ न अस्या अपि बुद्धेर्वर्णविषयत्वात् एकैकवर्णग्र-
हणोत्तरकालाहीयमेकबुद्धिर्गौरिति समस्तवर्णविषया नार्थांतरविषया॥ कथमेतदवगम्यते॥ यतोऽस्यामपि बु-
द्धौ गकारादयो वर्णा अनुगम्यंते न तु दकारादयः॥ यदि ह्यस्या बुद्धेर्गकारादिभ्यो ऽर्थांतरं स्फोटो विषयः स्यात्॥ त-

द्वर्णानां भेद इत्याशंकां दृष्टान्तेन निरस्यति॥ अपि चेति॥ वर्णानां स्थायित्वं प्रसाध्यते षामेव वाचकत्वं वक्तुं स्फोटं विघटयति॥ वर्णेभ्यश्चेति॥ कस्त-
नामसहमानः शंकते॥ नेति॥ चक्षुषा दर्पणयुक्तायां बुद्धौ मुखवत् श्रोत्रेण वर्णयुक्तायां बुद्धौ विनैव हेतुत्वं तत्र स्फोटः प्रत्यक्ष इत्याह॥ झटितीति प्रत्य-
क्षं सेविदित्यर्थावभासनेनैतत्र प्रमाणं एकं पदमिति बुद्धौ वर्णा एव स्फुरंति नातिरिक्तः स्फोट इति न स्फोटे प्रमाणमित्याह॥ नास्या अपीत्यादिना॥

ननु गोपदबुद्धेः स्फोटो विषयो गकारादीनां तु व्यंजकत्वात्स्तु रमिति
त्यत आह॥ यदि ह्येति॥ व्यंग्यवह्निबुद्धौ व्यंजकधूमस्यानुरंजेरदर्शना

वर्णसमूहालंबनत्वोपपत्तेर्न स्फोटः कल्पनीयः पदार्थांतरकल्पनागौरवादित्याह ॥ तस्मादिति ॥ अनेकस्याप्यौपाधिकमेकत्वं युक्तमित्याह
॥ संभवतीति ॥ ननु तत्रैकदेशादिरुपाधिरस्ति प्रकृते क उपाधिरित्यत आह ॥ यानीति ॥ एकार्थशक्तमेकं पदं प्रधानार्थस्यैकस्मिन् तात्पर्यं वदे
कं वाक्यमित्येकार्थसंबंधादेकत्वोपचार इत्यर्थः ॥ न चैकपदविज्ञाने एकार्थज्ञानेऽस्मिन् ज्ञानेन दिव्यत्वोन्याश्रय इति वाच्यं उत्तमवृद्धोक्तानां
वर्णानां क्रमेणांत्यवर्णश्रवणानंतरं बालस्यैकस्मृत्यारूढानां मध्यमवृद्धस्य प्रवृत्त्यादिलिंगानुमितैकार्थधीहेतुत्वनिश्चये सत्येकपदवाक्यत्वनिश्च

तयोरकारादयइवगकारादयोऽप्यस्यां बुद्धौ वर्तेरन् न तु तथा ॥ तस्मादियमेकबुद्धिर्वर्णविषयैव स्मृतिः ॥ नन्वनेकत्वा
द्वर्णानां नैकबुद्धिविषयतोपपद्यत इत्युक्तं तत्र भ्रमित्राम(?)ः ॥ संभवत्यनेकस्याप्येकबुद्धिविषयत्वं पंक्तिर्वनं सेना दश शतं स
हस्रमित्यादिदर्शनात् यानुगोमित्येकोऽयं शब्द इति बुद्धिः सा बहुष्वेव वर्णेष्वेकार्थावच्छेदनिबंधनौपचारिकी वनसेनादिषु
बुद्धिवदेव ॥ अत्राह ॥ यदि वर्णा एव सामस्त्येनैकबुद्धिविषयतामापद्यमानाः पदं सरस्तो जारा राजा कपिः पिक इत्यादि
षु पदविशेषप्रतिपत्तिर्न स्यात् ॥ त एव हि वर्णा इतरत्रेतरत्र च प्रत्यवभासंत इत्यत्र वदामः सत्यपि समस्तवर्णप्रत्यवमर्शे य
थाक्रमानुरोधिन्य एव पिपीलिकाः पंक्तिबुद्धिमारोहंत्येवं क्रमानुरोधिन एव वर्णाः पदबुद्धिमारोहंतीति ॥ तत्र वर्णानामवि
शेषेऽपि क्रमविशेषकृतापदविशेषप्रतिपत्तिर्न विरुध्यते ॥ वृद्धव्यवहारे चेमे वर्णाः क्रमाद्यनुगृहीतार्थविशेषसंबंधाः
सतः स्वव्यवहारेऽप्येकैकवर्णग्रहणानंतरं समस्तप्रत्यवमर्शिन्यां बुद्धौ तादृशा एव प्रत्यवभासमानास्तं तमर्थमव्यभिचा

रात् ॥ वर्णसाम्येऽपि पदभेददृष्टेर्वर्णातिरिक्तं पदं स्फोटाख्यमंगीकार्यमिति शंकते ॥ अत्राहेति ॥ क्रमभेदाद्वर्णेष्वे ‘रेण प्रत्यापयिष्य
व पदभेददृष्टिरिति परिहरति ॥ अत्रेति ॥ ननु नित्यविभूनां वर्णानां कथं क्रमः कथं वा पदत्वज्ञानेनार्थधीहेतुत्वं तत्राह ॥ वृद्धेति ॥ व्युत्पत्तिदशा
यामुच्चारणक्रमेणउपलब्धिक्रमममुपलभ्यमानवर्णेष्वारोप्यैते वर्णा एतत्क्रमैतत्संख्यावंत एतदर्थशक्ता इति गृहीताः संतः श्रोतुः प्रवृत्तिकालेन

स्थायिवर्णवारमुपसंहरति ॥ वर्णेति ॥ दृष्टं वर्णानामर्थबोधकत्वं ॥ अदृष्टः स्फोटः संप्रति वर्णानामस्थिरत्वमंगीकृत्य प्रौढवादेन स्फोटं विघटयति ॥
अथापीति ॥ स्थिराणि गत्वादिसामान्यानि क्रमविशेषवंति गृहीतसंगतिकान्यर्थबोधकानीति कृत्नेषु सामान्येषु प्रक्रिया संचारयितव्या ॥ ननु क्लृप्तः
स्फोटः कल्पनीयस्त्वर्थः ॥ वर्णानां स्यापि त्व वाचकत्वयोः सिद्धौ फलितमाह ॥ नतश्चेति ॥ २८ ॥ पूर्वतंत्रवृत्तानुवादपूर्वकं सूत्रं व्याचष्टे ॥ कर्तुरित्यादिना पू
र्वतंत्रसिद्धमेव वेदस्य नित्यत्वं देवादिव्यक्तिसृष्टेन वाचकशब्दस्यापि सृष्टेरसिद्धमित्याशंक्यानित्याकृतिवाचकाच्छब्दात्त्व्यक्तिजन्मोक्त्या सांकेतिकत्वं

वर्णवादिनो लघीयसी कल्पना ॥ स्फोटवादिनस्तु दृष्टहानिरदृष्टकल्पना वर्णाश्चैमे क्रमेण गृह्यमाणाः स्फोटं व्यंजयंति ॥
स स्फोटोऽर्थं व्यनक्तीति गरीयसी कल्पना स्यात् ॥ अथापि नाम प्रत्युच्चारणमन्येऽन्ये च वर्णाः स्युस्तथापि प्रत्यभिज्ञालंबनभा
वेन वर्णसामान्यानामवश्याऽभ्युपगंतव्यत्वात् ॥ या वर्णेष्वर्थप्रतिपादनप्रक्रिया रचिता सा सामान्येषु संचारयितव्या ॥ नत
श्च नित्येभ्यः शब्देभ्यो देवादिव्यक्तीनां प्रभव इत्यविरुद्धं ॥ २८ ॥ अत एव च नित्यत्वं ॥ २९ ॥ स्वतंत्रस्य कर्तुरस्मरणादिभिः
स्थिते वेदस्य नित्यत्वे देवादिप्रभवाभ्युपगमेन तस्य विरोधमाशंक्यातः प्रभवादिति परिहृत्येदानीं तदेव वेदनित्यत्वं स्थि
तं द्रढयत्यत एव च नित्यत्वमिति ॥ अत एव नियताकृतेर्देवादेर्जगतो वेदशब्दप्रभवत्वाद्वेदशब्दे नित्यत्वमपि प्रत्येतव्
यं ॥ तथा च मंत्रवर्णः ॥ यज्ञेन वाचः पदवीयमायन्तामन्वविंदन्नृषिषु प्रविष्टामिति स्थितामेव वाचमनुविन्नां
दर्शयति ॥ वेदव्यासश्चैवमेव स्मरति ॥ युगांतेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः ॥ लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभु
निरस्य वेदोऽवांतरप्रलयावस्थायी जगद्धेतुत्वादीश्वरवदित्यनुमा वेति ॥ २९ ॥ समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शना
नेन दृढयतीत्यर्थः यज्ञेन पूर्वसुकृतेन वाचो वेदस्य लाभयोग्यतां प्राप्ताः संतो याज्ञिकास्तामृषिषु स्थितां लब्धवंत इति मंत्रार्थः ॥ अनुविन्नामु
पलब्धां पूर्वसर्वांतरकल्पादौ ॥ २९ ॥ ननु महाप्रलये जातेरप्यसत्त्वात् शब्दार्थसंबंधानित्यत्वमित्याशंक्याह ॥ समानेति ॥

सूत्रनिरस्यां शंकामाह। अथापीति। व्यक्तिसंतत्या जातीनां अवांतरप्रलये सत्वात्संबंधनित्यत्वव्यवहाराविच्छेदात् ज्ञापने चेति विवदस्यानपेक्षत्वेन प्रामाण्येन कश्चिद्विरोधः स्यात्। निर्लेपलये तु संबंधनाशात् पुनः सृष्टौ केनचित्पुंसा संकेतः कर्तव्य इति पुरुषबुद्धिसापेक्षत्वेन वेदस्याप्रामाण्यं अध्यापकस्याश्रयस्य नाशाद्वाश्रितस्य तस्यानित्यत्वं च प्राप्तमित्यर्थः। महाप्रलयेऽपि निर्लेपलयोऽसिद्धः सत्कार्यवादात्। तथा च संस्कारात्मना शक्त्यात्मनावस्थितानां सतामेव पुनः सृष्टावभिव्यक्तेर्नानित्यत्वं। अभिव्यक्तानां पूर्वकल्पनीयनामरूपसमानत्वात् न संकेतः केनचित्कार्यः विषमसृष्टौ हि संकेतापे

अथापि स्यात्। यदि पश्वादिव्यक्तिवत् देवादिव्यक्तयोऽपि संतत्यैवोत्पद्येरन् निरुध्येरंश्च ततोऽभिधानाभिधेयाभिधातृव्यवहाराविच्छेदात्संबंधनित्यत्वेन विरोधः शब्दे परिह्रियेत। यदा तु खलु सकलं त्रैलोक्यं परित्यक्तनामरूपं निर्लेपं प्रलीयते प्रभवति चाभिनवमिति श्रुतिस्मृतिवादा वदंति। तदा कथमविरोध इति। तत्रेदमभिधीयते। समाननामरूपत्वादिति। तदापि संसारस्यानादित्वं तावदभ्युपगंतव्यं। प्रतिपादयिष्यति चाचार्यः संसारस्यानादित्वम् उपपद्यते चाप्युपलभ्यते चेति। अनादौ च संसारे यथा स्वापप्रबोधयोः प्रलयप्रभवश्रवणेऽपि पूर्वप्रबोधव्यवहारवदुत्तरप्रबोधव्यवहारान्न कश्चिद्विरोधः। एवं कल्पांतरप्रभवप्रलययोरपीति द्रष्टव्यं। स्वापप्रबोधयोश्च प्रलयप्रभवौ श्रूयेते। यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति तदैनं वाक्सर्वैर्नामभिः सहाप्येति चक्षुः सर्वैः रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यानैः सहाप्येति स यदा प्रतिबुध्यते यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिंगा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः सर्वे प्राणा यथायत तनं विप्रतिष्ठंते प्राणेभ्यो देवा देवेभ्यो लोका

सा न तुल्यसृष्टाविति परिहरति। तत्रेदमित्यादिना। नन्वाद्यसृष्टौ संकेतः केनचित्कार्य इत्यत आह। तदापीति। महासर्गप्रलयावृत्तावपीत्यर्थः। नन्वस्त्वनादिसंसारे संबंधस्यानादित्वं तथापि महाप्रलयव्यवधानात् अस्मरणे कथं वेदार्थव्यवहारस्तत्राह। अनादौ चेति न कश्चिद्विरोधः शब्दार्थसंबंधस्मरणादेरिति शेषः। स्वापप्रबोधयोर्लयसर्गौ सिद्धिमाशंक्य श्रुतिमाह। स्वापेति। अथ तदा सुषुप्तौ प्राणे

आपतनं गोलकं आनंतर्ये पंचमी प्राणेभ्य इत्यादावादृष्टव्यास्वप्नवत्कल्पितस्याज्ञानसत्ताभावात् दर्शनं सृष्टिः अदर्शनं लय इति दृष्टिसृष्टिपक्षः श्रुत्यभिप्रेत
इति भावः ॥ दृष्टान्तवैषम्यमाशंक्य परिहरति ॥ स्यादित्यादिना ॥ अविरुद्धमनुसंधानादिकमिति शेषः ॥ हिरण्यगर्भादयः पूर्वकल्पानुसंधानसमर्थाः संसारि
त्वादस्मदादिवदित्याशंक्याह ॥ यद्यपीति ॥ इति यद्यपि तथापि न प्राकृतवदिति योजना अज्ञानादेर्निकर्षवदुत्कर्षोऽप्यंगीकार्यः बाधाभावादिति न्यायानुगृ

स्यादेतत् ॥ स्वापे पुरुषांतरव्यवहाराः विच्छेदात् स्वयं च सुप्तप्रबुद्धस्य पूर्वप्रबोधव्यवहारानुसंधानसंभवादविरुद्धं महाप्र
लये तु सर्वव्यवहारोच्छेदात् ॥ जन्मांतरव्यवहारवच्च कल्पांतरव्यवहारस्यानुसंधातुमशक्यत्वात् वैषम्यमिति नैष दोषः सत्य
पि सर्वव्यवहारोच्छित्तिनिमित्ते महाप्रलये परमेश्वरानुग्रहादीश्वराणां हिरण्यगर्भादीनां कल्पांतरव्यवहारानुसंधानोपपत्तेः ॥ यद्य
पि प्राकृताः प्राणिनो न जन्मांतरव्यवहारमनुसंदधानाः दृश्यंत इति ॥ न तथापि प्राकृतवदीश्वराणां भवितव्यं ॥ यथा हि प्रा
णित्वाविशेषेपि मनुष्यादिस्तंबपर्यंतेषु ज्ञानैश्वर्यादिप्रतिबंधः परेण परेण भूयान् भवन् दृश्यते ॥ तथा मनुष्यादिष्वेव
हिरण्यगर्भपर्यंतेषु ज्ञानैश्वर्याद्यभिव्यक्तिरपि परेण परेण भूयसी भवतीत्येतत् श्रुतिस्मृतिवादेष्वसकृदनुश्रूयमाणं न
शक्यं नास्तीति वदितुं ॥ ततश्च अतीतकल्पानुष्ठितप्रकृष्टज्ञानकर्मणामीश्वराणां हिरण्यगर्भादीनां वर्तमानकल्पादौ प्रा
दुर्भवतां परमेश्वरानुगृहीतानां सुप्तप्रतिबुद्धवत् कल्पांतरव्यवहारानुसंधानोपपत्तिः ॥ तथा च श्रुतिः ॥ यो ब्रह्माणं वि
दधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ॥ तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये इति ॥ १ ॥ हीनत्वश्रुत्यादिभिः सा

मान्यतो दृष्टानुमानं बाध्यमित्याह ॥ यथाहीत्यादिना ॥ ननु तथापि पूर्वकल्पे ईश्वराणां मुक्तत्वादस्मिन्कल्पे कोनुसंधातेत्यत आह ॥ ततश्चेति ॥ ज्ञानाद्युत्क
र्षादित्यर्थः ॥ मुक्तेभ्योन्ये अनुसंधातार इति भावः परमेश्वरानुगृहीतानां ज्ञानातिशये पूर्वोक्तश्रुतिस्मृतिवादानाह ॥ तथा चेति ॥ पूर्वं कल्पादौ सृजति तस्मै ब्रह्म
णे प्रहिणोति गमयति तस्य बुद्धौ वेदानाविर्भावयतीत्यर्थः तं देवं स्वात्माकारमहावाक्योत्थबुद्धौ प्रकाशमानं शरणं परममभयस्थानं निःश्रेयसरूपमहं

प्रपद्ये ॥

न केवलमेकस्यैव ज्ञानातिशयः किंतु बहूनां शास्त्रद्रष्टृणामिति विश्वासार्थमाह ॥ स्मरंतीति ॥ ऋग्वेदो दशमंडलावयववांस्तत्र भवा ऋचो दाशतय्यः वेदांतरेऽपि कांडसूक्तमंत्राणां द्रष्टारो बौधायनादिभिः स्मृता इत्याह ॥ प्रतीति ॥ किंच मंत्राणामृष्यादिज्ञानावश्यकत्वज्ञापिका श्रुतिर्मंत्रद्रष्टृऋषीणां ज्ञानातिशयं दर्शयतीत्याह ॥ श्रुतिरपीति ॥ आर्षेयमृषियोगः ॥ छंदो गायत्र्यादि दैवतमग्न्यादि ब्राह्मणं विनियोगस्तान्यविदित्वानि यस्मिन्मंत्रेणेत्यर्थः ॥ स्थाणुं स्थावरं गर्तं नरकं ॥ तथा च ज्ञानाधिकैः कल्पान्तरितं वेदं स्मृत्वा व्यवहारस्य प्रवर्तितत्वात् वेदस्यानादित्वमनपेक्षत्वं चाविरुद्धमिति भावः ॥ अधुनाऽसमानं नामरूपं तत् प्रपंचयति ॥ प्राणिनां चेति ॥ ततः किं तत्राह ॥ दृष्टेति ॥ ऐहिकामुष्मिकविषयसुखरागकृतधर्मस्य फलं पश्वादिकं

स्मरंति च शौनकादयो मधुच्छंदःप्रभृतिभिर्ऋषिभिर्दाशतय्यो दृष्टा इति प्रतिवेदं चैवमेव कांडर्ष्यादयः स्मर्यंते ॥ श्रुतिरप्यृषिज्ञानपूर्वकमेव मंत्रेणानुष्ठानं दर्शयति ॥ यो ह वा अविदितार्षेयच्छंदोदैवतब्राह्मणेन मंत्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्तं वा प्रतिपद्यते इत्युपक्रम्य तस्मादेतानि मंत्रे मंत्रे विद्यादिति ॥ प्राणिनां च सुखप्राप्तये धर्मो विधीयते दुःखपरिहाराय चाधर्मः प्रतिषिध्यते ॥ दृष्टानुश्रविकसुखदुःखविषयौ च रागद्वेषौ भवतो न विलक्षणविषयाविति अतो धर्माधर्मफलभूतोत्तरा सृष्टिर्निष्पद्यमाना पूर्वसृष्टिसदृश्येव निष्पद्यते ॥ स्मृतिश्च भवति तेषां ये यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे तान्येव ते प्रपद्यंते सृज्यमानाः पुनः पुनः ॥ हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृतानृते ॥ तद्भाविताः प्रपद्यंते तस्मात्तत्तस्य रोचते ॥

दृष्टपश्वादिसदृशमिति युक्तं विसदृशे कामाभावेन हेत्वभावात् ॥ तथा दृष्टदुःखद्वेषकृताधर्मफलं दृष्टसदृशदुःखमेव न सुखं कृतहान्यादिदोषापत्तेरित्यर्थः ॥ तत्किं तत्र मानमाह ॥ स्मृतिश्चेति ॥ उत्तरसृष्टिः पूर्वसृष्टिसजातीया कर्मफलत्वात् पूर्वसृष्टिवदित्यनुमानं चशब्दार्थः ॥ तेषां प्राणिनां मध्ये तान्येव तज्जातीयान्येव तानि दर्शयन् तन्मात्रे हेतुमाह ॥ हिंस्रेति ॥ कर्माणि विहितनिषिद्धत्वाकारेण पूर्वं क्रियमाणत्वेन संस्कारं च जनयंति ॥ तत्रापूर्वोक्तफलं भुंक्ते संस्कारभावितत्वात् पुनस्तज्जातीयानि करोतीत्यर्थः ॥ संस्कारे लिंगमाह ॥ तस्मादिति ॥ संस्कारवशादेव पुण्यं पापं वा रोचते ऽतोऽभिरुचि
लिंगात् पुण्यापुण्यसंस्कारोऽनुमेयः सर्ववस्तुस्वभावः प्रकृतिर्वासनेति च गीयते ॥

एवं क्रमेणासृष्टिसादृश्यमुक्त्वा स्वोपादाने लीनकार्यसंस्काररूपशक्तिबलादपि सादृश्यमाह। प्रलीयमानमिति। इतरथा निःसंस्कारप्रलये जगदुत्पि
त्तेरस्याकस्मिकत्वं स्यादित्यर्थः। ननु जगद्वैचित्र्यकारिण्योऽन्याः शक्तयः कल्प्यन्तां तत्राह। न चेति। अविद्यायां लीनकार्यात्मकसंस्कारादन्याः श-
क्तयो न कल्प्याः मानाभावाद्गौरवाच्च। स्वोपादाने लीनकार्यरूपा शक्तिस्तु महान्न्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति श्रुतिसिद्धा अतोऽविद्यानन्तकार्याद-
न्याः शक्तयो न सन्ति आम्नाविरोधेवनः शक्तिरिति सिद्धान्त इत्यर्थः। निमित्तेषूपादानस्थं कार्यमेवाविद्याघटनया शक्तिरन्या वेत्यनाग्रहः उपादा

प्रलीयमानमपि चेदं जगच्छक्त्यवशेषमेव प्रविलीयते। शक्तिमूलमेव च प्रभवतीतरथाऽऽकस्मिकत्वप्रसंगात्। न
चानेकाकाराः शक्तयः शक्याः कल्पयितुम्। ततश्च विच्छिद्य विच्छिद्याप्युद्भवतां भूरादिलोकप्रवाहाणां देवतिर्यङ्मनुष्यलक्ष-
णानां च प्राणिनिकायप्रवाहाणां वर्णाश्रमधर्मफलव्यवस्थानां चानादौ संसारे नियतत्वमिंद्रियविषयसंबंधनियतत्वव-
त्प्रत्येतव्यं। न हीन्द्रियविषयसंबंधादेर्व्यवहारस्य प्रतिसर्गमन्यथात्वं षष्ठेंद्रियविषयकल्पं शक्यमुत्प्रेक्षितुं। अतश्च सर्वक-
ल्पानां तुल्यव्यवहारत्वात्कल्पान्तरव्यवहारानुसंधानक्षमत्वाच्चेश्वराणां समाननामरूपा एव प्रतिसर्गं विशेषाः प्रादुर्भव-
न्ति। समाननामरूपत्वाच्चावृत्तावपि महासर्गमहाप्रलयलक्षणायां जगतोऽभ्युपगम्यमानायां न कश्चिच्छब्दप्रामाण्यादिवि-
रोधः। समाननामरूपतां च श्रुतिस्मृती दर्शयतः। सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरि

निकार्यसंस्कारसिद्धेः फलमाह। ततश्चेति। यथा सुप्तोत्थितस्य पूर्वं चक्षुर्जातीयमेव च चक्षुर्जायते तेनन्त्र पूर्वरूपजानी( समयोस्त्विति यथा॥
यमेव रूपं गृह्णाति न रसादिकं एवं भोग्या लोका भोगाश्रयाः प्राणिनिकाया भोगहेतुकर्माणि संस्कारबलात्पूर्वलोकादितुल्यान्येवेति नियम इत्यर्थः
॥ निकायाः समूहाः दृष्टान्तासिद्धिमाशंक्याह। नहीति। यथा षष्ठेन्द्रियस्य मनसोऽसाधारणविषयो नास्ति सुखादेः साक्षिवेद्यत्वात्। तथा व्यवहारान्य-
थात्वमसदित्यर्थः। षष्ठमिंद्रियं तद्विषयश्चासंनिति निवार्यः। उक्तार्थं संक्षिपति। अतश्चेति। व्यवहारसाम्यात्संभवाच्च व्यवहृतिप्रमाणाद्व्यक्तयः समा

भाविरहस्यायजमानोऽग्निः अन्नादोग्निरहंस्यामिति कामयित्वा कृत्तिकानक्षत्राभिमानिदेवायाग्नये ऽष्टसुकपालेषु पचनीयं हविर्निरूप्य वानित्य
र्थः ॥ नक्षत्रस्यकिंबहुत्वाद्बहुवचनं ॥ स्मृतौ वेदेष्विति विषयसप्तमी शर्वर्येन्ते प्रसूतानां तेऋतूनांवसंतादीनां लिंगानिनवपल्लवादीनि ॥ पर्यये घटीयंत्र
वदावृत्तौ भावाः पदार्थास्तुल्याइतिशेषः ॥३०॥ तस्माज्जन्मनाशवद्विग्रहांगीकारेपिकर्मणिशब्देचविरोधाभावात् देवादीनामस्ति विद्याधिकार

पूर्वस्मिन्कल्पे सूर्यचंद्रमसः प्रभृतिजगत् कृप्तं तथास्मिन्नपिकल्पे परमेश्वरोऽकल्पयदित्यर्थः ॥ तथा अग्निर्वा अकाम
यत ॥ अन्नादो देवानांस्यामिति ॥ स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपदिति नक्षत्रेष्टिविधौ योऽग्निर्नि
रवपद्यस्मैचाग्नये निरवपत्तयोः समाननामरूपतां दर्शयतीत्येवंजातीयका श्रुतिरिहोदाहर्तव्या ॥ स्मृतिरपि ॥ ऋषीणां
नामधेयानि याश्च वेदेषु दृष्टयः शर्वर्यन्ते प्रसूतानां तान्येवैभ्यो ददात्यजः यथर्तुष्वृतुलिंगानि नानारूपाणि पर्यये ॥ दृ
श्यंते तानि तान्येव तथा भावा युगादिषु ॥ तथाभिमानिनोऽतीतास्तुल्यास्ते सांप्रतैरिह ॥ देवादेवैरतीतैर्हि रूपैर्नामा
भिरेव चेति ॥ एवंजातीयका द्रष्टव्या ॥३०॥ मध्वादिष्वसंभवादनधिकारं जैमिनिः ॥ इह देवादीनामपि ब्रह्मविद्याया
मस्त्यधिकार इति यत्प्रतिज्ञातं तत्पर्यावर्त्यते ॥ देवादीनामनधिकारं जैमिनिराचार्यो मन्यते ॥ कस्मात्मध्वादिष्वसंभवात्
॥ ब्रह्मविद्यायामधिकाराभ्युपगमे हि विद्यात्वाविशेषात् मध्वादिविद्यास्वप्यधिकारोऽभ्युपगम्येत ॥ न चैवं संभव
ति ॥ कथम् असौ वा आदित्यो देवमध्वित्यत्र मनुष्या आदित्यं मध्वध्यासेनोपासीरन् देवादिषु ह्युपासकेष्वभ्युपगम्यमा

इति स्थितमाक्षिपति ॥ मध्वादिष्विति ॥ ब्रह्मविद्यादेवादीनन्नाधिकारोतिविद्यात्वात् ९ नेषु आदित्यः कमन्यमादित्यमुपासीत ॥
मध्वादिविद्यावदित्यर्थः दृष्टांतं विवृणोति ॥ कथमित्यादिना ॥ द्युलोकाख्यवंशदंडेऽन्तरिक्षरूपे मधुपूपे स्थित आदित्यो देवानां मोदनान्मध्वि
वमध्वित्यारोप्यध्यानं कार्यं ॥ तत्रादित्यस्याधिकारो न युक्तः ध्यातृध्येयभेदाभावादित्याह ॥ देवादिष्विति ॥ ॥ ॥ ॥

अस्तु वस्वादीनां तत्राधिकार इत्याशंक्य तेषामपि तत्त्वध्येयत्वात्प्राप्यत्वाच्च न धातृत्वमित्याह पुनश्चेति ॥ चतुर्वेदोक्तकर्माणि प्रणवश्चेति पंचकुसुमा
नि तेभ्यः सोमाज्यादिद्रव्याणि हुतानि लोहितशुक्लकृष्णपरःकृष्णगोप्याख्यानि पंचामृतानि तत्तन्मंत्रभृंगैः सागादूर्ध्वं नीत पंचदिगवस्थिताभिरादित्य
रश्मिनाडीभिर्मध्वपूपस्थितच्छिद्ररूपाभिरादित्यमंडलमानीतानि यशस्तेजइंद्रियवीर्यान्नात्मतापरिणतानि पंचदिक्षु स्थितैर्वस्वादिभिरुपजीव्या
नीति ध्यायतो वस्वादिमाप्तिरुक्तोऽर्थः ॥ सूत्रस्यादिपदार्थमाह ॥ तथाग्निरिति ॥ आकाशब्रह्मणश्चत्वारः पादाः द्वौ कर्णौ द्वे नेत्रे द्वे नासिके एका ।

पुनश्चादित्यव्यपाश्रयाणि पंचरोहितादीन्यमृतान्युपक्रम्य वसवो रुद्रादित्या मरुतः साध्याश्च पंचदेवगणाः क्रमेण
तत्तदमृतमुपजीवंतीत्युपदिश्य स य एतदेवममृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यतीत्यादिना
वस्वाद्युपजीव्यान्यमृतानि विजानतां वस्वादिमहिमप्राप्तिं दर्शयति ॥ वस्वादयस्तु कानन्यान्वस्वादीनमृतोपजीविनो वि
जानीयुः कं वान्यं वस्वादिमहिमानं प्राप्नुयुः ॥ तथाग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इति वायुर्वाव संवर्ग आदित्यो ब्र
ह्मेत्यादेश इत्यादिषु देवतात्मोपासनेषु तेषामेव देवतात्मनामधिकारः संभवति ॥ तथेमावेव गोतमभरद्वाजावयमेव गोतमो
ऽयं भरद्वाज इत्यादिष्वृषिसंबंधेषूपासनेषु तेषामेवर्षीणामधिकारः संभवति ॥ ३१ ॥ कुतश्च देवादीनामनधिकारः ॥ ज्यो
तिषि भावाच्च ॥ ३२ ॥ यदिदं ज्योतिर्मंडलं द्युस्थानमहोरात्राभ्यां बंभ्रमज्जगदवभासयति ॥ तस्मिन्नादित्यादयो देवतावचनाः
शब्दाः प्रयुज्यंते लोकप्रसिद्धेर्वाक्यशेषप्र
वागिति सप्तस्विंद्रियेषु शिरश्चमसतीरस्थेषु सप्तर्षिध्यानं कार्यमित्याह ॥ तथेमावेवेति ॥ अयं द
क्षिणः कर्णः गोतमो वामो भरद्वाजः ॥ एवं दक्षिणनेत्रनासिके विश्वामित्रवसिष्ठौ वामे जमदग्निकश्यपौ वागत्रिरित्यर्थः ॥ अत्रऋषीणां ध्येयत्वान्नाधि
कारः ३१ ॥ किंच विग्रहाऽभावान्देवादीनां नत्राप्यधिकार इत्याह ॥ ज्योतिषि भावाच्चेति ॥ आदित्यः सूर्यश्चंद्रः शुक्रोंगारक इत्यादिशब्दानां ज्योतिःपिंडेषु
प्रयोगस्य भावात्सत्त्वात्तत्र विग्रहवान्देवः कश्चिदस्तीत्यर्थः ॥ आदित्यः पुरस्तादुदेता पश्चादस्तमेतेति मधुविद्यावाक्यशेषे ज्योतिष्येवादित्यशब्दः प्रसि

नचेति॥ अग्न्यादीनामधिकारमाशंक्याह॥ एतेनेति॥ अग्निर्वायुर्भूमिरित्यादिशब्दानां अचेतनवाचित्वेनेत्यर्थः॥ सिद्धांती शंकते॥ स्यादेतदित्यादिना वज्रहस्तः पुरंदर इत्यादयो मंत्राः सोरोदीदित्यादयोऽर्थवादाः॥ इष्टान्भोगान्हि वो देवा दास्यंते यज्ञभाविताः तेतृप्तास्तर्पयंत्येनं सर्वकामफलैः शुभैरित्यादी तिहासपुराणानि लोकेपि यमं दंडहस्तं लिखितं इंद्रं वज्रहस्तमिति विग्रहादिपंचकसद्भावात्॥ अनधिकारदोषो नास्तीत्यर्थः॥ विग्रहो हविषां भोगश्चै श्वर्यं च प्रसन्नता॥ फलप्रदानमित्येतत्पंचकं विग्रहादिकं॥ मानाभावादेतन्नास्तीति दूषयति॥ नेत्यादिना॥ नचात्रेति॥ विग्रहाद्यावित्यर्थः॥ अर्थ

नचज्योतिर्मंडलस्य हृदयादिना विग्रहेण चेतनतयार्थित्वादिना चायोगोऽवगंतुं शक्यते॥ मृदादिवदचेतनत्वावगमात्॥ एतेनाग्न्यादयो व्याख्याताः॥ स्यादेतत्॥ मंत्रार्थवादेतिहासपुराणलोकेभ्यो देवादीनां विग्रहवत्त्वाद्यवगमादयमदो षइति॥ नेत्युच्यते॥ नतावल्लोको नाम किंचित्स्वतंत्रं प्रमाणमस्ति प्रत्यक्षादिभ्य एव ह्यविचारितविशेषेभ्यः प्रमाणेभ्यः प्रसि द्ध्यन्नर्थो लोकात्प्रसिद्ध इत्युच्यते॥ नचात्र प्रत्यक्षादीनामन्यतमं प्रमाणमस्ति॥ इतिहासपुराणमपि पौरुषेयत्वात्प्रमाणां तरमूलतामाकांक्षते॥ अर्थवादा अपि विधिनैकवाक्यत्वात्स्तुत्यर्थाः संतो न पार्थग्र्थ्येन देवादीनां विग्रहादिसद्भावे कार णभावं प्रतिपद्यंते॥ मंत्रा अपि श्रुत्यादिविनियुक्ताः प्रयोगसमवायिनोऽभिधानार्था न कस्यचिदर्थस्य प्रमाणमित्याचक्षते ॥ तस्मादभावो देवादीनामधिकारस्य॥३२॥ भावं तु बादरायणोऽस्ति हि ॥३३॥ तुशब्दः पूर्वपक्षं व्यावर्तयति॥ बादरायणस्त्वा चार्यो भावमधिकारस्य देवादीनामपि मन्यते॥ यद्यपि मध्वादिविद्यासु देवतादिव्यामिश्रास्वसंभवोऽधिकारस्य तथाप्यस्ति हि शुद्धायां ब्रह्मविद्यायां संभवोऽर्थित्वसामर्थ्यापतिषेधाद्यपेक्षित्वादधिकारस्य॥

वादा मंत्रा वा मूलमित्याशंक्याह॥ अर्थवादा इत्या दिना॥ व्रीह्यादिवत्प्रयोगविधिगृहीता मंत्राः प्रयोगसंबद्धाभिधानार्थाः॥ नाज्ञातविग्रहादिपरा इति मीमांसका आचक्षत इत्यर्थः॥ तस्माद्विग्रहाभावा दित्यर्थः॥३२॥ सूत्राभ्यां प्राप्तं पूर्वपक्षं निरस्यति॥ तुशब्द इत्यादिना॥ ब्रह्मविद्यायां देवादीनामधिकारो नेति विद्यानात् मध्वादिविद्यावत् इति उक्तहेतुरप्रयोजक इ

दृष्टादिकं न ब्राह्मणमधिकरोति कर्मत्वात् राजसूयादिवदित्याभाससाम्यं विद्यात्वहेतोराह ॥ नचेति ॥ यत्र यस्याधिकारः संभवति स तत्राधिकारीत्यायस्तु
ल्पइत्यर्थः ॥ यतः सर्वेषां सर्वत्राधिकारो न संभवति ततो न चापोद्येनेत्यन्वयः तत् ब्रह्म यो यो देवादीनां मध्ये प्रत्यक्त्वेनाबुध्यत स तत् ब्रह्माभवदित्यर्थः ॥
तेह देवा ऊचुरन्योन्यं तत इंद्रविरोचनौ सुरासुरराजानौ प्रजापतिं ब्रह्मविद्याप्रदं जग्मतुरिति च लिंगमस्तीत्यर्थः ॥ किमत्र ब्रह्मामृतमिति गंधर्वप्रश्ने
याज्ञवल्क्य उवाच तमिति मोक्षधर्मेषूक्तं देवादीनामधिकारलिंगमित्याह ॥ स्मार्तमिति ॥ यथा बालानां गोलकेषु चक्षुरादिपदप्रयोगेपि शास्त्र

न च क्वचिदसंभव इत्येतावता यत्र संभवस्तत्राप्यधिकारोऽपोद्येत मनुष्याणामपि सर्वेषां ब्राह्मणादीनां सर्वेषु राजसूया
दिष्वधिकारः संभवति ॥ तत्र यो न्यायः सोऽत्रापि भविष्यति ॥ ब्रह्मविद्यां च प्रकृत्य भवति दर्शनं श्रौतं देवाद्यधिकारस्य सूच
कं ॥ तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणामिति ॥ ते होचुर्हन्त तमात्मानमन्विष्यामो यमा
त्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामानितीन्द्रो ह वै देवानामभिप्रवव्राज विरोचनोऽसुराणामित्यादि च ॥ स्मा
र्तमपि गंधर्वयाज्ञवल्क्यसंवादादि ॥ यदप्युक्तं ज्योतिषि भावाच्चेत्यत्र ब्रूमः ॥ ज्योतिरादिविषया अपि आदित्यादयो देवताव
चनाः शब्दाश्चेतनावंतमैश्वर्याद्युपेतं तं तं देवतात्मानं समर्पयंति मंत्रार्थवादादिषु तथा व्यवहारात् अस्ति ह्यैश्वर्ययोगा
द्देवतानां ज्योतिराद्यात्मभिश्चावस्थातुं यथेष्टं च तं तं विग्रहं गृहीतुं सामर्थ्यात् तथा हि श्रूयते सुब्रह्मण्यार्थवादे ॥ मेधा
तिथेर्मेषेति ॥ मेधातिथिं ह काण्वायनमिंद्रो मेषो भूत्वा जहारेति ॥ स्मर्यते च आदित्यः पुरुषो भूत्वा कुंतीमुपजगामहेति

त्रैगोलकातिरिक्तेंद्रियाणि स्वीक्रियंते ॥ तथा ज्योतिरादौ सूर्यादिशब्दप्रयोगेपि विग्रहवद्देवताः स्वीकार्या इत्याह ॥ ज्योतिरादीति ॥ तथा चेतनत्वेन
व्यवहारादित्यर्थः ॥ एकस्य जडचेतनोभयरूपत्वं कथं तत्राह ॥ अस्ति हीति ॥ तथा हि विग्रहवत्तया देवव्यवहारः श्रूयते सुब्रह्मण्य उद्गातृगणस्य
ऋत्विक् तत्संबंधी योऽर्थवादः इंद्र आगच्छेत्यादिः तत्र मेधातिथेर्मेषेतींद्रसंबोधनं श्रुतं तद्व्याचष्टे ॥ मेधेति ॥ मुनिं मेषो भूत्वा जहारेति ज्ञापनार्थं मेषे

भा·भा· टी· र·प्र· १२८

अ·पा· १।३

यदुक्तमादित्यादयो मृदादिवदचेतना एवेति तन्न सर्वत्र जडाजडांशद्वयसत्त्वादित्याह ॥ मृदिति ॥ आदित्यादौ को जडभागः कश्चेतनांश इति तत्राह ॥ ज्योतिरादेस्त्विति ॥ मंत्रादिकं पदशक्त्याभासमानविग्रहादौ स्वार्थे न प्रमाणं अन्यपरत्वात् विषं भुंक्ष्वेति वाक्यवदित्याह यद्यपीति ॥ अन्यपरादपि वाक्यात् बाधाभावे स्वार्थो ग्राह्य इत्याह ॥ अत्र ब्रूम इति ॥ नात्यंतमन्यपरत्वेऽर्थेऽन्वयमात्रेणास्तित्वमुदाहरति ॥ तथा हीति ॥ तृणादौ प्रत्ययोस्ति विग्रहादौ तु नास्तीति वैषम्यं शंकते अन्यथाहेति ॥ विध्युद्देशो विधिवाक्यं तदेकवाक्यतया प्रशस्तो विधिरित्येवार्थवादेषु प्रत्ययः ॥ वृत्तांतो भूतार्थो विग्रहादिः तद्विषयः प्रत्ययो

मृदादिष्वपि चेतनाधिष्ठातारोऽभ्युपगम्यंते मृदब्रवीदापोऽब्रुवन्नित्यादिदर्शनात् ॥ ज्योतिरादेस्तु भूतधातोरादित्यादिष्वचेतनत्वमभ्युपगम्यते चेतनास्त्वधिष्ठातारो देवतात्मानो मंत्रार्थवादादिव्यवहारादित्युक्तं ॥ यदप्युक्तं मंत्रार्थवादयोरन्यार्थत्वान्न देवताविग्रहादिप्रकाशनसामर्थ्यमित्यत्र ब्रूमः ॥ प्रत्ययाप्रत्ययौ हि सद्भावासद्भावयोः कारणं नान्यार्थत्वमनन्यार्थत्वं वा ॥ तथा ह्यन्यार्थमपि प्रस्थितः पथि पतितं तृणपर्णाद्यस्तीत्येव प्रतिपद्यते ॥ अत्राह विषम उपन्यासः ॥ तत्र हि तृणपर्णादिविषयं प्रत्यक्षं प्रवृत्तमस्ति येन तदस्तित्वं प्रतिपद्यते अत्र पुनर्विध्युद्देशैकवाक्यभावेन स्तुत्यर्थेऽर्थवादे न पार्थगर्थ्येन वृत्तांतविषया प्रवृत्तिः शक्याऽध्यवसितुं न हि महावाक्येऽर्थप्रत्यायके ऽवांतरवाक्यस्य पृथक् प्रत्यायकत्वमस्ति ॥ यथा न सुरां पिबेदिति नञ्वति वाक्ये पदत्रयसंबंधात् सुरापानप्रतिषेध एवैकोऽर्थोऽवगम्यते न पुनः सुरां पिबेदिति पदद्वयसंबंधात् सुरापानविधिरपीति ॥ अत्रोच्यते ॥ विषम उपन्यासो युक्तं यत्सुरापानप्रतिषेधे पदान्वयस्यैकत्वादवांतरवाक्यार्थस्याग्रहणं विध्युद्देशार्थवादयोस्तु अर्थवास्यानि पदानि पृथगन्वयं वृत्तांतविषयं प्रतिपाद्यानंतरं कैमर्थ्यकाकांक्षावशेन कामं विधि

नास्तीत्यर्थः ॥ नन्ववांतरवाक्येन विग्रहादिप्रत्ययोस्त्वित्यत आह ॥ नहीति ॥ सुरापानप्रत्ययोपि स्यादिति भावः ॥ पदैकवाक्यत्ववाक्यैकवाक्यत्ववैषम्या-न्नैवमित्याह ॥ अत्रोच्यत इति ॥ नञ्पदमेकं यदा सुरां पिबेदिति पदाभ्यामन्वेति तदा पदैकवाक्यं एकमेवार्थानुभवं करोति ॥ ननु पदद्वयं पृथक् सुरापा

राम १२८

अर्थवादस्तु भूतार्थसंसर्गस्तुतिद्वारं बोधयन् विधिनासाकमेकवाक्यतां भजत इत्यस्ति विग्रहाद्यनुभव इत्यर्थः ॥ नन्वर्थवादस्य पदानामवांतरसंसर्ग
बोधकत्वं विना साक्षादेव विध्यन्वयोऽस्तु तत्राह ॥ यथादीति ॥ साक्षादन्वयायोगं दर्शयति ॥ नहीति ॥ अर्थवादाः सर्वत्र स्वार्थग्रहणमाशंकार्थवा
दान्विभजते ॥ नचेत्रेति ॥ ननत्रार्थवादेषु यत्राऽग्निर्हिमस्य भेषजमित्यादाविन्यर्थः ॥ आदित्यो यूप इत्यभेदो बाधित इति तेजस्वित्वादिगुणवादः ॥
यत्र वज्रहस्तः पुरंदर इत्यादौ मानांतरसंवादविसंवादौ न स्तः तत्र भूतार्थवाद इत्यर्थः ॥ इति विमृश्येत्यध्याहारः ॥ विग्रहार्थवादः स्वार्थेपिना

यथाहि वायव्यं श्वेतमालभेत भूतिकाम इत्यत्र विध्युद्देशवर्तिनां वायव्यादीनां पदानां संबंधो नैवं वायुर्वै क्षेपिष्ठा देवता
वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयतीत्येषामर्थवादगतानां पदानां ॥ नहि भवति वायुर्वा आलभे
तेति क्षेपिष्ठदेवता वा आलभेतेत्यादि ॥ वायुस्वभावसंकीर्तनेन तत्त्वऽवांतरमन्वयं प्रतिपद्यैवं विशिष्टदेवत्यमिदं कर्मेति वि
धिं स्तुवंति ॥ नचात्र सोऽवांतरवाक्यार्थः प्रमाणांतरगोचरो भवति ॥ तत्र तदनुवादेनार्थवादः प्रवर्तते ॥ यत्र प्रमाणांतरवि
रुद्धस्तत्र गुणवादेन यत्र तु तदुभयं नास्ति तत्र किं प्रमाणांतराभावाद्गुणवादः स्यादाहोस्वित्प्रमाणांतराविरोधाद्विद्य
मानवाद इति प्रतीति शरणैर्विद्यमानवाद आश्रयणीयो न गुणवादः ॥ एतेन मंत्रो व्याख्यातः ॥ अपि च विधिभिरेवेंद्रा
दिदेवत्यानि हवींषि चोदयद्भिरपेक्षितमिंद्रादीनां स्वरूपं ॥ नहि स्वरूपरहिता इंद्रादयश्चेतसारोपयितुं शक्यंते ॥ नच

त्पर्यवान् अन्यपरत्वे सत्यज्ञाताऽबाधितार्थकशब्दत्वात् प्रयाजादिवाक्यवत् ९ चेतस्यतारूढाये तस्यैतस्यै देवतायै हविः प्रदातुं
इति न्यायं मंत्रेषु निदिशति ॥ एतेनेति वेदांतानां वादगुणवादानां निरासाय हेतो पदानि ॥ न चोभयपरत्वे वाक्यभेदोऽवांतरार्थस्य महावाक्या
र्थेद्वार त्वादिति भावः ॥ विध्यनुपपत्त्यापि स्वर्गवद्देवताविग्रहो गीकार्य इत्याह ॥ अपि चेति ॥ ननूक्ते यात्मके कर्मणि विधिः फलं विनाऽनु
पपन्न इति भवतु यन्न दुःखेन संभिन्नमित्यर्थवादसिद्धः स्वर्गो विधिप्रमाणकः विग्रहं विना विधेः कानुपपत्तिस्तामाह ॥ नहीति ॥ ६ ॥

उद्दिश्य त्यागानुपपत्तेश्चेतनस्यारोहांऽगीकार्य इत्यत्र श्रुतिमप्याह यस्या इति॥ अतश्चेतनस्यारोहार्थं विग्रह एष्टव्यः॥ किंच कर्मप्रकरणपाठानु वि
ग्रहमभिति: प्रयाजवत् कर्मांगत्वेनांगीकार्यानां विना कर्मापूर्वासिद्धेः किंच सुप्रसन्नविग्रहवद्देवतान्यक्ता शब्दमात्रे देवतेति भक्तिरयुक्तेत्याह॥ नच
शब्देति॥ नचाकृतिमात्रे शब्दशक्यमस्तु किं विग्रहेणेति वाच्यं निर्व्यक्त्याकृत्ययोगात् अतः शब्दस्यार्थाकांक्षायां मंत्रादिप्रमितविग्रहोंगीकार्य इत्याह॥
नत्रेति॥ एवं मंत्रार्थवादमूलकमितिहासादिकमपि विग्रहे मानमित्याह इतिहासेति॥ प्रमाणत्वेन संभवदित्यर्थः॥ व्यासादीनां योगिनां देवतादिप्रत्य

क्षावयतिच॥ यस्यै देवतायै हविर्गृहीतं स्यात्तां मनसा ध्यायेद्वषट्करिष्यन्निति॥ नच शब्दमात्रमर्थस्वरूपं संभवति॥
शब्दार्थयोर्भेदात्॥ तत्र यादृशं मंत्रार्थवादयोरिंद्रादीनां स्वरूपमवगतं तत्तादृशं शब्दप्रमाणकेन प्रत्याख्यातुं युक्तं॥
इतिहासपुराणमपि व्याख्यातेन मार्गेण संभवन्मंत्रार्थवादमूलत्वात्प्रभवति देवताविग्रहादि साधयितुं॥ प्रत्यक्षादिमूल
मपि संभवति॥ भवति ह्यस्माकमप्रत्यक्षमपि चिरंतनानां प्रत्यक्षं॥ तथाच व्यासादयो देवादिभिः प्रत्यक्षं व्यवहरंतीति
स्मर्यते॥ यस्तु ब्रूयादिदानींतनानामिव पूर्वेषामपि नास्ति देवादिभिर्व्यवहर्तुं सामर्थ्यमिति॥ स जगद्वैचित्र्यं प्रतिषेधेत्॥
इदानीमिव च नान्यदापि सार्वभौमः क्षत्रियोऽस्तीति ब्रूयात्ततश्च राजसूयादिचोदनाउपरुंध्यात्॥ इदानीमिव च कालांतरे
ऽप्यव्यवस्थितप्रायान्वर्णाश्रमधर्मान्प्रतिजानीयात्॥ ततश्च व्यवस्थाविधायि शास्त्रमनर्थकं स्यात्॥ तस्माद्धर्मोत्कर्ष
वशाच्चिरंतना देवादिभिः प्रत्यक्षं व्यवजह्रुरिति श्लिष्यते॥ अपि च स्मरंति स्वाध्यायादिष्टदेवतासंप्रयोग इत्यादि॥

प्रत्यक्षमपीतिहासादेर्मूलमित्याह प्रत्यक्षेति॥ व्यासादयो देवादिप्रत्यक्षशून्याः प्राणित्वादस्मदादिवदिति अनुमानमतिप्रसंगेन दूषयति॥ यस्त्वित्यादि
ना॥ सर्वं घटाभिन्नं वस्तुत्वात् घटवदिति जगद्वैचित्र्यं नास्तीत्यपि स ब्रूयात् तथा क्षत्रियाभावं वर्णाश्रमाभावं वर्णाश्रमाद्यव्यवस्थां च ब्रूयात् निरंकुश
बुद्धित्वात्॥ तथा च राजसूयादिशास्त्रस्य कृतादियुगधर्मव्यवस्थाशास्त्रस्य बाध इत्यर्थः॥ योगसूत्रार्थादपि देवादिप्रत्यक्षसिद्धिरित्याह॥ अपि चेति

योगमाहात्म्यस्य श्रुतिस्मृतिसिद्धत्वात् योगिनामस्ति देवादिभिन्नयक्षमित्याह ॥ योगइति ॥ पादतलादाजानोः जानोराणाभेः नाभेराग्रीवं ग्रीवाया आकेशप्ररोहं तत्स्थाः ५ तत्तत्र भूपृथिव्यादिपंचके समुत्थिते धारणया जिते योगगुणे चाणिमादिके प्रवृत्ते योगाभिव्यक्तं तेजोमयं शरीरं प्राप्तस्य योगिनो न योगादिस्पर्श इत्यर्थः ॥ चित्रकारादिप्रसिद्धिरपि विग्रहे मानमित्याह ॥ लोकेति ॥ अधिकरणार्थमुपसंहरति ॥ तस्मादिति ॥ चिंतायाः फलमाह ॥ क्रमेति ॥ एवमेव देवादीनां ब्रह्मविद्याधिकारे सत्येव देवत्वप्राप्तिद्वारा क्रममुक्तिफलान्युपासनानि युज्यंते देवानामनधिकारे त्वनाभावात् क्रम

योगोऽप्यणिमाद्यैश्वर्यप्राप्तिफलः स्मर्यमाणो न शक्यते साहसमात्रेण प्रत्याख्यातुं श्रुतिश्च योगमाहात्म्यं प्रख्यापयति ॥ पृथ्व्याप्यतेजोनिलखे समुत्थिते पंचात्मके योगगुणे प्रवृत्ते ॥ न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरमिति ॥ ऋषीणामपि मंत्रब्राह्मणदर्शिनां सामर्थ्यं नास्मदीयेन सामर्थ्येनोपमातुं युक्तं तस्मात्समूलमितिहासपुराणं ॥ लोकप्रसिद्धिरपि न सति संभवे निरालंबना व्यवसातुं युक्ता ॥ तस्मादुपपन्नो मंत्रादिभ्यो देवादीनां विग्रहवत्वाद्यवगमः ॥ ततश्चार्थित्वादिसंभवादुपपन्नो देवादीनामपि विद्यायामधिकारः क्रममुक्तिदर्शनान्यप्येवमेवोपपद्यंते ॥ ३३ ॥ शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ ३४ ॥ यथा मनुष्याधिकारनियममपोद्य देवादीनामपि विद्यास्वधिकार उक्तस्तथैव द्विजात्यधिकारनियमापवादेन शूद्रस्याप्यधिकारः स्यादित्येतामाशंकां निवर्तयितुमिदमधिकरणमारभ्यते ॥ ९ ॥

मुक्त्यर्थिनामुपासनेषु प्रवृत्तिर्न स्यात् ॥ अतोऽधिकारनिर्णयात्प्रवृत्तिसिद्धिरिति भावः ॥ ९ ॥ शुगस्येति ॥ पूर्वेणास्य दृष्टांतसंगतिमाह ॥ यथेति ॥ पूर्वत्र देवादीनामधिकारसिद्ध्यर्थं मंत्रादीनां भूतार्थे विग्रहादौ समन्वय उक्त्या वेदान्तानामपि भूतार्थे ब्रह्मणि समन्वयो दृढीकृतः ॥ अत्रापि शूद्रशब्दस्य श्रौतस्य क्षत्रिये समन्वयोक्त्या स दृढीक्रियत इत्यधिकरणद्वयस्य प्रासंगिकस्यास्मिन् समन्वयाध्यायेऽन्तर्भाव इति मंतव्यं ॥ पूर्वपक्षे शूद्रस्यापि द्विजवद्वेदांतश्रवणे प्रवृत्तिः सिद्धांते तदभाव इति फलं अत्र वेदान्तविचारो विषयः स किं शूद्रमधिकरोति न वेति संभवासंभवाभ्यां संदेहे पूर्वपक्ष

न च शूद्रस्यापीत्यादिना तस्मादनग्नित्वादनवक्लृप्तो ऽसमर्थः ॥ विद्यार्थिनि शूद्रशब्दप्रयोगाल्लिंगादपि शूद्रस्याधिकार इत्याह ॥ भवति चेति ॥ जानश्रुतिः कि-
ल षट्शतानि गवां रथं च रैक्वाय गुरवे निवेद्य मां शिक्षयेत्युवाच ॥ तमो रैक्वो विधुरः कन्यार्थी सन्निदमुवाच अहेति निपातः खेदार्थः ॥ हारेण निष्केन युक्त इत्वा गं-
ता रथो हारेत्वा स च गोभिः सह हे शूद्र तवैवास्तु किमल्पेनानेन मम गार्हस्थ्यानुपयोगिनेति भावः ॥ अर्थित्वादिसंभवे श्रेयःसाधने प्रवृत्तिरुचिता स्वा-
भाविकत्वादिति न्यायोपेताल्लिंगादित्याह ॥ तस्मादिति ॥ सूत्राद्बहिरेव सिद्धान्तयति ॥ न शूद्रस्याधिकार इत्यादिना ॥ आपाततो विदितो वेदार्थो येन तस्ये-

न च शूद्रस्याप्यधिकारः स्यादिति तावत्प्राप्तमर्थित्वसामर्थ्ययोः संभवात् ॥ तस्माच्छूद्रो यज्ञेऽनवक्लृप्त इतिवत् शूद्रो विद्यायाम-
नवक्लृप्त इति च निषेधाश्रवणात् ॥ यच्च कर्मस्वनधिकारकारणं शूद्रस्याऽनग्नित्वं न तद्विद्यास्वधिकारस्यापवादकं लिंगं
न ह्याहवनीयादिरहितेन विद्या वेदितुं न शक्यते ॥ भवति च लिंगं शूद्राधिकारस्योपोद्बलकं ॥ संवर्गविद्यायां हि जानश्रुतिं
पौत्रायणं शुश्रूषुं शूद्रशब्देन परामृशति ॥ अह हारेत्वा शूद्र तवैव सह गोभिरस्त्विति ॥ विदुरप्रभृतयश्च शूद्रयोनिप्रभ-
वा अपि विशिष्टविज्ञानसंपन्नाः स्मर्यन्ते तस्मादधिक्रियते शूद्रो विद्यास्वित्येवं प्राप्ते ब्रूमः ॥ न शूद्रस्याधिकारो वेदाध्ययना-
भावादधीतवेदो हि विदितवेदार्थो वेदार्थेष्वधिक्रियते ॥ न च शूद्रस्य वेदाध्ययनमस्ति उपनयनपूर्वकत्वाद्वेदाध्ययनस्यो-
पनयनस्य च वर्णत्रयविषयत्वात् ॥ यत्त्वर्थित्वं न तदसति सामर्थ्येऽधिकारकारणं भवति ॥ सामर्थ्यमपि न लौकिकं केव-
लमधिकारकारणं भवति ॥ शास्त्रीयेऽर्थे शास्त्रीयस्य सामर्थ्यस्यापेक्षितत्वात् शास्त्रीयस्य च सामर्थ्यस्याध्ययननिराक-
ऽऽरणेन निराकृतत्वात्

त्यर्थः ॥ अध्ययनविधिना संस्कृतो वेदस्तदुत्थमापातज्ञानं च वेदार्थविचारेषु शास्त्रीयं सामर्थ्यं तदभावात् शूद्रस्या-
र्थित्वादिसंभवन्यायासिद्धेर्नास्ति वेदान्तविचाराधिकार इत्यर्थः ॥ यद्वा ऽध्यापनसंस्कृतेन वेदेन विदितो निश्चितो वेदार्थो येन तस्य वेदार्थेषु विधिष्व-
धिकारो नान्यस्य अनधीतवेदस्यापि वेदार्थानुष्ठानाधिकारे ऽध्यापनविधिवैयर्थ्यापातात् अतः फलपर्यन्तब्रह्मविद्यासाधनेषु श्रवणादिविधि-

अधीतवेदार्थज्ञानवत्त्वरूपस्याध्ययनविधिलभ्यस्य सामर्थ्यस्याभावादिति न्यायस्य तुल्यत्वाच्छूद्रपदं वेदार्थोपलक्षणार्थमित्याह ॥ न्यायस्य साधारणत्वादिति ॥ तस्माच्छूद्र इति तच्छब्दपरामृष्टन्यायस्य यज्ञब्रह्मविद्ययोस्तुल्यत्वादित्यर्थः ॥ पूर्वोक्तं लिंगं दर्शयति ॥ यदिति ॥ असामर्थ्यन्यायेनार्थित्वादिसंभवन्यायस्य निरस्तत्वादित्यर्थः ॥ ननु निषादस्थपतिं याजयेदित्यत्राध्ययनाभावेऽपि निषादशब्दात् निषादस्येष्टाविव शूद्रशब्दात् शूद्रस्य विद्यायामधिकारोऽस्त्वित्याशंक्य संवर्गविद्यायामधिकारमंगीकरोति ॥ काममिति ॥ तद्विषयत्वात्तत्रश्रुतत्वादित्यर्थः ॥ वस्तुतस्तु विधिवाक्यस्थत्वान्निषादशब्दोऽप्यधिकारिसमर्पकः शूद्रशब्दस्तु विद्याविधिपरार्थवादस्थो नाधिकारिणं बोधयति ॥ असामर्थ्यन्यायविरोधेनान्यपरशब्दस्य

यच्चेदं शूद्रो यज्ञेऽनवक्लृप्त इति तत् न्यायपूर्वकत्वाद्विद्यायामप्यनवक्लृप्तत्वं द्योतयति ॥ न्यायस्य साधारणत्वात् ॥ यत्पुनः संवर्गविद्यायां शूद्रशब्दश्रवणं लिंगं मन्यसे न तल्लिंगं न्यायाभावात् ॥ न्यायोक्ते हि लिंगदर्शनं द्योतकं भवति ॥ न चाऽत्र न्यायोऽस्ति ॥ कामं चाऽयं शूद्रशब्दः संवर्गविद्यायामेवैकस्यां शूद्रमधिकुर्यात्तद्विषयत्वान्न सर्वासु विद्यासु अर्थवादस्थत्वात्तु न क्वचिदप्ययं शूद्रमधिकर्तुमुत्सहते ॥ शक्यते चायं शूद्रशब्दोऽधिकृतविषये योजयितुं कथमित्युच्यते ॥ कं वर एनमेतत्सन्तं सयुग्वानमिव रैक्वमात्थेत्यस्माद्धंसवाक्यादात्मनोऽनादरं श्रुतवतो जानश्रुतेः पौत्रायणस्य शुगुत्पेदे तामृषी रैक्वः शूद्रशब्देनानेन सूचयांबभूवात्मनः परोक्षज्ञताख्यापनायेति गम्यते जातिशूद्रस्यानधिकारात् ॥

स्यार्थबोधित्वासंभवात् इति मत्वांगीकारं त्यजति ॥ अर्थवादेति ॥ तर्हि शूद्रशब्दस्यात्र श्रुतस्य कोऽर्थ इत्याशंक्य सूत्रेणार्थमाह ॥ शक्यते चेत्यादिना ॥ जानश्रुतिर्नाम राजा निदाघसमये रात्रौ प्रासादतलेषु स्वापन्नदानदीयाऽन्नदानादिगुणगणतोषिताऋषयोऽस्य हितार्थं हंसा भूत्वा मालारूपेण तस्योपरि आजग्मुः तेषु पाश्चात्यो हंसोऽग्रेसरं हंसमुवाच ॥ भो भो भद्राक्ष किं न पश्यसि जानश्रुतेरस्य तेजः स्वर्गं व्याप्य स्थितं तत्त्वां धक्ष्यति न गच्छेति तमग्रेसर उवाच कं अप्येनं वराकं विद्याहीनं सन्तं अरे सयुग्वानं युग्वागंत्रीशकटीन यासह स्थितं रैक्वमिवैनद्वचनमात्थ रैक्वस्य हि ब्रह्मिष्ठस्य तेजो दुरतिक्रमं नास्यान्य

शा.भा. टी. र.प्र. १२१

अस्मद्वचनस्त्विन्धोराजाशकटलिंगेनरैक्वंज्ञात्वाविद्यावान्भविष्यतीतिहंसानामभिप्रायः कंउअरेइतिपदच्छेदः॥उशब्दोप्यर्थः॥तेषांहंसानामनाद
रवाक्यश्रवणात् अस्यराज्ञः शुगुत्पन्नासाशूद्रशब्देनरैक्केणसूच्यतेहीतिसूत्रान्वयः श्रुतयौगिकार्थलाभसति अनन्वितरूढार्थस्त्याज्यइतिन्याय
द्योतनार्थोहिशब्दः तदाद्रवणात् तयाशुचाआद्रवणात्शूद्रः शोकंप्राप्तवान्॥ शुचावाकश्चोराजाअभिदद्रुवेप्राप्तः शुचावाकरणे नरैक्वंगतवा
नित्यर्थः॥३४॥शूद्रशब्दस्ययौगिकत्वेलिंगमाह॥क्षत्रियत्वेति॥संवर्गविद्याविध्यनंतरमयार्थवादः आरभ्यते शुनकस्यापत्यंकपिगोत्रंपुरोहि

कथंपुनः शूद्रशब्देनशुगुत्पन्नासूच्यतइत्युच्यतेतदाद्रवणात् शुचमभिदुद्रावशुचावाभिदुद्रुवेशुचावारैक्वमभिदुद्रा
वेतिशूद्रः॥अवयवार्थसंभवात्॥रूढ्यर्थस्यचासंभवात्॥दृश्यतेचायमर्थोस्यामाख्यायिकायां॥३४॥क्षत्रियत्वगतेश्चोत्त
रत्रचैत्ररथेनलिंगात्॥३५॥इतश्चनजातिशूद्रोजानश्रुतिः॥यत्कारणंप्रकरणनिरूपणेनक्षत्रियत्वमस्योत्तरत्रचैत्र
रथेनाभिप्रतारिणाक्षत्रियेणसमभिव्याहारात्लिंगाद्गम्यते॥उत्तरत्रहिसंवर्गविद्यावाक्यशेषेचैत्ररथिरभिप्रतारीक्ष
त्रियः संकीर्त्यते॥अथहशौनकंचकापेयमभिप्रतारिणंचकाक्षसेनिंसूदेनपरिविष्यमाणौब्रह्मचारीबिभिक्षइति॥चैत्र
रथित्वंचाभिप्रतारिणः कापेययोगात् अवगंतव्यंकापेययोगोहिचित्ररथस्यावगतः॥एतेनवैचित्ररथंकापेयाअया
जयन्निति समानान्वयानांचप्रायेणसमानान्वयायाजकाभवंति॥तस्माच्चैत्ररथिर्नामैकः क्षत्रपतिरजायतइति।
चक्षत्र–पतित्वावगमादितिक्षत्रियत्वमस्यावगंतव्यं॥तेनक्षत्रियेणाभिप्रतारिणासहसमानायांविद्यायांसंकीर्त्त

नमभिप्रतारिनामकंराजानंचकाक्षसेनस्यापत्यंसूदेनपरिविष्यमाणौतौभोक्तुमुपविष्टौवटुर्भिक्षितवा नंजानश्रुतेरपिक्षत्रियत्वं
मित्यर्थः॥नन्वस्यचैत्ररथित्वंनश्रुतमित्यतआह॥चैत्ररथित्वंचेति॥एतेनद्विरात्रेणेतिछांदोग्यश्रुत्यैवपूर्वंचित्ररथस्यकापेययोगउक्तः अभिप्र
तारिणोपितद्योगात् चित्ररथवंश्यत्वंनिश्चीयते राजवंश्यानांहिप्रायेणपुरोहितवंश्यायाजकाभवंतीत्यर्थः॥नन्वस्त्वभिप्रतारिणश्चैत्ररथित्वंतावं

अ.पा. १।३

राम १२१

क्षत्ता सूतः तस्य रैक्वान्वेषणाय प्रेषणं अन्नगोदानादिकं च जानश्रुतेः क्षत्रियत्वे लिंगं ॥ ३५ ॥ अत्र शूद्रशब्दो यौगिकस्तेन न शूद्रा-
स्याधिकार इति स्थितं तत्र लिंगांतरमाह ॥ संस्कारेति ॥ उपनयनं वेदग्रहणांगं शूद्रस्य नास्तीति पूर्वमुक्तं इह विद्याग्रहणांगस्योपनयनसंस्कार-
स्य सर्वत्र परामर्शात् ॥ शूद्रस्य तदभावान्न विद्याधिकार इत्युच्यते ॥ भाष्ये आदि पदेनाध्ययनगुरुशुश्रूषादयो गृह्यंते तं शिष्यमाचार्य उपनीत-
वानित्यर्थः ॥ नारदोपि विद्यार्थी मंत्रमुच्चारयन् सनत्कुमारमुपगत इत्याह ॥ अधीहीति ॥ उपदिशेति यावत् ॥ ब्रह्मपरा वेदपारगाः सगुणब्रह्म-
निष्ठाः परं निर्गुणं ब्रह्मान्वेषमाणा एष पिप्पलादः तज्जिज्ञासितं सर्वं वक्ष्यतीति निश्चित्य ते भरद्वाजादयः षट् ऋषयस्तमुपगता इत्यर्थः ननु वै

समानानामेव हि प्रायेण समभिव्याहारा भवंति ॥ सत्तृप्रेषणाद्यैश्वर्ययोगाच्च जानश्रुतेः क्षत्रियत्वावगतिः ॥ अतो
न शूद्रस्याधिकारः ॥ ३५ ॥ संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥ इतश्च न शूद्रस्याधिकारो यद्विद्याप्रदेशेषूपन-
यनादयः संस्काराः परामृश्यंते तं होपनिन्ये ॥ अधीहि भगव इति होपससाद ॥ ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमा-
णा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवंतं पिप्पलादमुपसन्ना इति च तान् हानुपनीयैवेत्यपि प्रदर्शितै-
वोपनयनप्राप्तिर्भवति ॥ शूद्रस्य च संस्काराभावोऽभिलप्यते शूद्रश्चतुर्थो वर्ण एकजातिरित्येकजातित्वस्मरणात्
न शूद्रे पातकं किंचिन्न च संस्कारमर्हतीत्यादिभिश्च ॥ ३६ ॥ तदभावनिर्धारणे च प्रवृत्तेः ॥ ३७ ॥ ९ ॥

श्वानरविद्यायां ऋषीन् राजाऽनुपनीयैव विद्यामुवाचेति श्रुतेरनुपनीतस्याप्यस्ति विद्याधिकार इत्यत आह ॥ तान्हेति ते ह समित्पाणयः
पूर्वाह्णे प्रतिचक्रमिर इति पूर्ववाक्ये ब्राह्मणा उपनयनार्थमागता इति उपनयनप्राप्तिं दर्शयित्वा निषिध्यते हीनवर्णेनोत्तमवर्णा अनुपनीयैवोपदे-
ष्टव्या इत्याचारज्ञापनार्थमित्यर्थः एकजातिः अनुपनीतः पातकं अभक्ष्यभक्षणकृतं ॥ ३७ ॥ सत्यकामः किल मृतपितृको जबालां मातरम-
पृच्छत् किंगोत्रोऽहमिति तं मातोवाच भर्तृसेवाव्यग्रतयाहमपि तव पितुर्गोत्रं न जानामि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति स ता-

शा·भा· वत्स्यामीति ततः स जाबालो गौतममागत्य तेन किंगोत्रोसीति पृष्ट उवाच ॥ नाहं गोत्रं वेद्मि न माता वेत्ति परं तु मे मात्रा कथितं उत यत्नार्थमाचार्यं गत्वा अ·पा·
टी· सत्यकामो जाबालोऽस्मीति ब्रूहीति ॥ अनेन सत्यवचनेन तस्य शूद्रत्वाभावो निर्द्धारितः अब्राह्मण एतत्सत्यं विविच्य वक्तुं नार्हतीति निर्धार्याहे सोम्य । १·३
र·प्र· सत्यात् त्वं नागाः सत्यं न त्यक्तवानसि ॥ अतस्त्वामुपनेष्ये तदर्थं समिधमाहरेति गौतमस्य प्रवृत्तेश्च लिंगात् न शूद्रस्याधिकार इत्याह ॥ तदभावेति
१३२

इतश्च न शूद्रस्याधिकारो यत्सत्यवचनेन शूद्रत्वाभावे निर्धारिते जाबालं गौतम उपनेतुमनुशासितुं च प्रववृते नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगा इति श्रुतिलिंगात् ॥ ३७ ॥ श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ ३८ ॥ इतश्च न शूद्रस्याधिकारो यदस्य स्मृतेः श्रवणाध्ययनार्थप्रतिषेधो भवति वेदश्रवणप्रतिषेधो वेदाध्ययनप्रतिषेधस्तदर्थज्ञानानुष्ठानयोश्च प्रतिषेधः शूद्रस्य स्मर्यते ॥ श्रवणप्रतिषेधस्तावदथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमिति ॥ पद्यु ह वा एतत् श्मशानं यच्छूद्रस्तस्मात् शूद्रसमीपे नाध्येतव्यमिति च ॥ अतएवाध्ययनप्रतिषेधो यस्य हि समीपेपि नाध्येतव्यं भवति स कथमश्रुतमधीयीत ॥ भवति च वेदोच्चारणे जिह्वाच्छेदो धारणे शरीरभेद इति ॥ अतएव चार्थादर्थज्ञानानुष्ठानयोः प्रतिषेधो भवति ॥ न शूद्राय मतिं दद्यादिति द्विजातीनामध्ययनमिज्या दानमिति च ॥ येषां पुनः पूर्वकृतसंस्कारवशात् विदुरधर्मव्याधप्रभृतीनां ज्ञानोत्पत्तिस्तेषां न शक्यते फलप्राप्तिः प्रतिषेद्धुं ज्ञानस्यैकांतिकफलत्वात् ॥ श्रावयेच्चतुरो वर्णानिति चेतिहासपुराणाधिगमे चातुर्वर्ण्यस्याधिकारस्मरणात् ॥ वेदपूर्वकस्तु ((नास्त्यधिकारः शूद्राणामि

स्मृतेश्च ॥ ३८ ॥

॥ ३७ ॥ स्मृत्या श्रवणादिनिषेधाच्च नाधिकार इत्याह ॥ श्रवणेति ॥ अस्य शूद्रस्य द्विजैः पठ्यमानं वेदं प्रमादाच्छृण्वतः सीसलाक्षाभ्यां श्रोत्रद्वयपूरणं प्रायश्चित्तं कार्यमित्यर्थः ॥ पद्यु पादयुक्तं संचरिष्णु रूपमिति यावत् भवति च स्मृतिरिति शेषः ॥ मतिर्वेदार्थज्ञानं दानं नित्यं निषिध्यते शूद्रस्य नैमित्तिकं तु दानमस्त्येव ॥ यदुक्तं विदुरादीनां ज्ञाननिष्ठत्वमिति तत्राह ॥ येषामिति ॥ सिद्धांतोसिद्धेर्दुरपह्न

राम १३२

कंपनात् ॥ अस्यापि प्रासंगिकत्वमाशंक्याह ॥ अवसित इति ॥ समाप्त इत्यर्थः काठकं पठति ॥ यदिदमिति ॥ सर्वं जगत् प्राणान्निःसृतं उत्पन्नं प्र णे चिदात्मनि प्रेरके सति एजति चेष्टते तच्च प्राणाख्यं कारणं महद्ब्रह्म बिभेत्यस्मादिति भयं ॥ तस्मिन्भयहेतुत्वे दृष्टांतमाह ॥ वज्रमिति यथोद्यतं वज्रं भयं तथेत्यर्थः ॥ य एतत्प्राणाख्यं ब्रह्म निर्विशेषं विदुस्ते मुक्ता भवंतीत्याह ॥ य इति ॥ नन्वस्मिन्सूत्रे कथमिदं वाक्यमुदाहृतमित्यत आह ॥ ए जतीति ॥ एजत्यर्थस्य कंपनस्य सूचितत्वात् ॥ एजतिपदयुक्तं वाक्यमुदाहृतमित्यर्थः ॥ प्रासंगिकाधिकारचिंतयास्य संगतिर्नोपेक्षितेति शब्दा

कंपनात् ॥ ३९ ॥ अवसितः प्रासंगिकोऽधिकारविचारः प्रकृतामेवेदानीं वाक्यार्थविचारणां प्रवर्तयिष्यामः ॥ यदिदं किंच जगत्सर्वं प्राण एजति निःसृतं ॥ महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवंतीति ॥ एतद्वाक्यमेजृ कंपन इति धा त्वर्थानुगमाल्लक्षितं ॥ अस्मिन्वाक्ये सर्वमिदं जगत्प्राणाश्रयं स्पंदते महच्च किंचिद्भयकारणं वज्रशब्दितमुद्यतमिति तद्वि ज्ञानाच्चामृतत्वप्राप्तिरिति श्रूयते ॥ तत्र कोऽसौ प्राणः ॥ किं तद्भयानकं वज्रमित्यप्रतिपत्तेर्विचारे क्रियमाणे प्राप्तं तावत्प्र सिद्धेः पंचवृत्तिर्वायुः प्राण इति प्रसिद्धेरेव चाशनिर्वज्रं स्यात् वायोश्चेदं माहात्म्यं संकीर्त्यते ॥ कथं सर्वमिदं जगत्पंचवृत्तौ वायौ प्राणशब्दिते प्रतिष्ठायैजति ॥ वायुनिमित्तमेव च महद्भयानकं वज्रमुद्यते ॥ वायौ हि पर्जन्यभावेन विवर्तमाने (ज्योति) विद्युत्स्तनयित्नुवृष्ट्यशनयो विवर्तंत इत्याचक्षते ॥ वायुविज्ञानादेव चेदममृतत्वं ॥ तथा हि श्रुत्यंतरं वायुरेव व्यष्टिर्वा

देव प्रमित इत्यनेनोच्यते ॥ तत्रांऽगुष्ठवाक्योक्तो वा तु वादोऽब्रह्मैकज्ञानार्थ इत्युक्तं ॥ ननु तथेह प्राणा (( युः समष्टिरप पुनर्मृत्युं जयति य एवं तुषादेरेकज्ञानार्थः संभवति प्राणस्य स्वरूपेण कल्पितस्यैक्यायोगात् ॥ अतः प्राणोपास्तिपरं वाक्यमिति प्रत्युदाहरणेन पूर्वपक्षयति प्रसिद्धेः पं चवृत्तिरिति ॥ नन्वत एव प्राण इत्यादौ ब्रह्मणि लिंगात्प्राणश्रुतिर्नीता ॥ अत्रापि सर्वचेष्टाभयहेतुत्वं ब्रह्मलिंगमस्तीति नास्ति पूर्वपक्षावसरो गता र्थत्वादित्यत आह ॥ वायोश्चेति प्रतिष्ठाय स्थितिं लब्ध्वा प्राणे वायौ निमित्ते जगच्चलतीति प्रसिद्धं अतः स्पष्टं ब्रह्मलिंगं नास्तीति भावः ॥ वज्रलिंगा

सूत्राद्बहिरेव सिद्धांतं प्रतिजानीते॥ब्रह्मैवेति॥पूर्वोत्तरवाक्यैकवाक्यतानुगृहीतं सर्वाश्रयत्वं लिंगं वाक्यभेदकप्राणश्रुतेर्बाधकमित्या
ह॥पूर्वत्रेत्यादिना॥शुक्रं स्वप्रकाशं तदु नात्येति निब्रह्मानाश्रितः कोपि लोको नास्त्येवेत्यक्षरार्थः॥सौत्रं लिंगं व्याचष्टे एजयितृत्वमिति॥



तस्माद्वायुरयमिह प्रतिपत्तव्य इत्येवं प्राप्ते ब्रूमः॥ब्रह्मैवेदमिह प्रतिपत्तव्यं॥कुतः पूर्वोत्तरालोचनात्॥पूर्वोत्तरयो
र्हि ग्रंथभागयोर्ब्रह्मैव निर्दिश्यमानमुपलभामहे॥इहैव कथमकस्मादंतराले वायुं निर्दिश्यमानं प्रतिपद्येमहि॥पूर्व
त्र तावत् तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते॥तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चनेति ब्रह्म निर्दिष्टं तदेवेहापि सं
न्निधानाज्जगत्सर्वं प्राण एजतीति च लोकाश्रयत्वप्रत्यभिज्ञानान्निर्दिष्टमिति गम्यते॥प्राणशब्दोप्ययं परमात्मन्येव प्र
युक्तः॥प्राणस्य प्राणमिति दर्शनात्॥एजयितृत्वमपीदं परमात्मन एवोपपद्यते न वायुमात्रस्य॥तथा चोक्तं॥न प्राणेन
नापानेन मर्त्यो जीवति कश्चन॥इतरेण तु जीवंति यस्मिन्नेतावुपाश्रिताविति॥उत्तरत्रापि भयादस्याग्निस्तपति भयात्तप
ति सूर्यः॥भयादिंद्रश्च वायुश्च मृत्युर्धावति पंचम इति ब्रह्मैव निर्देक्ष्यते न वायुः॥सवायुकस्य जगतो भयहेतुत्वाभिधानात्
तदेवेहापि सन्निधानात् महद्भयं वज्रमुद्यतमिति च भयहेतुत्वप्रत्यभिज्ञानान्निर्दिष्टमिति गम्यते॥वज्रशब्दोप्ययं भयहेतु
त्वसामान्यात्प्रयुक्तो यथा हि वज्रमुद्यतं ममैव शिरसि निपतेत् यद्यहमस्य शासनं न कुर्यामित्यनेन भयेन जनो नियमे
राजादिशासने प्रवर्तते॥एवमिदमग्निवायुसूर्यादिकं जगदस्मादेव ब्रह्मणो बिभ्यन्नियमेन स्वव्यापारे प्रवर्तत इ
ति भयानकं वज्रोपमितं ब्रह्म॥तथा च ब्रह्मविषयं श्रुत्यंतरं॥भीषास्माद्वातः पवते भीषोदेति सूर्यः॥भीषास्मादग्निश्चें
((द्रश्च मृत्युर्धावति पंचम इति॥

सवायुकस्य सर्वस्य कंपनश्रवणादपि प्राणः परमात्मैवेत्यर्थः॥ब्रह्मणि वज्रशब्दः कथमित्याशंक्य
गौण इत्याह॥वज्रशब्द इति॥

बृहदारण्यके वायुरेव व्यष्टिरित्यत्राऽपपुनर्मृत्युमित्यपमृत्युजयरूपमापेक्षिकममृतत्वमुच्यते न तु मुख्यामृतत्वं तत्रैव वायूपास्तिप्रकरणं
समाप्याथ हैनमुषस्तः पप्रच्छेति ज्ञेयात्मानमुक्त्वा वाय्वादेर्नाशित्वोक्तेरित्याह ॥ यत्तु वाय्वित्यादिना ॥ तस्मात्काठकवाक्यं ज्ञेये समन्वितमि-
ति सिद्धं ॥ ३९ ॥ ज्योतिर्दर्शनात् छांदोग्ये प्रजापतिविद्यावाक्यमाह ॥ एष इति ॥ परं ज्योतिः श्रुतिभ्यां संशयमाह ॥ तत्रेति ॥ घटादिविषयावर-
कतमोनाशकं सौरमित्यर्थः ॥ पूर्वत्र ब्रह्मप्रकरणस्यानुग्राहकः सर्वशब्दसंकोचायोगोस्तीति प्राणश्रुतिर्ब्रह्मणि नीता ॥ न तथाऽत्र य आ-

अमृतत्वफलश्रवणादपि ब्रह्मैवेदमिति गम्यते ॥ ब्रह्मज्ञानाद्ध्यमृतत्वप्राप्तिस्तमेव विदित्वातिमृत्युमेति नान्यः
पंथा विद्यतेऽयनायेति मंत्रवर्णात् ॥ यत्तु वायुविज्ञानात्क्वचिदमृतत्वमभिहितं तदापेक्षिकं तत्रैव च प्रकरणांतरकरणेन
परमात्मानमभिधायातोऽन्यदार्तमिति वाय्वादेरार्तत्वाभिधानात् ॥ प्रकरणादप्यत्र परमात्मनिश्चयोऽन्यत्र धर्मादन्यत्रा-
धर्मादन्यत्रास्मात्कृताकृतात् ॥ अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वदेति परमात्मनः पृष्टत्वात् ॥ ११ ॥ ३९ ॥ ज्योतिर्दर्श-
नात् ॥ ४० ॥ एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत इति श्रूयते ॥ तत्र संशय्य-
ते ॥ किं ज्योतिःशब्दं चक्षुर्विषयं तमोपहं तेजः ॥ किं वा परं ब्रह्मेति ॥ किं तावत्प्राप्तं ॥ प्रसिद्धमेव तेजो ज्योतिःशब्दमिति ॥
कुतः तत्र ज्योतिःशब्दस्य रूढत्वात् ॥ ज्योतिश्चरणाभिधानादित्यत्र हि प्रकरणात् ज्योतिःशब्दः स्वार्थं परित्यज्य ब्रह्म-
णि वर्तते ॥ न चेह तद्वत् किंचित्स्वार्थपरित्यागकारणं दृश्यते ॥

९. त्मापहतपाप्मेति प्रकरणस्यानुग्राहकं पश्याम इति मत्वो-
दाहरणेन पूर्वपक्षमाह ॥ प्रसिद्धमेवेत्यादिना ॥ पूर्वपक्षे सूर्योपास्तिः सिद्धान्ते ब्रह्मज्ञानान्मुक्तिरिति फलं ॥ ननु ज्योतिरधिकरणे ज्योतिःश-
ब्दस्य ब्रह्मणि वृत्तेरुक्तत्वात्कथं पूर्वपक्ष इत्यत आह ॥ ज्योतिरिति ॥ तत्र गायत्रीवाक्ये प्रकृतब्रह्मपरामर्शकयच्छब्दसामानाधिकरण्या-
त् ज्योतिःशब्दस्य स्वार्थत्यागः कृतस्तथाऽत्र स्वार्थत्यागे हेत्वदर्शनात् पूर्वपक्ष इत्यर्थः ॥

ब्र·भा·
टी·
स·प्र·
१३४

अ·पा·
१·३

ज्योतिःश्रुतेरनुग्राहकत्वेनार्चिरादिमार्गस्थत्वे लिंगमाह तथाचेति ॥ ता वा अस्य हृदयस्य नाड्य इति कंडिकया नाडीनां रश्मीनां च मिथः संश्लेषमु
क्त्वा अथ यत्रैतत्प्राप्तोपानेनैतरं यत्र काले स तन्मरणं यथास्थानयोत्क्रामति अथ तत्र एतैर्नाडीसंश्लिष्टरश्मिभिरूर्ध्वः सन्नुपविगच्छतिगत्वादित्यं ब्रह्मलो
कद्वारभूतं गच्छतीत्यभिहितं तथैवात्रापि शरीरात्समुत्थाय मृत्वा परं ज्योतिरादित्यमुपसंपद्यत इत्यादित्यद्वारा ब्रह्मलोकं गत्वा स्वस्वरूपेणाभिनिष्पद्यत इ
ति वक्तव्यं समुत्थायोपसंपद्येति क्त्वाश्रुतिभ्यां ज्योतिषोर्चिरादिमार्गस्थत्वभानादित्यर्थः ॥ अतो मार्गस्थसूर्योपास्त्याक्रमसुक्तिपरं वाक्यमिति प्राप्ते।
सिद्धान्तयति ॥ एवमिति ॥ व्याख्येयत्वेनोपक्रान्त आत्मैवात्र ज्योतिःशब्देनाख्येय इति ज्योतिर्वाक्येनैकवाक्यताप्रयोजकप्रकरणानुगृहीतेन।

तथा च नाडीखंडे अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्व आक्रमत इति मुमुक्षोरादित्यप्राप्तिर
भिहिता तस्मात्प्रसिद्धमेव तेजो ज्योतिःशब्दमिति ॥ एवं प्राप्ते ब्रूमः ॥ परमेव ब्रह्म ज्योतिःशब्दं कस्मात् दर्शनात् ॥ तस्य ही
ह प्रकरणे वक्तव्यत्वेनानुवृत्तिर्दृश्यते ॥ य आत्माऽपहतपाप्मेत्यपहतपाप्मत्वादिगुणकस्यात्मनः प्रकरणादन्वेष्टव्यत्वेन
विजिज्ञासितव्यत्वेन च प्रतिज्ञानादेतं त्वेव ते भूयोनुव्याख्यास्यामीति चानुसंधानादशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत
इति चाशरीरतायै ज्योतिःसंपत्तेरस्याभिधानात् ब्रह्मभावाच्चान्यत्राशरीरत्वानुपपत्तेः ॥ परंज्योतिः स उत्तमः पुरुष इति
च विशेषणात् ॥ यत्तूक्तं मुमुक्षोरादित्यप्राप्तिरभिहितेति ॥ नासावात्यन्तिको मोक्षो गत्युत्क्रान्तिसंबन्धात् ॥ नह्यात्यन्
तिके मोक्षे गत्युत्क्रान्ती स्त इति वक्ष्यामः ॥ १२ ॥ ४० ॥ आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥ ॥ मपुरुषश्रुत्या वाक्यभेदक।

ज्योतिःश्रुतिर्बाध्यत इति भावः अशरीरत्वफललिंगाच्च ब्रह्मैव ज्योतिर्न सूर्य इत्याह ॥ अशरीरमिति ॥ न च सूर्यप्राप्त्याक्रमेणाशरीरत्वं स्यादिति वा
च्यं परत्वेन विशेषितस्य ज्योतिष एव स उत्तम इति परामर्शेनाशरीरत्वनिश्चयादित्याह ॥ परमिति ॥ पूर्वोक्तलिंगं दूषयति ॥ यत्त्विति ॥ नाडीखंडे दह
रोपासकस्य या सूर्यप्राप्तिरुक्ता स न मोक्ष इति युक्ता सूर्योक्तिः अत्र तु प्रजापतिवाक्ये निर्गुणविद्यायामर्चिरादिगतिस्थसूर्यस्यानन्वयात् अनर्थक
त्वात् श्रुतिव्यत्यासेन स्वरूपं साक्षात्कृत्य परं ज्योतिस्तदैवोपसंपद्यत इति व्याख्येयमिति भावः ॥ ४० ॥ आकाशोर्थान्तरत्वादिव्यपदेशात् ॥ ७ ॥ ७ ॥

राम·
१३४

छांदोग्यमुदाहरति ॥ आकाशइति यथोपक्रमबलात् ज्योतिः श्रुतिबाधस्तथाऽऽकाशोपक्रमात् ब्रह्मादिशब्दबाध इति दृष्टांतेन पूर्वपक्षयति ॥ भूते
ति ॥ श्रुतैर्गुणैराकाशोपास्तिर्निर्गुणब्रह्मज्ञानं चेत्युभयत्र फलं आकाशस्तल्लिंगादित्यनेन पौनरुक्त्यमाशंक्य न ह्यत्र स्पष्टलिंगाश्रवणादिति परिहर
ति ॥ स्रष्टृत्वादेश्चेति वेनामेति प्रसिद्धिलिंगस्याकाशश्रुतेश्च वाक्यशेषगताभ्यां ब्रह्मात्मश्रुतिभ्यामनेकलिंगोपेताभ्यां बाधो युक्तः यत्र बहुप्रमाणसंवा
दस्तत्र वाक्यस्य नान्यार्थमिति निर्णयादिति सिद्धांतयति ॥ पत्मेवेत्यादिना ॥ नामरूपे शब्दार्थौ तदंतःपातिनस्तद्भिन्नत्वं तत्कर्तृत्वं चायुक्तमित्यर्थः

आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदंतरा तद्ब्रह्म तदमृतं स आत्मेति श्रूयते तत्किमाकाशशब्दं परं ब्रह्म किं वा प्र
सिद्धमेव भूताकाशमिति विचारे ॥ भूतपरिग्रहो युक्तः ॥ आकाशशब्दस्य तस्मिन् रूढत्वात् ॥ नामरूपनिर्वहणस्य चाव
काशदानद्वारेण तस्मिन् योजयितुं शक्यत्वात् ॥ स्रष्टृत्वादेश्च स्पष्टस्य ब्रह्मलिंगस्याऽश्रवणात् ॥ इत्येवं प्राप्त इदमुच्यते ॥ परमे
व ब्रह्मेहाकाशशब्दं भवितुमर्हति ॥ कस्मादर्थांतरत्वादिव्यपदेशात् ते यदंतरा तद्ब्रह्मेति हि नामरूपाभ्यामर्थांतरभूतमाका
शं व्यपदिशति ॥ न च ब्रह्मणोऽन्यन्नामरूपाभ्यामर्थांतरं संभवति ॥ सर्वस्य विकारजातस्य नामरूपाभ्यामेव व्याकृतत्वात्
नामरूपयोरपि निर्वहणं निरंकुशं न ब्रह्मणोऽन्यत्र संभवति ॥ अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीत्या
दि ब्रह्मकर्तृत्वश्रवणात् ॥ ननु जीवस्यापि प्रत्यक्षं नामरूपविषयं निर्वोढृत्वमस्ति ॥ बाढमस्त्यभेदस्त्विह विवक्षितः ॥
नामरूपनिर्वहणाभिधानादेव च स्रष्टृत्वादिब्रह्मलिंगमभिहितं भवति ॥ तद्ब्रह्म तदमृतं स आत्मेति च ब्रह्मवादस्य लिंगा

नामादिकर्तृत्वं न ब्रह्मलिंगं जीवस्यत्वादिति शंकते ॥ नन्विति ॥ अनेन जीवेनेत्यत्र जीवस्य ब्रह्माभेदे[illegible]ति ॥ आकाशस्तल्लिंगादित्यस्यै
वतत्कर्तृत्वमुच्यते साक्षाद्योगादिति परिहरति ॥ बाढमिति यद्योक्तं स्पष्टलिंगं नास्तीति तत्राह ॥ नामेति ॥ तर्हि पुनरुक्तिस्तत्राह ॥ आकाशेति
॥ तस्यैव साधकोऽयं विचारः अत्राकाशपदस्य ब्रह्मणि वृत्तिं सिद्धवत्कृत्य तत्र संशयादिप्रवृत्तेरुक्तत्वादिति न पौनरुक्त्यमिति भावः ॥ ४१ ॥

भर्ह्दी गम्येषु कत्तम आत्मेति जनकप्रश्ने याज्ञवल्क्य आह योयमिति॥ विज्ञानं बुद्धिस्तन्मयस्तन्मायः सप्तमी व्यतिरेकार्था प्राणबुद्धिभ्यां भिन्न इत्यर्थः॥ हृत्तेरज्ञानाच्च भेदमाह॥ अंतर्ज्योतिरिति॥ पुरुषः पूर्ण इत्यर्थः॥ उभयोर्लिंगानां दर्शनात्संशयमाह॥ नत्किमिति पूर्वत्र नामरूपाभ्यां भेदोक्तेरा काशोत्रस्तु सुषुप्तो कन्नदयुक्तं प्राज्ञेनात्मना संपरिष्वक्त इति अभिन्नेपि जीवात्मनि भेदोक्ति वदौपचारिकभेदोक्तिसंभवादित्याक्षेपसंगतिः॥ पूर्वपक्षे कर्मकर्तृजीवस्तुतिः सिद्धांते जीवानुवादेन ततः कल्पितभेदभिन्नस्य प्राज्ञस्य परमात्मनः स्वरूपैक्यप्रमितिरिति फलं बुद्धांतो जाग्रदवस्था आदि

व्यपदेशादित्यनुवर्त्तते॥ बृहदारण्यके षष्ठप्रपाठके कतम आत्मेति योयं विज्ञानमयः प्राणेषु हृद्यंतर्ज्योतिः पुरुषः स्तु पक्रम्य भूयानात्मविषयः प्रपंचः कृतः॥ नत्किं संसारीस्वरूपमात्रान्वाख्यानपरं वाक्यमुताऽसंसारिस्वरूपप्रति पादनपरमिति संशयः॥ किं तावत्प्राप्तं संसारिस्वरूपमात्रविषयमेवेति॥ कुतः॥ उपक्रमोपसंहाराभ्यां॥ उपक्रमे यो यं विज्ञानमयः प्राणेष्विति शारीरलिंगादुपसंहारे च स वा एष महानज आत्मा योयं विज्ञानमयः प्राणेष्विति तदपरि त्यागान्मध्येपि बुद्धांताद्यवस्थोपन्यासेन तस्यैव प्रपंचनादित्येवं प्राप्ते ब्रूमः॥ परमेश्वरोपदेशपरमेवेदं वाक्यं न शारी रमात्रान्वाख्यानपरं॥ कस्मात् सुषुप्त्युत्क्रांत्योश्च शारीरात् भेदेन परमेश्वरस्य व्यपदेशात् सुषुप्तौ तावदयं पुरुषः प्राज्ञे नात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नांतरमिति शारीराद्भेदेन परमेश्वरं व्यपदिशति॥ तत्र पुरुषः शारीरः स्यात्तस्य वे दितृत्वात्॥ बाह्याभ्यंतरवेदनप्रसंगे सति तत्प्रतिषेधसंभवात्॥ प्राज्ञः परमेश्वरः सर्वज्ञत्वलक्षणया प्रज्ञया नित्यमवि



मध्यावसाने तु जीवोक्तेर्जीवस्तावक मिदं वाक्यमिति प्राप्ते सिद्धांतयति॥ परमेश्वर इत्यादिना॥ वाक्यस्य जीवस्तावकत्वे जीवाद्भेदेन प्राज्ञस्या ज्ञा नस्योक्तेरसंगतास्यात् अतो ज्ञानाज्ञानसन्निपाते ज्ञातानुवादेनाज्ञातं प्रतिपादनीयं अपूर्वे वाक्यतात्पर्यमिति न्यायादिति सिद्धांततात्पर्यं पुरुषः शरीरं प्राज्ञो जीव इति भ्रांतिं वारयति॥ तत्र पुरुष इत्यादिना देहस्य वेदनाप्रसक्तेर्निषेधायोगात् पुरुषो जीव एव प्राज्ञस्तु रुक्षा परलवेस

अन्वारूढोऽधिष्ठितः उत्सर्जन् घोरान् शब्दान् मुंचन् ॥ बुद्धौ ध्यायंत्यामात्मा ध्यायतीव चलंत्यां चलतीव यस्मात् अतः सर्वविक्रियाश्रुत्य इत्युक्तेर्न
संसारिणि तात्पर्यमित्याह ॥ यतइति ॥ उपक्रमवदुपसंहारवाक्यैक्यं विवक्षितमित्याह ॥ तथेति ॥ व्याचष्टे ॥ योयमिति ॥ अवस्थोपन्यासस्य

तयोरुत्क्रान्तावप्ययं शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जन् यातीति जीवाद्भेदेन परमेश्वरं व्यपदिशति ॥ तत्रापि
शारीरो जीवः स्यात् शरीरस्वामित्वात् ॥ प्राज्ञस्तु स एव परमेश्वरस्तस्मात् सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशात् परमेश्वर एवा
त्र विवक्षित इति गम्यते यदुक्तमाद्यन्तमध्येषु शारीरलिंगात् तत्परत्वमस्य वाक्यस्येति ॥ अत्र ब्रूमः ॥ उपक्रमे तावत् यो
यं विज्ञानमयः प्राणेष्विति न संसारिस्वरूपं विवक्षितं ॥ किं तर्हि अनूद्य संसारिस्वरूपं परेण ब्रह्मणास्यैकतां विवक्षति । य
तो ध्यायतीव लेलायतीवेत्येवमाद्युत्तरग्रंथप्रवृत्तिः संसारिधर्मनिराकरणपरा लक्ष्यते ॥ तथोपसंहारेपि यथोपक्रम
मेवोपसंहरति ॥ स वा एष महानज आत्मा योयं विज्ञानमयः प्राणेष्विति ॥ योयं विज्ञानमयः प्राणेषु संसारी लक्ष्यते स वा
एष महानज आत्मा परमेश्वर एवास्माभिः प्रतिपादित इत्यर्थः ॥ यस्तु मध्ये बुद्धान्ताद्यवस्थोपन्यासात् संसारिस्वरू
पविवक्षां मन्यते स प्राचीमपि दिशं प्रस्थापितः प्रतीचीमपि दिशं प्रतिष्ठेत ॥ यतो न बुद्धान्ताद्यवस्थोपन्यासेनावस्था
वत्त्वं संसारित्वं वा विवक्षति ॥ किं तर्हि अवस्थारहितत्वमसंसारित्वं च ॥ कथमेतदवगम्यते ॥ यदत ऊर्ध्वं विमोक्षायैव
ब्रूहीति पदे पदे पृच्छति

त्वमर्थस्य शुद्धिद्वारैक्यपरत्वात् न जीवलिंगमित्याह ॥ यतो न बुद्धान्तेनेति ॥ प्रश्नोत्तराभ्यामसंसारित्वं गम्यत इत्याह ॥ यदत ऊर्ध्वमिति ॥ कामादि
विवेकानंतरमित्यर्थः ॥

भवतीति चेत्तिं यद्यस्माद्दृक्तिस्माद्दम्यनइतियोजनानेनावस्याधर्मेणानन्वागतोऽस्पृष्टो भवति असंगत्वात् ॥ सुषुप्तावप्यात्मनस्तं पुण्य
पापाभ्यामस्पृष्टं भवति हि यस्मात् आत्मा सुषुप्तौ सर्वशोकातीतस्तस्मात् हृदयस्यैव सर्वशोका इति सूत्रार्थः ॥ ४२ ॥ वाक्यस्य ब्रह्मात्मैक्यपरत्वे हे

यच्चानन्वागतस्तेन भवति असंगो ह्ययं पुरुष इति पदे पदे प्रतिवक्ति ॥ अनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो
हि तदा सर्वान् शोकान् हृदयस्य भवतीति च ॥ तस्मादसंसारिस्वरूपप्रतिपादनपरमेवैतद्वाक्यमित्यवगंतव्यं ॥ ४२
॥ पत्यादिशब्देभ्यः ॥ ४३ ॥ इतश्चाऽसंसारिस्वरूपप्रतिपादनपरमेवैतद्वाक्यमित्यवगंतव्यं ॥ यदस्मिन्वाक्ये पत्याद
यः शब्दा असंसारिस्वरूपप्रतिपादनपराः संसारिस्वभावप्रतिषेधनाश्च भवंति ॥ सर्वस्य वशी सर्वस्येशानः सर्वस्या
धिपतिरित्येवंजातीयका असंसारिस्वभावप्रतिपादनपराः ॥ स न साधुना कर्मणा भूयान्नो एवाऽसाधुना कनीया
नित्येवंजातीयकाः संसारिस्वभावप्रतिषेधनास्तस्मादसंसारी परमेश्वर इहोक्त इत्यवगम्यते ॥ १५ ॥ ४३ ॥ इति
श्रीमच्छारीरकमीमांसाभाष्ये श्रीमच्छंकरभगवत्पादकृतौ प्रथमाध्यायस्य तृतीयः पादः ॥ ३ ॥ ३२ ॥ अस्मिन्
पादे चतुर्दशाधिकरणानि त्रिचत्वारिंशत्सूत्राणि ग्रंथसंख्या ॥ २००० भाष्य ९५० टीका १०६० ॥ ६ ॥ ६ ॥

त्वं तरमाह ॥ पत्यादीति ॥ सूत्रं व्याचष्टे ॥ इतश्चेति ॥ वशी स्वतंत्रोऽपराधीन इति यावत् ॥ ईशानो नियमनशक्तिमान् शक्तेः कार्यमाधिपत्यमि
ति भेदस्तस्माच्छोधितत्वमर्थैक्ये षष्ठाध्यायसमन्वय इति सिद्धं ॥ ४३ ॥ इति श्रीमच्छारीरकमीमांसाव्याख्यायां रत्नप्रभायां प्रथमाध्याये तृतीय

॥श्रीगणेशायनमः॥अव्यक्तेशमजंपंचजनाधारंचकारणंवेदितव्यंप्रियंवंदेप्रकृतिंपुरुषंपरं॥१॥अस्मिन्पादेधिकरणत्रयस्येत्य
धिकरणेनसंगतिंवक्तुंवृत्तमनुवदति॥ प्रसेनि नदशब्दत्वेनप्रधानस्यवैदिकशब्दशून्यत्वेनेत्यर्थः॥ईक्षत्यधिकरणेगतिसामान्य॥
मशब्दत्वंचप्रतिज्ञानंतत्रब्रह्मणिवेदांतानांगतिसामान्यंप्रपंचितंअधुनाप्रधानस्याशब्दत्वमसिद्धमित्याशंकानिरूप्यतइत्याक्षेपसंग
तिः नेनाशब्दत्वनिरूपणेनब्रह्मणिवेदांतानांसमन्वयोदृढीकृतोभवतीत्यध्यायसंगतिरप्यधिकरणत्रयस्यज्ञेयाअत्राव्यक्तपदंविष

आनुमानिकमप्येकेषामिति चेन्नशरीररूपकविन्यस्तगृहीतेर्दर्शयतिच ॥१॥ ब्रह्मजिज्ञासांप्रतिज्ञायब्र
ह्मणोलक्षणमुक्तंजन्माद्यस्ययतइतितल्लक्षणप्रधानस्यापिसमानमित्याशंक्यनदशब्दत्वेननिराकृतमीक्षते।
नाशब्दमितिगतिसामान्यंचवेदांतवाक्यानांब्रह्मकारणवादंप्रतिविद्यतेनप्रधानकारणवादंप्रतीति।
प्रपंचितंगतेनग्रंथेनइदंत्विदानीमवशिष्टमाशंक्यतेयदुक्तंप्रधानस्याशब्दत्वंतदसिद्धंकासुचिच्छा
खासुप्रधानकारणसमर्पणाभासानांशब्दानांश्रूयमाणत्वात् अतःप्रधानस्यकारणत्वंवेदसिद्धमेवमहद्भिःप
रमर्षिभिःकपिलप्रभृतिभिःपरिगृहीतमितिप्रसज्यते तद्यावत्तेषांशब्दानामन्यपरत्वंनप्रतिपाद्यतेतावत्
त्सर्वज्ञंब्रह्मजगतःकारणमितिप्रतिपादितमप्याकुलीभवेत् अतस्तेषामन्यपरत्वंदर्शयितुंपरःसंदर्भःप्रवर्त्त

यः तत्किंप्रधानपरंपूर्वोक्तशरीरपरंवेतिस्मृतिप्रकरणाभ्यांसंशयेपूर्वमप्रसिद्धब्रह्मपरत्वंयथाषष्ठाध्यायस्यदर्शितंतद्वदव्यक्तपदम
प्रसिद्धप्रधानपरमितिपूर्वपक्षयति॥आनुमानिकमिति॥अपिशब्दाद्ब्रह्मांगीकारेणायमशब्दत्वाक्षेपइतिसूचयति तथाचब्रह्मप्रधान
योर्विकल्पेनकारणत्वाद्ब्रह्मण्येववेदांतानांसमन्वयइतिनियमासिद्धिःफलंसिद्धांतेनियमसिद्धिरितिविवेकःपदविचारत्वादधि
करणानामेतत्पादसंगतिर्बोध्याअस्मात्तेकमरूढिभ्यामव्यक्तशब्दःप्रधानपरःशब्दस्पर्शादिशून्यत्वेनयोगसंभवाच्चेत्याह॥ १ ॥

शा॰भा॰ टी॰ र॰प्र॰ १३७ | अ॰पा॰ २।४

शब्दादीति ॥ प्रधानस्य वैदिकशब्दवाच्यत्वे काष्ठनिरित्यत आह ॥ नदेवेति ॥ अजामेकामित्यादावश्रुतिर्हेतुः प्रकृतिस्त्वन इत्यादावस्मृतिः ॥ यदस्यं तत्त्वज्ञ प्रकृतिकमित्यादावयः ततोऽत्रापीव कारणमिति मतस्मृतिरिति भावः सूत्रे तत्र यथैव दत्सिद्धांतयति नैतदिति ॥ प्रधानं वैदिकं नेत्यत्र तात्पर्याभावे हेतुमाह ॥ नहीति ॥ ननु प्रधानस्यात्र प्रत्यभिज्ञानाद्वैदिकत्वमित्यत आह नत्वत्रेति ननु शब्दप्रत्यभिज्ञायामर्थो

आनुमानिकमप्यनुमाननिरूपितमपि प्रधानमेकेषां शाखिनां शब्दवदुपलभ्यते काठके हि पठ्यते महतः परमव्यक्तमव्यक्तात्पुरुषः पर इति तत्र य एव यन्नामानो यत्क्रमाश्च महदव्यक्तपुरुषाः स्मृतिप्रसिद्धास्त एवेह प्रत्यभिज्ञायंते तत्राव्यक्तमिति स्मृतिप्रसिद्धेः शब्दादिहीनत्वाच्च न व्यक्तमव्यक्तमिति व्युत्पत्तिसंभवात् स्मृतिप्रसिद्धं प्रधानमभिधीयते तस्य शब्दवत्वादशब्दत्वमनुपपन्नं तदेव प्रधानं तादृशं प्रत्यभिज्ञायते जगतः कारणं च श्रुतिस्मृतिन्यायप्रसिद्धिभ्य इति चेत् नैतदेवं नह्येतत्काठकवाक्यं स्मृतिप्रसिद्धयोर्महदव्यक्तयोरस्तित्वपरं न ह्यत्र यादृशं स्मृतिप्रसिद्धं स्वतंत्रं कारणं त्रिगुणं प्रधानं तादृशं प्रत्यभिज्ञायते शब्दमात्रं ह्यत्राव्यक्तमिति प्रत्यभिज्ञायते स च शब्दो न व्यक्तमव्यक्तमिति यौगिकत्वादन्यस्मिन्नपि सूक्ष्मे सुदुर्लक्ष्ये च प्रयुज्यते न चायं कस्मिंश्चिद्रूढः या तु प्रधानवादिनां रूढिः सा तेषामेव पारिभाषिकी सती न वेदार्थनिरूपणे कारणभावं प्रतिपद्यते न च क्रममात्रसामान्यात्समानार्थप्रतिपत्तिर्भवत्यसति तद्रूपप्रत्यभिज्ञाने ॥

पि प्रत्यभिज्ञायत इत्याशंक्य यौगिकाच्छब्दादसति नियामके नार्थविशेषधीरित्याह स चेति ॥ रूढ्यानद्धीरित्याशंक्याह रूढिः किं लौकिकी स्मार्ती वा नाद्य इत्याह ॥ न चेति द्वितीयं प्रत्याह ॥ या त्विति ॥ पुरुषसंकेतो नानादिवेदार्थनिर्णये हेतुः पुंमतेर्विचित्रत्वादित्यर्थः ॥ यत्तु स्मार्तक्रमप्रत्यभिज्ञया क्रमिकार्थः स्मार्त एवेति तत्राह ॥ न च क्रमेति ॥ स्थानात्तद्रूपप्रत्यभिज्ञानशंकायामसतीत्यन्वयात्तज्ज्ञोऽव्यत्यासेनात

राम १३७

पूर्वेज्ञानरूपार्थस्य स्थाने तद्विरुद्धज्ञाने सति तस्याधीनोस्तीत्यत्र दृष्टांतमाह तद्धीति प्रकृतेनास्ति विरुद्धज्ञानमित्याशंक्य प्रकरणाच्छरीररथा
नमस्तीत्याह प्रकरणेनेति शरीरमेव रूपकेण रथसादृश्येन विन्यस्तं शरीररूपकविन्यस्तं तस्य पूर्ववाक्ये आत्मबुद्ध्योर्मध्ये स्थानपठितस्यात्रा
पि मध्यस्थेनाव्यक्तशब्देन ग्रहणान्न प्रधानस्य वैदिकत्वमिति सूत्रार्थः स्यात्तेक्रमः किमिति त्यक्तव्य इत्याशंक्य श्रौतक्रमस्य प्रकरणाद्यनुग्रहे
ण बलवत्त्वादित्याह ॥ कुत इत्यादिना तदुभयं विवृणोति तथाहीति रूपकक्लृप्तिः सादृश्यकल्पना प्रग्रहो रशनायदा बुद्धिः सारथिर्विवेकी

तत्स्थाने गां पश्यन्न श्वोयमित्यमूढोध्यवस्यति प्रकरणनिरूपणायां चात्र न परपरिकल्पितं प्रधानं
प्रतीयते शरीररूपकविन्यस्तगृहीतेः शरीरं ह्यत्र रथरूपकविन्यस्तमव्यक्तशब्देन परिगृह्यते कुतः प्र
करणात्परिशेषाच्च तथाह्यनंतरातीतो ग्रंथ आत्मशरीरादीनां रथिरथादिरूपकक्लृप्तिं दर्शयति आत्मा
नं रथिनं विद्धि शरीरं रथमेव तु बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च इंद्रियाणि हयानाहुर्विषयांस्तेषु
गोचरान् आत्मेंद्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण इति ॥ तैश्चेंद्रियादिभिरसंयतैः संसारमधिगच्छति
संयतैस्त्वध्वनः पारं तद्विष्णोः परमं पद माप्नोतीति दर्शयित्वा किं तदध्वनः पारं तद्विष्णोः परमं पदमित्य
स्यामाकांक्षायां तेभ्य एव प्रकृतेभ्यः इंद्रियादिभ्यः परत्वेन परमात्मानमध्वनः पारं विष्णोः परमं पदं दर्शयति ॥

तदा मनसेंद्रियहयान् विषमविषयमार्गादाकर्षतीत्यविवेकिनस्तदा मनोरशनाबद्धांस्तान्प्रवर्तयतीति मनसः प्रग्रहत्वं युक्तं तेषु
हयेषु गोचरान्मार्गान् ननु स्वतश्चिदात्मनो भोगसंभवात्किं रथ्यादिनेत्यत आह ॥ आत्मेति ॥ आत्मा देहः देहादिसंगकल्पनया भो
क्तृत्वं न स्वतोऽसंगतादित्यर्थः ॥ अधुना रथ्यादिभिर्गंतव्यं वदन्नाकांक्षापूर्वकमुत्तरवाक्यमाह ॥ तैश्चेत्यादिना ॥ ७ ॥ ७ ॥

शां·भा·
टी·
रत्न·
१३८

अ·पा·
१४

शरीरस्य प्रकृतत्वेप्यव्यक्तपदेन प्रधानं गृह्यतामित्यत आह॥ तत्र परस्येति॥ एवं प्रकरणं शोधयित्वा शरीरस्य परिशेषणतामानयति तत्रेंद्रिये
त्यादिना॥ अर्थानां पूर्वमनुक्तिशंकां वारयन् परत्वमुपपादयति॥ अर्था इति॥ गृह्णंति पुरुषं पशुंवद्बध्नंतीति ग्रहाः इंद्रियाणि तेषां ग्रहत्वं विष
याधीनं अतो विषयेतेषामकिंचित्करत्वात्ततो ग्रहेभ्यः श्रेष्ठा अतिग्रहा विषया इति बृहदारण्यके श्रवणात् परत्वं श्रेष्ठाभिप्रायेण तत्त्वांतर।

इंद्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः महतः परमव्यक्तमव्यक्तात्पु
रुषः परः पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिरिति॥ तत्र परस्येंद्रियादयः पूर्वस्मिन्रथरूपककल्पनायाम्॥
श्वादिभावेन प्रकृतास्त एवेह परिगृह्यंते प्रकृतपरिहाणा प्रकृतप्रक्रियापरिहाराय॥ तत्रेंद्रियमनोबुद्धयस्तावत्पूर्व
त्रेह च समानशब्दा एव॥ अर्था ये शब्दादयो विषया इंद्रियहयगोचरत्वेन निर्दिष्टास्तेषां चेंद्रियेभ्यः परत्वमिं
द्रियाणां ग्रहत्वं विषयाणामतिग्रहत्वमिति श्रुतिप्रसिद्धेः विषयेभ्यश्च मनसः परत्वं मनोमूलत्वाद्विषयेंद्रि
यव्यवहारस्य मनसस्तु परा बुद्धिः बुद्धिं ह्यारुह्य भोग्यजातं भोक्तारमुपसर्पति बुद्धेरात्मा महान्परो यः स
आत्मानं रथिनं विद्धीति रथित्वेनोपक्षिप्तः आत्मशब्दात् भोक्तुश्च भोगोपकरणात्परत्वोपपत्तेः महत्त्वं चा
स्य स्वामित्वादुपपन्नं॥ अथवा मनो महान्मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः प्रज्ञा संविच्चितिश्चैव स्मृति
श्च परिपठ्यत इति स्मृतेः॥ यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै इति श्रुतेः। १९ त्वेनेति भावः सविकल्पकज्ञानं

मनः निर्विकल्पकनिश्चयात्मिका बुद्धिः॥ आत्मशब्दात्स एव बुद्धेः परः प्रत्यभिज्ञायत इति शेषः हिरण्यगर्भाभेदेन ब्रह्मादिपदवेद्या
समष्टिबुद्धिः महानित्याह॥ अथवेति मननशक्तिर्व्यापिनी भाविनिश्चयो ब्रह्मा आत्मा भोग्यवर्गाश्रयः तात्कालिकनिश्चयः कीर्तिशक्तिः
नियमनशक्तिः त्रैकाल्यनिश्चयः संविदभिव्यंजिका चिद्ध्यस्तानीतस्सर्वार्थग्राहिणी समष्टिबुद्धिरित्यर्थः हिरण्यगर्भस्येयं बुद्धिरस्तीत्य

राम

। नन्वप्रकृतमासां कथमुच्यते तदुक्तौ च प्रधानेन किमपराद्धमित्यत आह ॥ सा चेति ॥ हिरुक् पृथक् पूर्वं व्यष्टिबुद्ध्यभेदेनोक्तात्र ततो भेदेन परत्वमुच्यत इत्यर्थः ॥ नहि रथरथिनोर्द्वौ परिशिष्टौ स्यातां तेनेत्याह ॥ एतस्मिंस्त्विति ॥ अतो रथस्यैव परिशिष्टत्वमाह ॥ तदेवमिति ॥ तेषु पूर्वोक्तेषु षट्पदार्थेष्वित्यर्थः ॥ परिशेषस्य फलमाह ॥ इतराणीति ॥ वेदोऽयमीवेति शेषः दर्शयतीचेति सूत्रभागो व्याख्यातः किंच ब्रह्म

या प्रथमजस्य हिरण्यगर्भस्य बुद्धिः सा सर्वासां बुद्धीनां परा प्रतिष्ठा सेह महानात्मेत्युच्यते सा च पूर्वत्र बुद्धिग्रहणेनैव गृहीता सती हिरुगिहोपदिश्यते तस्या अप्यस्मदीयाभ्यो बुद्धिभ्यः परत्वोपपत्तेः ॥ एतस्मिंस्तु पक्षे परमात्मविषयेणैव परेण पुरुषग्रहणेन रथिन आत्मनो ग्रहणं द्रष्टव्यं परमार्थतः परमात्मविज्ञानात्मनोर्भेदाभावात् ॥ तदेवं शरीरमेवैकं परिशिष्यते ॥ इतराणीन्द्रियादीनि प्रकृतान्येव परमपदं दिदर्शयिषया समनुक्रमन् परिशिष्यमाणेनेहान्त्येनाव्यक्तशब्देन परिशिष्यमाणं प्रकृतं शरीरं दर्शयतीति गम्यते ॥ शरीरेन्द्रियमनोबुद्धिविषयवेदनासंयुक्तस्य ह्यविद्यावतो भोक्तुः शरीरादीनां रथादिरूपकल्पनया संसारमोक्षगतिनिरूपणेन प्रत्यगात्मब्रह्मावगतिरिह विवक्षिता तथा चैष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरिति वैष्णवस्य परमपदस्य दुरवगमत्वमुक्त्वा तदवगमार्थं योगं दर्शयति यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनीत्येतदुक्तं भवति वाचं मनसि संयच्छेत् वागादिबाह्येन्द्रियव्यापारमुत्सृज्य मनोमात्रेणावतिष्ठेत मनोपि विषयविकल्पाभिमुखं विषयविकल्पदोषदर्शनेन ज्ञानशब्दोदितायां बुद्धावध्यवसायस्वभावायां धारयेत् तामपि बुद्धिं महत्यात्मनि भोक्तर्यग्र्यायां वा बुद्धौ सूक्ष्मतापादनेन नियच्छेत् ॥ ५

नैकत्वपरे ग्रंथे भेदवादिनो प्रधानस्यावकाशो नास्तीत्याह ॥ शरीरेत्यादिना भोगो वेदना काठकग्रंथस्यैकवाक्यतायै गूढत्वज्ञेयत्वज्ञानहेतुयोगविधयो लिंगानि संतीत्याह तथा चेत्यादिना । अग्र्यासमाधिपरिपाकजा या सा तथेत्यत्र द्वितीयालोपश्छांदसः । मनसी इति दैर्घ्यं च ॥ १ ॥

शङ्कोत्तरत्वेन सूत्रं व्याचष्टे ॥ उक्तमेतदित्यादिना ॥ कार्यकारणयोरभेदान्मूलप्रकृतिशब्दवदव्यक्तशब्देन विकारो लक्ष्यत इत्यर्थः ॥ गोभि-र्गोविकारैः पयोभिः मत्सरं सोमं श्रीणीत मिश्रितं कुर्यादिति यावत् ॥ श्रीञ् पाक इति धातोर्लोटि मध्यमपुरुषबहुवचनमेतद्व्यत्ययेनात्मनाकार्ये



महान्तं त्वात्मानं शान्त आत्मनि प्रकरणवति परस्मिन्पुरुषे परस्यां काष्ठायां प्रतिष्ठापयेदिति तदेवं पूर्वापरालोचनायां नास्त्यत्र परपरिकल्पितस्य प्रधानस्यावकाशः ॥१॥ सूक्ष्मं तु तदर्हत्वात् ॥२॥ उक्तमेतत्प्रकरणपरिशेषाभ्यां शरीरमव्यक्तशब्दं न प्रधानमिति ॥ इदमिदानीमाशङ्क्यते कथमव्यक्तशब्दार्हत्वं शरीरस्य यावता स्थूलत्वात्स्पष्टतरमिदं शरीरं व्यक्तशब्दार्हं अस्पष्टवचनस्त्वव्यक्तशब्द इति अत उत्तरमुच्यते सूक्ष्मं त्विह कारणात्मना शरीरं विवक्ष्यते सूक्ष्मस्याव्यक्तशब्दार्हत्वात् यद्यपि स्थूलमिदं शरीरं न स्वयमव्यक्तशब्दमर्हति तथापि तस्य त्वारम्भकं भूतसूक्ष्ममव्यक्तशब्दमर्हति प्रकृतिशब्दश्च विकारे दृष्टः यथा गोभिः श्रीणीत मत्सरमिति ॥ श्रुतिश्च तद्धेदं तर्ह्यव्याकृतमासीदिति इदमेव व्याकृतनामरूपविभिन्नं जगत्प्रागवस्थायां परित्यक्तव्याकृतनामरूपं बीजशक्त्यवस्थमव्यक्तशब्दयोग्यं दर्शयति ॥२॥ तदधीनत्वादर्थवत् ॥३॥ अत्राह यदि जगदिदमनभिव्यक्तनामरूपं बीजात्मकं प्रागवस्थमव्यक्तशब्दार्हमभ्युपगम्येत तदात्मना च शरीरस्याप्यव्यक्तशब्दार्हत्वं प्रतिज्ञायेत स एव तर्हि प्रधानकारणवाद एवं सत्यापद्येत अस्यैव जगतः प्रागवस्थायाः प्रधानत्वेनाभ्यु-पगमादिति ॥



स्याव्यक्तशब्दयोग्यत्वमाह ॥ श्रुतिश्चेति ॥ तर्हि प्रागवस्थायामिदं जगदव्याकृतमासीत् ह किलेत्यर्थः ॥ बीजरूपा शक्तिः संस्कारस्तदवस्थं ॥२॥ अपसिद्धान्तशङ्कोत्तरत्वेन सूत्रं व्याचष्टे ॥ अत्राहेत्यादिना ॥ तर्हि तदा एवं सति सूक्ष्मशब्दितप्रागवस्था

ईश्वरे कल्पितान्नियम्यनियन्तृभावान्नाप्रसिद्धांतइत्याह ॥ अत्रोच्यतइत्यादिना कूटस्थब्रह्मणः स्रष्टृत्वसिद्ध्यर्थं अविद्या साक्षीकार्ये
त्युक्तं बंधमुक्तिव्यवस्थार्थमपि साक्षीकार्येत्याह ॥ मुक्तानामिति ॥ यन्नाशान्मुक्तिः सा साक्षीकार्या नो चिन्नैव सृष्टौ मुक्तानां पुनर्बंधापत्ते रि-
त्यर्थः ॥ तस्याः परपरिकल्पितसत्यस्वतंत्रप्रधानाद्वैलक्षण्यमाह ॥ अविद्येत्यादिना ॥ मायामयी प्रसिद्धमायोपमितात्वोके माया

अत्रोच्यते यदि च वयं स्वतंत्रां कांचित्प्रागवस्थां जगतः कारणत्वेनाभ्युपगच्छेम प्रसंजयेम तदा प्रधान-
कारणवादं परमेश्वराधीना त्वियमस्माभिः प्रागवस्था जगतोऽभ्युपगम्यते न स्वतंत्रा सा चावश्याभ्युपगंतव्या
अर्थवती हि सा न हि तया विना परमेश्वरस्य स्रष्टृत्वं सिध्यति शक्तिरहितस्य प्रवृत्त्यनुपपत्तेः ॥ मुक्तानां च पुन-
र्बंधस्यानुत्पत्तिः विद्यया तस्या बीजशक्तेर्दाहात् ॥ अविद्यात्मिका हि बीजशक्तिरव्यक्तशब्दनिर्देश्या परमे-
श्वराश्रया मायामयी महासुषुप्तिर्यस्यां स्वरूपप्रतिबोधरहिताः शेरते संसारिणो जीवाः ॥ तदेतदव्यक्तं
क्वचिदाकाशशब्दनिर्दिष्टं एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति श्रुतेः क्वचिदक्षरशब्दोदि-
तं अक्षरात्परतः पर इति श्रुतेः क्वचिन्मायेति सूचितं मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमिति मंत्रव-
र्णात् ॥ अव्यक्ता हि सा मायातत्वान्यत्वनिरूपणस्याशक्यत्वात् ॥ तदिदं महतः परमव्यक्तमित्युक्तं अव्य-
क्तप्रभवत्वान्महतः यदा हैरण्यगर्भी बुद्धिर्महान् ॥ ११

चिन्नो मायावत्परतंत्रेत्यर्थः जीवभेदोपाधित्वेनापि साक्षीकार्ये
त्याह ॥ महासुषुप्तिरिति बुद्ध्याद्युपाधिभेदाज्जीवा इति वक्तृक्तिः अविद्यायां श्रुतिमप्याह ॥ तदेतदिति आकाशहेतुत्वादाकाशः ज्ञानं वि-
नानाभावादक्षरं विचित्रकारित्वान्मायेति भेदः इदानीमविद्याया ब्रह्माभेदान्यत्वाभ्यामनिर्वाच्यत्वेनाव्यक्तशब्दार्हत्वमाह ॥ अव्यक्तेति
॥ तस्य महतः परत्वं कथमित्यत आह ॥ तदिदमिति ॥ यदा बुद्धिर्महान् तदा तद्धेतुत्वात्परत्वमित्युक्तमित्यन्वयः ॥ ६ ॥ ६ ॥

शा·भा· टी· र·प्र· २५०

प्रतिबिंबस्योपाधिपरतंत्रत्वादुपाधेः प्रतिबिंबात्परत्वमाह ॥ यदा त्विति ॥ हेतुं स्फुटयति ॥ अविद्येति ॥ अव्यक्तस्य परत्वेपि शरीर
स्य किं जातं तदाह तच्चेति नन्विंद्रियादीनामप्यव्यक्ताभेदादव्यक्तत्वं परत्वं च किमिति नोच्यते तत्राह ॥ सत्यपीति ॥ सूत्रद्वयस्य वृ
त्तिकृद्व्याख्यानमुत्थापयति ॥ अन्ये त्विति ॥ पंचीकृतभूतानां सूक्ष्मावयवाः स्थूलदेहारंभकाः सूक्ष्मशरीरं प्रतिजीवं लिंगस्याश्रय

यदा तु जीवो महानात्मा तदाप्यव्यक्ताधीनत्वाज्जीवभावस्य महतः परमव्यक्तमित्युक्तम् अविद्या ह्यव्यक्तं अविद्याव
त्वेनैव जीवस्य सर्वः संसारव्यवहारः संततो वर्तते तच्चाव्यक्तगतं महतः परत्वमभेदोपचारात्तद्विकारे शरीरे
परिकल्प्यते सत्यपि शरीरवदिंद्रियादीनां तद्विकारत्वाविशेषे शरीरस्यैवाभेदोपचारादव्यक्तः शब्देन ग्रहणं
इंद्रियादीनां स्वशब्दैरेव गृहीतत्वात्परिशिष्टत्वाच्च शरीरस्य अन्ये तु वर्णयंति द्विविधं हि शरीरं स्थूलं सूक्ष्मं च।
स्थूलं यदिदमुपलभ्यते सूक्ष्मं यदुत्तरत्र वक्ष्यते तदंतरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्यामि
ति तच्चोभयमपि शरीरमविशेषात्पूर्वत्र रथत्वेन संकीर्तितं इह तु सूक्ष्ममव्यक्तशब्देन परिगृह्यते सूक्ष्मस्याव्य
क्तशब्दार्हत्वात् ॥ तदधीनत्वाच्च बंधमोक्षव्यवहारस्य जीवात्तस्य परत्वं यथार्थाधीनत्वादिंद्रियव्यापारस्येंद्रिये
भ्यः परत्वमर्थानामिति ॥ तैस्त्वेतद्वक्तव्यमविशेषेण शरीरद्वयस्य पूर्वत्र रथत्वेन संकीर्तितत्वात्समानयोः प्र
कृतत्वपरिशिष्टत्वयोः कथं सूक्ष्ममेव शरीरमिह गृह्यते न पुनः स्थूलमपीति ॥ आम्नातस्यार्थं प्रतिपत्तुं प्रभवामो
नाम्नातं पर्यनुयोक्तुं आम्नातं चाव्यक्तपदं सूक्ष्ममेव प्रतिपादयितुं शक्नोतीति नेतरत् व्यक्तत्वात्तस्येति चेन्न ॥ ६ ॥

त्वेन नियतमस्तीति वक्ष्यते देहांतरप्राप्तौ तेन युक्तो गच्छति परलोकमित्यर्थः ॥ कथं तस्य महतो जीवात्परत्वमित्याशंक्याद्वितीयसूत्रं व्याचष्टे ॥
तदधीनत्वाच्चेति ॥ अर्थवदिति सूत्रस्य दृष्टांतमाह ॥ यथेति ॥ तद्व्याख्यानं दूषयति ॥ तैरिति ॥ अव्यक्तपदबलात्प्रकृतमपि स्थूलं त्यज्यत इति

रम २५०

एकार्थबोधकानां शब्दानां मिथ आकांक्षयैकस्यां बुद्धावारूढत्वमेकवाक्यता तच्च मतेन तस्या अभावात्कुतोऽर्थबोध इति समाधत्ते ॥ नेति ॥ तां विना
प्यर्थधीः किन्न स्यादित्यत आह ॥ नहीति ॥ शरीरशब्देन रूढ्या स्थूलं प्रकृतं तत्सहाय निरप्रकृत तस्य भूत सूक्ष्मस्याव्यक्तपदेन ग्रहणमन्याय्यं
स्यादित्यर्थः ॥ अस्त्वेकवाक्यतेत्यत आह ॥ नचेति ॥ ततः किं तत्राह तत्रेति आकांक्षया या चैकवाक्यत्वे सति प्रकृतं शरीरद्वयमव्यक्तपदे
न ग्राह्यं आकांक्षाया स्तुल्यत्वादिति भावः अनात्मनिश्चयः शुद्धिः तदर्थं सूक्ष्ममेवाकांक्षितं ग्राह्यं तत्र सूक्ष्मत्वेनात्माभेदेन गृहीत सदुःशोध

नएकवाक्यताधीनत्वादर्थप्रतिपत्तेः नहीमे पूर्वोत्तरे आम्नाते एकवाक्यतामनापद्य कंचिदर्थं प्रतिपादय
तः प्रकृतहानाप्रकृतप्रक्रियाप्रसंगात् ॥ नन्वाकांक्षामंतरेणैकवाक्यता प्रतिपत्तिरस्ति ॥ तत्राविशिष्टा
यां शरीरद्वयस्य ग्राह्यत्वाकांक्षायां यथाकांक्षं संबंधे अनभ्युपगम्यमाने एकवाक्यत्वेन बाधिता भवति कुतः आ
म्नातार्थस्य प्रतिपत्तिः ॥ नचैवं मंतव्यं दुःशोधत्वात्सूक्ष्मस्यैव शरीरस्येह ग्रहणं स्थूलस्य तु दृष्टबीभत्सतया
सुशोधत्वादग्रहणमिति ॥ यतो नैवेह शोधनं कस्यचिद्विवक्ष्यते ॥ नह्यत्र शोधनविधायि किंचिदाख्यात
मस्ति अनंतरनिर्दिष्टत्वात्तु किं तद्विष्णोः परमं पदमिति इदमिह विवक्ष्यते तथाहि इदमस्मात्परमिदमस्मा
त्परमित्युक्त्वा पुरुषान्न परं किंचिदित्याह ॥ सर्वथापि त्वानुमानिकनिराकरणोपपन्नेस्तथा नामास्तु ततः किं

त्वात्स्थूलस्य दृष्टदौर्गंध्यादिना लशुनादिवदनात्मत्वधीवैराग्ययोः सुलभत्वादिति शंकते ॥ नचेति ॥ दृष्टा बीभत्सा घृणा यस्मिन्
तस्य भावस्तत्ता तयेत्यर्थः ॥ दूषयति यत इति वैराग्याय शुद्धिरत्र न विवक्षिता विध्यभावात्किंतु वैष्णवं परमं पदं विवक्षितमिति तद्दृष्टा
नार्थं प्रकृतं स्थूलमेवाव्यक्तपदेन ग्राह्यमिति भावः ॥ किंच सूक्ष्मस्य लिंगात्तः पातित इंद्रियादिग्रहणे नैव ग्रहणात्पृथगव्यक्तशरीर
पदाभ्यां ग्रहः अभ्युपेय इत्याह ॥ सर्वथेति ॥ स्थूलस्य सूक्ष्मस्य वाग्रहेपीत्यर्थः ॥ तथा नामेति ॥ सूक्ष्ममेवाव्यक्तमस्त्वित्यर्थः ॥ ३ ॥

अत्राव्यक्तं प्रधानं नेत्यत्र हेत्वंतरार्थं सूत्रं ॥ ज्ञेयत्वेति ॥ सत्वादिगुणरूपात्प्रधानात्पुरुषस्यांतरं भेदस्तज्ज्ञानादित्यर्थः ॥ नहि शक्यमितिच वदद्भिः प्रधानं ज्ञेयत्वेन स्मर्यत इति संबंधः नकेवलं भेदप्रतियोगितया प्रधानस्य ज्ञेयत्वं नेष्टं किंतु तस्योपासनया णिमादिप्राप्तयेपी-त्याह ॥ कचिच्चेति ॥ ज्ञानविषयभावेप्यव्यक्तपदजन्यज्ञानगम्यत्वमार्थिकं ज्ञेयत्वमस्तीत्यत आह ॥ नचानुपदिष्टमिति ॥ उपदिष्टं हि ज्ञानं फलवदिति ज्ञातुं शक्यं निष्फलस्योपदेशायोगात् अव्यक्तस्य च ज्ञानानुपदेशात्फलवज्ज्ञानगम्यत्वासिद्धिरित्यर्थः ॥ फलितमाह ॥ तस्मा

ज्ञेयत्वावचनाच्च ॥ ४ ॥ ज्ञेयत्वेन च सांख्यैः प्रधानं स्मर्यते गुणपुरुषांतरज्ञानात्कैवल्यमिति वदद्भिः नहि गुणस्वरूपमज्ञात्वा गुणेभ्यः पुरुषस्यांतरं शक्यं ज्ञातुमिति ॥ कचिच्च विभूतिविशेषप्रतिपत्तये प्रधानं ज्ञेयमिति स्मरंति नचेदमिहाव्यक्तं ज्ञेयत्वेनोच्यते पदमात्रं ह्यव्यक्तशब्दो नेहाव्यक्तं ज्ञातव्यमुपासितव्यं चेति वाक्यमस्ति नचानुपदिष्टं पदार्थज्ञानं पुरुषार्थमिति शक्यं प्रतिपत्तुं ॥ तस्मादपि नाव्यक्तशब्देन प्रधानमभिधीयते ॥ अस्माकं तु रथरूपककॢप्तशरीराद्यनुसरणेन विष्णोरेव परमं पदं दर्शयितुमयमुपन्यास इत्यनवद्यं ॥ ४ ॥ वदतीतिचेन्न प्राज्ञो हि प्रकरणात् ॥ ५ ॥ अत्राह सांख्यो ज्ञेयत्वावचनादित्यसिद्धं कथं श्रूयते हि उत्तरत्राव्यक्तशब्दोदितस्य प्रधानस्य ज्ञेयत्ववचनं अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगंधवच्च यत् अनाद्यनंतं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यत इति अत्र हि यादृशं शब्दादिहीनं प्रधानं महतः परं स्मृतौ निरूपितं तादृशमेव

दिति ॥ सांख्येष्टसफलज्ञानगम्यत्वावचनाच्चेत्यर्थः ननु शरीरस्यापि ज्ञेयत्वानुक्तेः कथमिह ग्रहणं तत्राह ॥ अस्मा

निचाय्यत्वेन नि-

कत्विति ॥ अस्मन्मते विस्वाख्यपदस्यैकस्यैव ज्ञेयत्वात्तद्दर्शनार्थमव्यक्तपदेन शरीरोपन्यासो युक्त इत्यर्थः साधारणशब्दमात्रात्प्रधानस्य प्रत्यभिज्ञा स्मार्तलिंगस्यानुक्त्या नियामकाभावादिति तात्पर्यं ॥ ४ ॥ लिंगोक्तिमाशंक्य निषेधति ॥ वदतीति चेदिति ॥ अत्र हि तादृशमेव निर्दि

किंचात्र कठवल्ल्यां प्रधानस्य प्रश्नोत्तरयोरसत्वान्नग्रहणमित्याह ॥ त्रयाणामिति ॥ मृत्युना नचिकेतसं प्रति त्रीन्वरान्वृणीष्वेत्युक्तेः
त्रयाणामेव प्रश्नो नचिकेतसा कृतः उपन्यासश्च मृत्युना नान्यस्येत्यर्थः ॥ प्रश्नत्रयं क्रमेण पठति ॥ तत्रतावदिति ॥ हे मृत्यो सम्प्रहादर

तस्मात्प्रधानमेवेदं तदेव चाव्यक्तशब्दनिर्दिष्टमिति अत्र ब्रूमः नेह प्रधानं निचाय्यत्वेन निर्दिष्टं प्राज्ञो हीह परमात्मा निचाय्यत्वेन निर्दिष्ट इति गम्यते कुतः प्रकरणात् प्राज्ञस्य हि प्रकरणं वितत वर्तते पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिरित्यादिनिर्देशात् एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते इति च दुर्ज्ञानत्ववचनेन तस्यैव ज्ञेयत्वाकांक्षणात् यच्छेद्वाङ्मनसी प्राज्ञ इति च तज्ज्ञानायैव वागादिसंयमस्य विहितत्वात् मृत्युमुखप्रमोक्षणफलत्वाच्च नहि प्रधानमात्रं निचाय्य मृत्युमुखात्प्रमुच्यत इति सांख्यैरिष्यते चेतनात्मविज्ञानाद्धि मृत्युमुखात्प्रमुच्यत इति तेषामभ्युपगमः सर्वेषु च वेदान्तेषु प्राज्ञस्यैवात्मनोऽशब्दादिधर्मत्वमभिलप्यते तस्मान्न प्रधानस्यात्र ज्ञेयत्वमव्यक्तशब्दनिर्दिष्टत्वं वा ॥ ५ ॥ त्रयाणामेव चैवमुपन्यासः प्रश्नश्च ॥ ६ ॥ इतश्च न प्रधानस्याव्यक्तशब्दवाच्यत्वं ज्ञेयत्वं वा यस्मात्त्रयाणामेव पदार्थानामग्निजीवपरमात्मनामस्मिन्ग्रन्थे कठवल्लीषु वरप्रदानसामर्थ्याद्वक्तव्यतयोपन्यासो दृश्यते तद्विषय एव च प्रश्नः नातोऽन्यस्य प्रश्न उपन्यासो वास्ति ॥ तत्र तावत्स त्वमग्निं स्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यमित्यग्निविषयः प्रश्नः येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीय इति जीवविषयः

नवरस्त्वं स्वर्गहेतुमग्निं स्मरसि प्रेते मृते देहादन्योऽस्ति न वेति संशयोऽस्ति अत एतदात्मतत्त्वं संदिग्धं जानीयामित्यर्थः ॥ ६ ॥ ७ ॥ ६ ॥ ७ ॥

शा·भा· क्रमेणोत्तरत्रयमाह॥ प्रतिवचनमपीति॥ लोकहेतुविराडात्मनोपास्यत्वाल्लोकादिमग्निं योऽग्निस्तं मृत्युरुवाच नचिकेतसे याः स्वरूपतो याव-
टी· तीः संख्यातः यथा वा येन क्रमेणाग्निश्चीयते तत्सर्वमुवाचेत्यर्थः॥ हन्तेदानीं ब्रह्म वक्ष्यामीति ब्रह्मवाक्येन जीवप्रश्नाद्यवहितमपि यथा च मर-
२·म· णमित्यादिवाक्यं जीवविषयमुत्तरं योग्यत्वादित्यर्थः॥ वाक्यार्थस्तु आत्मा मरणं प्राप्य यथा भवति तथा वक्ष्यामीति प्रतिज्ञातमाह॥ योनिमि-
१४२

अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वदेति परमा-
त्मविषयः प्रतिवचनमपि लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वेत्यग्निविषयं हन्त
त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनं यथा च मरणं प्राप्यात्मा भवति गौतम॥ योनिमन्ये प्रपद्यन्ते शरीरत्वा-
य देहिनः स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतमिति व्यवहितं जीवविषयं न जायते म्रियते वा वि-
पश्चिदित्यादि च ब्रह्मप्रपंचं परमात्मविषयं नैवं प्रधानविषयः प्रश्नोऽस्ति अपृष्टत्वाच्चानुपन्यसनीयत्वं
तस्येति॥ अत्राह योऽयमात्मविषयः प्रश्नो येयं प्रेते विचिकित्सा मनुष्ये इति किं स एवायमन्यत्र धर्मादन्य-
त्राधर्मादिति पुनरनुकृष्यते किं वा ततोऽन्योऽयमपूर्वः प्रश्न उत्थाप्यत इति॥ किं चातः॥ स एवायं प्रश्नः पु-
नरनुकृष्यत इति यद्युच्येत द्वयोरात्मविषययोः प्रश्नयोरेकतापत्तेरग्निविषय आत्मविषयश्च द्वावेव प्र-
श्नाविति ततो न वक्तव्यं त्रयाणां प्रश्नोपन्यास इति अथान्योऽयमपूर्वः प्रश्नः उत्थाप्यत इत्युच्येत ततो यथैव व-
र प्रदानव्यतिरेकेण

शा·भा· १४२

ति च वाच्यं देहप्राप्तौ निमित्तमाह यथेति॥ श्रुतमुपासनं सूत्रे आद्यश्चकारो यत इत्यर्थे एवं त्रयाणामेवोपन्या-
सः प्रश्नश्च यतः अतो न प्रधानं अव्यक्तमिति योजना उक्तार्थं सूत्रमाक्षिपति॥ अत्राहेति॥ एकप्रश्नः द्वौ प्रश्नौ वेति पक्षद्वये फलितं पृच्छति॥
किं चात इति॥ सत्यमर्थैतत्सिः अत्र पक्षद्वयेऽपि किमित्यर्थः॥ प्रश्नैक्ये सूत्रासंगतिः भेदे प्रधानस्य श्रौतत्वसिद्धिरिति पूर्ववाद्याह स एवेत्यादि

अ·मा· ५५

प्रश्नैक्यपक्षमाद्यपसिद्धांत्याह ॥ अत्रोच्यत इति येन प्रधानसिद्धिः स्यादिति शेषः चतुर्थप्रश्नकल्पने वरत्रित्वोपक्रमविरोधः स्या
दिति विवृणोति वरेत्यादिना वरप्रदानमुपक्रमो यस्याः सा प्रहिताय यमलोकं प्रति प्रेषिताय इतः पुनः मर्त्यलोकं प्राप्तस्य मम
पिता यथापूर्वं सुमनाः स्यादिति प्रथमं वव्रे न तु द्वितीयवरो जीवविद्या तृतीयो ब्रह्मविद्येति प्रश्नभेदः किन्न स्यादित्यत आह ॥ येय

एवं प्रश्नव्यतिरेकेणापि प्रधानोपन्यासकल्पनायामदोषः स्यादिति ॥ अत्रोच्यते नैवं वयमिह वरप्रदा
नव्यतिरेकेण प्रश्नकं चित्कल्पयामः वाक्योपक्रमसामर्थ्यात् ॥ वरप्रदानोपक्रमा हि मृत्युनचिकेतःसंवा
दरूपा वाक्यप्रवृत्तिरासमाप्तेः कठवल्लीनां लक्ष्यते मृत्युः किल नचिकेतसे पित्रा प्रहिताय त्रीन्वरान्प्रददौ
नचिकेताः किल तेषां प्रथमेन वरेण पितुः सौमनस्यं वव्रे द्वितीयेनाग्निविद्यां तृतीयेनात्मविद्यां येयं प्रेत इ
ति वराणामेष वरस्तृतीय इति लिंगात् तत्र यद्यन्यत्र धर्मादित्यन्योयमपूर्वः प्रश्न उत्थाप्येत ततो वरप्रदा
नव्यतिरेकेणापि प्रश्नकल्पनाद्वाक्यं बाध्येत ॥ ननु प्रष्टव्यभेदादपूर्वोयं प्रश्नो भवितुमर्हति पूर्वो हि प्रश्नो
जीवविषयः येयं प्रेते मनुष्येऽस्ति नास्तीति विचिकित्साभिधानाज्जीवश्च धर्मादिगोचरत्वान्नान्यत्र धर्मादि
ति प्रश्नमर्हति प्राज्ञस्तु धर्माद्यतीतत्वादन्यत्र धर्मादिति प्रश्नमर्हति ॥ प्रश्नच्छाया च न समाना लक्ष्यते पूर्व
स्यास्तित्वनास्तित्वविषयत्वादुत्तरस्य धर्माद्यतीतवस्तुविषयत्वात् तस्मात्प्रत्यभिज्ञानाभावात्प्रश्नभेदो

भिति येनेत्युपक्रम्य तृतीयत्वोक्तिलिंगाज्जीवात्मविद्यैव तृतीयो वर इत्यर्थः ॥ न पूर्वस्यैवोत्तरत्रानुकर्षणमिति चेन्न ॥ ८
एवं वाक्योपक्रमे सति प्रश्नान्तरं न युक्तमित्याह ॥ नत्वेति ॥ मरणधर्माद्यस्पर्शलिंगाभ्यां प्रष्टव्ययोर्जीवेश्वरयोर्भेदात्प्रश्नभेदः सिद्धे वाक्य
बाधो युक्त इति शंकते ॥ नन्वित्यादिना ॥ गोचरत्वादाश्रयत्वात्केवलं प्रष्टव्यभेदात्प्रश्नभेदः किंतु प्रश्नवाक्ययोः सादृश्याभावादपीत्या

प्रष्टव्यभेदोऽसिद्ध इति परिहरति ॥ नेत्यादिना ॥ किंच ब्रह्मप्रश्ने जन्मादिनिषेधेन जत्र स्वरूपं वदन् यमस्तयोरैक्यं सूचयतीत्याह ॥ इ हचान्यत्रेति ॥ तन्निषेधवाक्ये जीवोक्तिरसिद्धेत्यत आह ॥ सतीति ॥ भागीयुक्तः तस्माद्विद्यया जीवस्य प्राप्तजन्मादिनिषेधेन स्वरूपमु क्तमित्यर्थः । किंच जीवो ब्रह्माभिन्नः मोक्षहेतुज्ञानविषयत्वात् ब्रह्मवदित्याह ॥ तथा स्वप्नेति ॥ अंतोवस्थायेन साक्षिणा प्रमाताप।

न जीवप्राज्ञयोरेकत्वाभ्युपगमात् भवेत्प्रष्टव्यभेदात्प्रश्नभेदो यद्यन्यो जीवः प्राज्ञात्स्यात् ॥ नत्वन्यत्वम स्ति तत्त्वमसीत्यादिश्रुत्यंतरेभ्यः ॥ इह चान्यत्र धर्मादित्यस्य प्रश्नस्य प्रतिवचनं न जायते म्रियते वा विपश्चि दिति जन्ममरणप्रतिषेधेन प्रतिपाद्यमानं शारीरपरमेश्वरयोरभेदं दर्शयति सतिहि प्रसंगे प्रतिषेधो भा गी भवति प्रसंगश्च जन्ममरणयोः शरीरसंस्पर्शाच्छारीरस्य भवति न परमेश्वरस्य ॥ तथा स्वप्नांतं जाग रितांतं चोभौ येनानुपश्यति महांतं विभुमात्मानं मत्वा धीरो न शोचतीति स्वप्नजागरितदृशो जीवस्यैव मह त्वविभुत्वविशेषणस्य मननेन शोकविच्छेदं दर्शयत्प्राज्ञादन्यो जीव इति दर्शयति ॥ प्राज्ञविज्ञानाद्धि शोकविच्छेद इति वेदांतसिद्धांतः ॥ तथाग्रे यदेवेह तदमुत्र यदमुत्र तदन्विह मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति जीवप्राज्ञभेददृष्टिमपवदति ॥ तथा जीवविषयस्यास्तित्वनास्तित्वप्रश्नस्यानंतरं ॥ ५

श्यतीत्यमात्मानमिति संबंधः हेतोरप्रयोजकत्वमाशंक्यानमेवंविदित्वेत्यादिश्रुतिविरोधमाह ॥ प्राज्ञेति ॥ किंचाभेदमुक्त्वा भेदस्य निंदि तत्वादभेद एव सत्य इत्याह ॥ तथेति ॥ इह देहे यच्चैतन्यं तदेवामुत्र सूर्यादौ एवमिहाखंडैकरसे ब्रह्मणि यो नानेव मिथ्याभेदं पश्यति स भेददर्शी मरणान्मरणं प्राप्नोति संसारभयान्न मुच्यत इत्यर्थः ॥ किंच जीवप्रश्नानंतरं तदुद्देशमिति यदुत्तरमुवाच तेनाप्युत्तरेणाभेदो

प्रष्टृप्रश्नयोः प्रशंसयापि लिंगेन पृष्टस्य जीवस्य देहोद्भावत्वद्योतनात् ब्रह्मत्वसिद्धिरित्याह अन्यंवरमित्यादिना ॥ पुत्रादिकं वृणीष्वेत्युक्ते
पि विषयांस्तुच्छीकृत्यात्मज्ञानान्नचालनान्नेदं तस्मान्नचिकेता वृणीतइतिश्रवणात्तदा संतुष्टो यमोन्यच्छ्रेयोन्यदुतैवप्रेयइति भोगाप
वर्गयोर्वैलक्षण्यं प्रतिज्ञायदूरमेतेविपरीतेविषूची अविद्यायाचविद्येतिदर्शितवानित्यर्थः प्रेयः प्रियतमं स्वर्गादिकं विषूची विरुद्धफ
ले अविद्या कर्म विद्या तत्त्वधीः विद्याभीप्सितं विद्यार्थिनं त्वामहं मन्ये यतस्त्वा त्वां बहवोपि कामाः पुत्रादयो मया दीयमाना दुर्लभा अपि

अन्यं वरं नचिकेतो वृणीष्वेत्यारभ्य मृत्युना तैस्तैः कामैः प्रलोभ्यमानोपि नचिकेता यदा न चचाल तदैनं मृत्यु
रभ्युदयनिःश्रेयसविभागप्रदर्शनेन विद्याविद्याविभागप्रदर्शनेन च विद्याभीप्सितं नचिकेतसं मन्ये न
त्वा कामा बहवो लोलुपंतेति प्रशंस्य प्रश्नमपि तदीयं प्रशंसन् यदुवाच तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं
गह्वरेष्ठं पुराणं अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहातीति तेनापि जीवप्राज्ञयोरभेदस्य
वेह विवक्षितत्वमिति गम्यते ॥ यत्प्रश्ननिमित्तां च प्रशंसां महतीं मृत्योः प्रत्यपद्यत नचिकेता यदि तं विहाय
प्रशंसानंतरमन्यमेव प्रश्नमुपक्षिपेत् अस्थान एव सा सर्वा प्रशंसा प्रसारिता स्यात् ॥ तस्माद्येयं प्रेते इत्य
स्यैव प्रश्नस्यैतदनुकर्षणमन्यत्र धर्मादिति यत्तु प्रश्नच्छायावैलक्षण्यमुक्तं तद्दूषणं तदीयस्यैव विशेषस्य
पुनः पृच्छ्यमानत्वात् पूर्वत्र देहादिव्यतिरिक्तस्यात्मनोस्तित्वं पृष्टं उत्तरत्र तु तस्यैवासंसारित्वं पृच्छ्यत इति ॥

नालोलुपं न लोभवंतं न तृष्णावंतमिति प्रष्टारं स्तुत्वा प्रश्नमपि त्वादृङ्नो भूयान्नचिकेतः प्रष्टेति स्तुवन्नित्यस्यार्थः ॥ इयं प्रशंसा प्रश्न
भेदपक्षे न घटत इत्याह ॥ यत्प्रश्नेति ॥ यत्प्रश्नेन स्तुतिं लब्धवान् तं प्रश्नं विहाय यद्यन्यदेवोन्यापयेत्तर्ह्यनवसरे स्तुतिः कृता स्यादि
त्यर्थः ॥ तस्मादिति ॥ प्रष्टव्यभेदाभावादित्यर्थः ॥ प्रश्नवाक्यव्यक्त्योः सादृश्याभावात्प्रश्नभेद इत्युक्तं निरस्यति ॥ यत्त्वित्यादिना ॥ ६ ॥

ब्र·भा· टी· र·प्र २५५

धर्मोचाश्रयस्य जीवस्य ब्रह्मत्वं कथमित्यत आह यावदिति॥ अविद्यानाशानंतरं ब्रह्मत्वं चेदागंतुकमनित्यं च स्यादित्यत आह॥ न चावि
द्यावत्त्वइति॥ जीवस्य ब्रह्मत्वे स्वाभाविके ब्रह्मप्रश्नस्य यदुत्तरं तज्जीवप्रश्नस्यापि भवतीति लाभं दर्शयति॥ ततश्च न जायत इति जीव

यावद्वाविद्यानिवर्तनेनावद्धर्मादिगोचरत्वं जीवस्य जीवत्वं च न निवर्तनेन तन्निवृत्तौ तु प्राज्ञ एव तत्त्वमसी
ति श्रुत्या प्रमाप्यते न चाविद्यावत्वे तदपगमे च वस्तुनः कश्चिद्विशेषोस्ति यथा कश्चित्संतमसे पतितां कांचिद्र
ज्जुमहिं मन्यमानस्ततो भीतो वेपमानः पलायते तं चापरो ब्रूयात् माभैषीः नायमहिः रज्जुरेवेति स च तदुप
श्रुत्याहिकृतं भयमुत्सृजेद्वेपथुं पलायनं च न त्वहिबुद्धिकाले तदपगमकाले च वस्तुनः कश्चिद्विशेषः स्या
त् तथैवैतदपि द्रष्टव्यं॥ ततश्च न जायते म्रियते इत्येवमाद्यपि भवति अस्तित्वप्रश्नस्य प्रतिवचनं॥ सूत्रेत्ववि
द्याकल्पितजीवप्राज्ञभेदापेक्षया योजयितव्यं एकत्वेपि ह्यात्मविषयस्य प्रश्नस्य प्रायणावस्थायां देहव्यतिरि
क्तास्तित्वमात्रविचिकित्सनात् कर्तृत्वादिसंसारस्वभावानपोहनाच्च पूर्वस्य पर्यायस्य जीवविषयत्वमुत्प्रे
क्ष्यते उत्तरस्य तु धर्माद्यत्ययसंकीर्तनात् प्राज्ञविषयत्वमिति॥ ततश्च युक्ताग्निजीवपरमात्मकल्पना प्रधा
नकल्पनायां तु न वरप्रधानेन प्रश्नो न प्रतिवचनमिति वैषम्यं॥ ६॥ महद्वच्च॥ ७॥ यथा महच्छब्दः सांख्यैः
सत्तामात्रेपि प्रथमजे प्रयुक्तो न तमेव वैदिकेपि प्रयोगेभिधत्ते बुद्धेरात्मा महान्परः महान्तं विभुमात्मानं वेदाह
मेतं पुरुषं महान्तमित्येवमादौ आत्मशब्दप्रयोगादिभ्यो हेतुभ्यः तथाव्यक्तशब्दोपि न वैदिके प्रयोगे प्रधानम

त्रहेतोकेत्रयाणामिति सूत्रं कथमित्यत आह सूत्रं त्विति॥ कल्पितभेदात्प्रश्नभेदकल्पनेत्याह॥ ततश्चेति परमात्मनः सकाशात्प्रधानस्य
वैषम्यमनात्मत्वेन तृतीयवरांतर्भावाभावादिति भावः॥६॥ श्रौतोव्यक्तशब्दो न सांख्यासाधारणतत्त्वगोचरः वैदिकशब्दत्वान्महच्छब्दवदित्या

अ·पा· ७५

न चाकाशादिशब्दे व्यभिचारः आकाशादेर्मेतानरसाधारणत्वेन सांख्यासाधारणत्वासिद्धेः साध्यस्यापि सत्त्वादिति मंतव्यं सत्ता-
मात्रे सत्त्वप्रधानप्रकृतेराद्यपरिणामे निर्विकल्पकबुद्धावित्यर्थः ॥ आत्मा महानित्यात्मशब्दप्रयोगात्तं मत्वा न शोचति तमसः पर-
स्तादित्यादिना शोकान्ययतमः परत्वादिभ्यश्च महत्त्वबुद्धः सांख्यतत्त्वं नाभिधत्ते इति संबंधः अधिकरणार्थमुपसंहरति ॥ अतश्चेति ॥
७ ॥ चमसवदविशेषात् ॥ अत्राजापदं विषयः तत्किं प्रधानपरं मायापरं वेति रूढ्यर्थासंभवात्संशये पूर्वत्राव्यक्तशब्दमात्रेण प्रधा-

अतश्च नास्त्यानुमानिकस्य शब्दवत्त्वं ॥ ७ ॥ चमसवदविशेषात् ॥ ८ ॥ पुनरपि प्रधानवाद्यशब्दत्वं प्रधा-
नस्यासिद्धमित्याह कस्मात् मंत्रवर्णात् अजामेकां रोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्य इति अत्र हि मंत्रे रोहितशुक्लकृष्णशब्दैः रजः
सत्त्वतमांस्यभिधीयंते रोहितं रजः रंजनात्मकत्वात् शुक्लं सत्त्वं प्रकाशात्मकत्वात् कृष्णं तमः आवरणा-
त्मकत्वात् तेषां साम्यावस्थावयवधर्मैर्व्यपदिश्यते रोहितशुक्लकृष्णेति ॥ न जायत इति चाजा स्यात् मूल-
प्रकृतिरविकृतिरित्यभ्युपगमात् ननु अजाशब्दश्छागायां रूढः ॥ बाढं सा तु रूढिरिह नाश्रयितुं शक्या विद्याप्रक-

नस्याप्रत्यभिज्ञायामप्यत्र त्रिगुणत्वादिलिंगोपेतादजापदात्प्रत्यभिज्ञास्तीति प्रत्युदाहरणेन पूर्वपक्षयति ॥ पुनरपीति फलं पूर्वपक्षे
ब्रह्मणि समन्वयासिद्धिः सिद्धांते तत्सिद्धिरिति पूर्ववद्द्रष्टव्यं रागहेतुत्वादिगुणयोगाल्लोहितादिशब्दैः रजआदिगुणलाभेपि कथं प्रधा-
नलाभः तत्राह ॥ तेषां साम्येति ॥ अवयवाः प्रधानस्य रजआदयस्तेषां धर्मा रंजकत्वादयः तैर्निमित्तैर्लोहितादिशब्दैः प्रधानमुच्यत इ-
त्यर्थः गुणाभेदात्प्रधानलाभ इति भावः तत्राजाशब्दं योजयति ॥ नेति ॥ रूढिर्योगमपहरतीति न्यायेन शंकते ॥ नन्विति ॥ रूढ्यसंभ-
वाद्योग आश्रयणीय इत्याह ॥ बाढमिति ॥

अजाशब्देन प्रकृतित्वपुरुषभेदलिंगाभ्यामपि प्रधानप्रत्यभिज्ञेत्याह ॥ साचेत्यादिना ॥ प्रजायंत इति प्रजाः महदादयः त्रैगुण्यं सुखदुः
खमोहाः ॥ अनुशयनं विहृणोति ॥ तामेवाविद्ययेति ॥ अविवेकेनेत्यर्थः ॥ विषयधीः भोगः गुणभिन्नात्मख्यातिरपवर्गः सिद्धांतयति ॥ ए

सा च बह्वीः प्रजास्त्रैगुण्यान्विता जनयति तां प्रकृतिं अजः एकः पुरुषः जुषमाणः प्रीयमाणः सेव्यमानो वानु
शेते तामेवाविद्ययात्मत्वेनोपगम्य सुखी दुःखी मूढोहमित्यविवेकतया संसरति एकः अन्यः पुनः अजः पुरु
षः उत्पन्नविवेकज्ञानो विरक्तो जहाति एनां प्रकृतिं भुक्तभोगां कृतभोगापवर्गां परित्यजति मुच्यत इत्यर्थः तस्मा
च्छ्रुतिमूलैव प्रधानादिकल्पना कापिलानामिति ॥ एवं प्राप्ते ब्रूमः नानेन मंत्रेण श्रुतिमत्वं सांख्यवादस्य शक्यमा
श्रयितुं न ह्ययं मंत्रः स्वातंत्र्येण कंचिदपि वादं समर्थयितुमुत्सहते सर्वत्रापि यया कयाचित्कल्पनया जात्वादिसंवाद
नोपपत्तेः सांख्यवाद एवेहाभिप्रेत इति विशेषावधारणकारणाभावात् चमसवत् यथा ह्यर्वाग्बिलश्चमस ऊर्ध्वबु
ध्न इत्यस्मिन्मंत्रे स्वातंत्र्येणायं नामासौ चमसोभिप्रेत इति न शक्यते निरूपयितुं ॥ सर्वत्रापि यथा कथंचिदर्वा
ग्बिलत्वादिकल्पनोपपत्तेः एवमिहाप्यविशेषो जामेकामित्यस्य मंत्रस्य नास्मिन्मंत्रे प्रधानमेवाजाभिप्रेतेति
शक्यते नियंतुं ॥ ८ ॥ तत्र त्विदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्न इति वाक्यशेषात् चमसविशेषप्रतिपत्ति
र्भवति इह पुनः केयमजा प्रतिपत्तव्येत्यत्र ब्रूमः ॥ ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥ ९ ॥ परमेश्वरादुत्प
न्ना ज्योतिःप्रमुखा तेजोबन्नलक्षणा ॥ चतुर्विधस्य भूतग्रामस्य प्रकृतिभूतेयमजा प्रतिपत्तव्या तु शब्दोवधारणार्थः

वं मात्र इति ॥ मायाद्यवपि साधारण्यं मंत्राद्विशेषार्थग्रहो न युक्तः विशेषग्रहहेतोः प्रकरणादेरभा ((भूतत्रयलक्षणैवेयमजा विज्ञे
वादिति ॥ हेतुं व्याख्याय दृष्टांतं व्याचष्टे चमसवदिति ॥ सर्वत्रेति ॥ गिरिगुहादावपि ॥ ८ ॥ उत्तरसूत्रव्यावर्त्यां शंकामाह ॥ तत्र त्विदमिति चतुर्वि

यान गुणत्रयलक्षणा ॥

धस्येति ॥ जरायुजांडजस्वेदजोद्भिज्जरूपस्येत्यर्थः ॥

स्मृत्युक्ता कुतो न ग्राह्येति शंकते कस्मादिति ॥ श्रुतेः श्रुत्यंतरादर्थग्रहो युक्तः साजात्यान्मूलानपेक्षत्वाच्चेत्याह ॥ तथाहीति ॥ शाखिनश्छंदोगाः
॥ किंच लोहितादिशब्दैरपि द्रव्यलक्षणा त्याज्या अव्यवधानात् ननु रंजनीयत्वादिगुणत्वेच हिता सत्वादिगुणलक्षणेत्याह ॥ लोहितादीनां
चेति ॥ ननु शाखांतरेण शाखांतरस्थमंत्रस्य निर्णयः कथमित्यत आह ॥ असंदिग्धेनेति ॥ सर्वशाखाप्रत्ययत्वन्यायादिति भावः यथा शा-
खांतरवाक्यान्न प्रधानग्रहस्तथेहापि श्वेताश्वतरोपनिषदि मायाप्रकरणात्तत्रग्रह इत्याह ॥ तथेति ॥ सृष्ट्यादौ किं सहायं ब्रह्मेति विमृश्य

कस्मात् ॥ तथाह्येके शाखिनस्तेजोबन्नानां परमेश्वरादुत्पत्तिमाम्नाय तेषामेव रोहितादिरूपतामामनंति य-
दग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्येति तान्येवेह तेजोबन्नानि प्रत्यभिज्ञायंते रोहिता-
दिशब्दसामान्यात् ॥ रोहितादीनां च शब्दानां रूपविशेषेषु मुख्यत्वात् ॥ भक्तत्वाच्च गुणत्रयविषयत्वस्य ॥ असं-
दिग्धेन च संदिग्धस्य निगमनं न्याय्यं मन्यंते ॥ तथेहापि ब्रह्मवादिनो वदंति किंकारणं ब्रह्मेत्युपक्रम्य ते ध्यानयो-
गानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढामिति पारमेश्वर्याः शक्तेः समस्तजगद्विधायिन्या वाक्योपक्रमेऽवग-
मात् वाक्यशेषे तु मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरमिति यो योनिं योनिमधितिष्ठत्येक इति च तस्या एवाव-
गमात् न स्वतंत्रा काचित्प्रकृतिः प्रधानं नामाजामंत्रेणाम्नायत इति शक्यते वक्तुं प्रकरणात्तु सैव दैवी शक्तिरव्या-
कृतनामरूपा नामरूपयोः प्रागवस्थानेनापि मंत्रेणाम्नायत इत्युच्यते तस्याश्च स्वविकारविषयेण त्रिरूपे
ण त्रैरूप्यमुक्तं ॥ ९ ॥

ते ब्रह्मवादिनो ध्यानाख्ययोगेन परमात्मानमनुप्रविष्टाः संतः तत्रैव देवस्यात्मभूतामैक्येनाध्यस्तां शक्तिं
परतंत्रां मायां सत्वादिगुणवतीं ब्रह्मणः सहायमपश्यन्नित्यन्वयः मायायाः एकत्वेपि तदंशानां जीवोपाधीनां तत्तत्संघातयोनीनामविद्या-
ख्यानां भेदाद्दीप्ता अव्याकृते अनभिव्यक्ते नामरूपे यस्यां सा अनेन तद्धेदं तर्ह्यव्याकृतमासीदिति श्रुत्यंतरप्रसिद्धिरुक्ता तस्याः शक्तेर्व्य-
क्तात्मककार्यलिंगकानुमानं सूचयति नामेति ॥ मायाया रोहितादिरूपवत्त्वं कथमित्यत आह ॥ तस्या इति ॥ विषयः आश्रयः ॥ ९ ॥

सर्वप्रकरणवलान्मायैवाजेति भाष्यं कृत्स्नमंतरोक्तं दोषमस्मारयति तेजोवन्नलक्षणा वा न प्रकृतिरजेति सूत्रकृता तेनोत्तरसूत्रव्यावर्त्यं शंक्यते कथमिति ॥ किं तेजोवन्नेष्वजाशब्दो रूढो न जायत इति यौगिको वा नाद्यस्तेष्वजात्वजातेरसत्त्वादित्याह ॥ यावतेति यत इत्यर्थः अतो न रूढ इति शेषः न द्वितीय इत्याह ॥ नचेति ॥ जातिर्जन्म अजातिरजन्म लौकिकाजासादृश्यकल्पनया तेजोवन्नानामजात्वोपदेशाज्ज्ञेयो

कथं पुनस्तेजोवन्नात्मना त्रैरूप्येण त्रिरूपाजा प्रतिपत्तुं शक्यते ॥ यावता न तावत्तेजोवन्नेष्वजाकृतिरस्ति न च तेजोवन्नानां जातिश्रवणादजातिनिमित्तोऽप्यजाशब्दः संभवतीत्यत उत्तरं पठति ॥ कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १० ॥ नायमजाकृतिनिमित्तोऽजाशब्दो नापि यौगिकः किं तर्हि कल्पनोपदेशोऽयं अजारूपकक्लृप्तिस्तेजोवन्नलक्षणायाश्चराचरयोनेरुपदिश्यते यथा हि लोके यदृच्छया काचिदजा रोहितशुक्लकृष्णवर्णा स्यात् बहुबर्करा सरूपबर्करा च तां च कश्चिदजो जुषमाणोऽनुशयीत कश्चिच्चैनां भुक्तभोगां जह्यादेवमियमपि तेजोवन्नलक्षणा भूतप्रकृतिस्त्रिवर्णा बहु सरूपं चराचरलक्षणं विकारजातं जनयति अविदुषा च क्षेत्रज्ञेनोपभुज्यते विदुषा च परित्यज्यत इति ॥ न चेदमाशंकितव्यमेकः क्षेत्रज्ञोऽनुशेतेऽन्यो जहातीत्यतः क्षेत्रज्ञभेदः पारमार्थिकः परेषामिष्टः प्राप्नोतीति न हीयं क्षेत्रज्ञभेदप्रतिपिपादयिषा किंतु बंधमोक्षव्यवस्थाप्रतिपिपादयिषा त्वेषा प्रसिद्धं तु भेदमनूद्य बंधमोक्षव्यवस्था प्रतिपाद्यते ॥ भेदस्तूपाधिनिमित्तः मिथ्याज्ञानकल्पितो न पारमार्थिकः एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतांतरात्मेत्यादि

यं शब्द इति परिहरति ॥ कल्पनेति ॥ अनियमो यदृच्छा बर्करो बालपशुः यदुक्तं जीवभेदेन प्रधानवादप्रत्य स्मृतिभ्यः भिज्ञेति तन्नेत्याह ॥ न चेदमिति व्यवस्थार्थो भेदोऽप्यर्थात्प्रतिपाद्यत इत्यत आह ॥ प्रसिद्धं त्विति ॥ सत्यमेव प्रसिद्ध इत्यत आह भे

कल्पनोपदेशेद्दृष्टांतं व्याचष्टे॥ मध्विति नच योगस्य मुख्यवृत्तित्वात्तेन प्रधानग्रहो न्याय्य इति वाच्यं रूढ्यार्थो नपेक्षायोगात्तदाश्रितगुणलक्ष
णायाबलीयस्त्वाद्गुणवृत्तौ हि रूढिराश्रिताभवति तयाच रोहितादिशब्दसमभिव्याहारानुगृहीतया रूढ्याश्रितया गुणवृत्त्या प्रधा
नियोगं बाधित्वा वांतरप्रकृतिरजाशब्देन ग्राह्या यथा मध्वादिशब्दैः प्रसिद्धमध्वाद्याश्रितगुणलक्षणया आदित्यादयो गृह्यन्ते तद्व
त् तस्मादशब्दं प्रधानमिति सिद्धं॥१०॥ नसंख्योप संग्रहात्॥ पंचजनशब्दः सांख्यतत्त्वपरोन्यपरोवेति योगरूढ्योर्निश्चयात्संशये

मध्वादिवत्तु यथादित्यस्यामधुनो मधुत्वं वाचश्चाधेनोर्धेनुत्वं द्युलोकादीनां चानग्नीनामग्नित्वमित्येवंजाती
यकं कल्प्यते एवमिदमनजाया अजात्वं कल्प्यत इत्यर्थः तस्मादविरोधस्तेजोबन्नेष्वजाशब्दप्रयोगस्य॥१०॥
नसंख्योपसंग्रहादपि नानाभावादतिरेकाच्च॥११॥ एवमपरिहृतेप्यजामंत्रे पुनरन्यस्मान्मंत्रात्सांख्यः प्रत्यवतिष्ठ
ते यस्मिन्पंचपंचजना आकाशश्च प्रतिष्ठितः तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोमृतमित्यस्मिन्मंत्रे पंचपंच
जनाइति पंचसंख्याविषयापरा पंचसंख्या श्रूयते पंचशब्दद्वयदर्शनात् तएते पंचपंचकाः पंचविंशतिः संप
द्यंते। तया पंचविंशतिसंख्यया यावंतः संख्येया आकांक्ष्यंते तावंत्येव च तत्त्वानि सांख्यैः संख्यायंते मूलप्रकृति
रविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुष इति तया श्रुतिप्रसिद्धा
या पंचविंशतिसंख्यया तेषां स्मृतिप्रसिद्धानां पंचविंशतितत्त्वानामुपसंग्रहात्प्राप्तं पुनः श्रुतिमत्त्वमेव प्रधानादीनां

प्रधानतत्त्वविद्याधिकारे छागायां तात्पर्याभावादजापदे रूढित्यागस्तथा पंचमनुष्येषु तात्पर्याभावात्पंचजनशब्देन रूढिं त्यक्त्वा तत्त्वा
नि ग्राह्याणीति दृष्टांतसंगतिं सूचयन्मंत्रमुदाहृत्य पूर्वपक्षयति॥ एवमित्यादिना॥ फलं पूर्ववत् प्राणचक्षुःश्रोत्रान्नमनांसि वाक्यशेष
स्थाः पंचजनाः पंचत्वत्रचत्वारः सूत्रं अंतर्विराट्तयोः कारणमव्याकृताकाशश्च यस्मिन्नध्यस्तास्तमेवात्मानममृतं ब्रह्म मन्ये तस्मात्

पंचत्वान्वयात्पंचविंशतिसंख्याप्रतीतिः स्तावनाकथंसांख्यतत्त्वग्रह इत्याशंका संख्यायाधर्म्योकोसायांतत्त्वानिग्राह्याणीत्याह ॥ नैषे ति ॥ जगतोमूलभूताप्रकृतिस्त्रिगुणात्मकप्रधानमनादित्वादविकृतिः कस्यचित्कार्यं नभवतीत्यर्थः ॥ महदहंकारपंचतन्मात्राणिप्र कृतयोविकृतयश्च तत्रमहान् प्रधानस्यविकृतिरहंकारस्यप्रकृतिरहंकारस्तामसः पंचतन्मात्राणांशब्दादीनांप्रकृतिः सात्त्विक स्त्वेकादशेंद्रियाणांपंचतन्मात्राश्च पंचानांस्थूलभूतानामाकाशादीनांप्रकृतयः पंचस्थूलान्येकादशेंद्रियाणिचेतिषोडशसंख्याकोग णोविकारएवनप्रकृतिः तत्त्वांतरोपादानत्वाभावात्पुरुषस्तूदासीनइतिसांख्यकारिकार्थः संख्यया तत्त्वानामुपसंग्रहात् शब्दवत्त्व मितिमाप्तेसिद्धांतयति ॥ नेति ॥ नानात्वमिष्टमित्यतआह ॥ नैषामिति ॥ पंचसुपंचसुसाधारणस्येतरपंचकाद्व्यावृत्तस्यधर्मस्याभावोत्र

न संख्योपसंग्रहादपि प्रधानादीनां श्रुतिमत्त्वप्रत्याशा कर्तव्या कस्मान्नानाभावात् नाना ह्येतानि पञ्चविं शतिस्तत्त्वानि ॥ नैषां पंचशः पंचशः साधारणो धर्मोस्ति येन पंचविंशतेरंतराले ऽपराः पंचपंचसंख्यानिवि शेरन्नेकनिबंधनमंतरेण नानाभूतेषु द्वित्वादिकाः संख्यानिविशंते ॥ अथोच्येत पंचविंशतिसंख्यैवेयमव यवद्वारेण लक्ष्यते यथा पंचसप्त च वर्षाणि नव वर्षशतं क्रतु विनिर्दिष्टाद्वादशवार्षिकीमनाद्दृष्टिं कथयंति त द्वदिति तदपि नोपपद्यते अयमेवास्मिन्पक्षे दोषो यल्लक्षणाश्रयणीया स्यात् ॥ ९९ नानात्वं विवक्षितमित्यर्थः ॥

यद्यपिज्ञानकर्मेंद्रियेषुदशसुज्ञानकरणत्वंकर्मकरणत्वंचपंचकद्वयेस्तिपंचतन्मात्रासुपंचसुस्थूलप्रकृतित्वंचतथापियस्मि न्नित्यात्मनआकाशस्यचपृथग्युक्तेः सत्त्वरजस्तमोमहदहंकाराः पंचकर्तव्याः मनश्चत्वारिभूतानिपंचास्मिन्पंचकद्वयेमिथोनुवृत्तेनतपं चकस्याव्यावृत्तधर्मोनास्तीत्यभिप्रायः सास्त्वित्यतआह येनेति ॥ धर्मेणेत्यर्थः ॥ तदेवस्फुटयति ॥ नहीति ॥ महासंख्यायामवांतरसंख्या प्रविशंति यथाहावश्विनौसप्तर्षयोष्टौवसवश्चेतिसप्तदशेत्यत्राश्वित्वादिकमादाय द्वित्वादयः प्रविशंतिनान्यथेत्यर्थः ॥ पंचशब्दद्व येनसवाच्यत्वात्संख्याद्वारेणतद्व्याप्यामहासंख्यैवलक्ष्यतेइतिसदृष्टांतंशंकते अथेतिसुबोधार्थं सवक्ष्यमाणत्वाल्लक्षणानयुक्तेतिपरि

पंचजनशब्दयोरसमासमंगीकृत्य पंचविंशतिसंख्याप्रतीतिर्निरस्ता संप्रति समासनिश्चयात्तत्प्रतीतिरित्याह ॥ परश्चेति ॥ स
मासे हेतुमाह ॥ पारिभाषिकेणेति ॥ अयमर्थः अस्मिन्मंत्रे प्रथमः पंचशब्द आद्युदात्तः द्वितीयः सर्वानुदात्तः जनशब्दस्त्वन्तोदा
त्तः तथा च न द्वितीयपंचशब्दजनशब्दयोस्समासं विनान्यस्याकारस्योदात्तत्वं ॥ ७ ॥ ७ ॥ पूर्वेषामनुदात्तत्वं च घटते समास
स्येति सूत्रेण समासस्यान्तोदात्तविधानादनुदात्तं पदमेकवर्जमिति च सूत्रेण यस्मिन्पदे उदात्तः स्वरितो वा यस्य वर्णस्य विधीयते तं
मेकं वर्जयित्वा वशिष्टं तत्पदमनुदात्तं भवतीति विधानाच्च एवं मांत्रिकान्तोदात्तस्वरेणैकपदत्वनिश्चयः भाषिकास्त्वेतु शतपथब्राह्म
णस्वरविधायकग्रंथे स्वरितोऽनुदात्तो वेति सूत्रेण यो मंत्रदशायां अनुदात्तः स्वरितो वा स ब्राह्मणदशायामुदात्तो भवतीत्यपवादः आ
श्रितः तथा चाम्यादाकारात्पूर्वेषामनुदात्तानामुदात्तत्वं ब्राह्मणावस्थायां प्राप्तं उदात्तमनुदात्तमनंत्यमिति सूत्रेण मंत्रदशायां उदा

परश्चात्र पंचशब्दो जनशब्देन समस्तः पंचजना इति पारिभाषिकेण स्वरेणैकपदत्वनिश्चयात् ॥ प्रयोगां
तरे च पंचानां त्वा पंचजनानामित्यैकपद्यैकस्वर्यैकविभक्तिकत्वावगमात् ॥ ९ तस्यान्तस्य परत्वमनयोश्चार्य

माणस्यानुदात्तत्वं विहितं तथा चान्तनकाराद्युपरितन आकार आकाशश्च त्यनेन तश्लिष्टतया पठ्यमानोऽनुदात्तो भवति अयमंतोऽनुदात्त
स्वरः पारिभाषिकः ते न ब्राह्मणस्वरेणैकपदत्वं निश्चीयते इति मकटार्थकारैस्तु पाठकप्रसिद्धो तोदात्तस्वरः पारिभाषिक इति व्याख्यानं त
द्व्याख्यानं कल्पतरुकारैर्दूषितं अंतानुदात्तं हि समाम्नातारः पंचजनशब्दमधीयत इति पाठकप्रसिद्धिरसिद्धेति तथा च पंच पंचजना इति
मांत्रिकान्तोदात्तः स्वरः यस्मिंस्त्वं च पंचजना इत्यंतानुदात्तो ब्राह्मणस्वर इति विभागः उभयथाप्येकपद्यात्समाससिद्धिरिति तैत्तिरीयकप्रयो
गादप्येकपदत्वमित्याह ॥ प्रयोगांतरे चेति ॥ आज्यत्वात्वा पंचानां पंचजनानां देवविशेषाणां यंत्राय धर्त्राय गृण्हामीत्याज्यग्रहणमंत्र
शेषः देवतानां कर्मणि यंत्र वरत्वस्थितं शरीरं तदेव धर्त्रे इहामुत्रभोगाधारं तस्मै तस्या वैकल्पार्थमिति यजमानोक्तिः ॥ ८ ॥

शा.भा. टी. र.म. १५८

अस्तु समासस्ततः किमित्यत आह समस्तत्वाद्वेति ॥ आवृत्तिर्वीप्सा तदभावे पंचकद्वयाग्रहणात्पंचविंशतिसंख्याप्रतीतिरसिद्धेति भावः जन पंचकं-
मेकं पंचकानां पंचकं द्वितीयमिति पंचकद्वयं न स्यात् पंचपंचेति ग्रहणं नेत्यस्यार्थः किंचासमासपक्षेऽपि किं पंचशब्दद्वयोक्तयोः पंचत्वयोः परस्प-
रान्वयः किं वा तयोः शुद्धजनैरन्वयः अथवा पंचत्वविशिष्टैर्जनैरपरस्य पंचत्वस्यान्वयः नाद्य इत्याह ॥ न च पंचसंख्या या इति ॥ विशेषण-
मन्वयः अनन्वये हेतुमाह ॥ उपसर्जनस्येति ॥ अप्रधानानां सर्वेषां प्रधानेनैव विशेष्येणैवान्वयो वाच्यः गुणानां परस्परान्वये वाक्यभेदा-
पातादित्यर्थः द्वितीये दशसंख्याप्रतीतिः स्यात् न च पंचविंशतिसंख्याप्रतीतिः तृतीये मुत्थापयति ॥ नन्विति ॥ पंचत्वविशिष्टेषु पंचत्वान्तरा-

समस्तत्वाद्वा न वीप्सा पंचपंचेति न च पंचकद्वयग्रहणं पंचपंचेति न च पंचसंख्याया एकस्याः पंचसंख्यया
परया विशेषणं पंचपंचका इति उपसर्जनस्य विशेषणेनासंयोगात् ॥ नन्वापन्नपंचसंख्याका जना एव पुनः पं-
चसंख्यया विशेष्यमाणाः पंचविंशतिः प्रत्येष्यन्ते यथा पंचपंचपूल्य इति पंचविंशतिपूलाः प्रतीयन्ते न त्विह तत् ॥ नेति
ब्रूमः युक्तं यत्पंचपूलीशब्दस्य समाहाराभिप्रायत्वात्कतीति संख्याभेदाकांक्षायां पंचपंचपूल्य इति विशेषणं भवे-
त् इह तु पंचजना इत्यादित एव भेदोपादानात्कतीति असंख्याभेदाकांक्षायां न पंचपंचजना इति विशेषणं भवत् ति
( यीदं विशेषणं पंचसंख्याया एव भे-

न्वये विशेषणीभूतपंचत्वेऽपि पंचत्वान्वयात्पंचविंशतित्वप्रतीतिरित्यर्थः दृष्टान्तवैरूप्येण परि-
हरति ॥ नेति ब्रूम इति ॥ पंचानां पूलानां समाहार इत्यत्र संख्यापूर्वो द्विगुरिति समासो विहितः ततो द्विगोरिति सूत्रेण ङीपो विधानात्समाहारप्रती-
तौ समाहारः कतीत्याकांक्षायां सत्यां पंचेति पदान्तरान्वयो युक्तः पंचजना इत्यत्र ङीबन्तत्वाभावेन समाहारस्याप्रतीतिः जनानां चादित-
एव पंचत्वोपादानात्संख्याकांक्षाया असत्वात्पंचेति पदान्तरं नान्वेति आकांक्षाधीनत्वादन्वयस्येत्यर्थः ॥ भेदो विशेषणं ननु जनानां नि-
राकांक्षत्वेऽपि तद्विशेषणीभूतपंचत्वानि कतीत्याकांक्षायां पंचत्वान्तरं विशेषणं भवत्वित्याशंकते ॥ भवदपीति ॥ ६ ॥ ~ ॥ ६ ॥

अ.पा. २१४

राम. १५८

नोपसर्जनस्योपसर्जनांतरेणान्वयः किंतु प्रधानेनैवेति न्यायविरोध उक्त इति परिहरति तत्र चेति॥ एवं नानाभावादिति व्याख्यायातिरेकाच्चेति॥
व्याचष्टे॥ अतिरेकाच्चेत्यादिना॥ अतिरेक आधिक्यं जनशब्दितपंचविंशतितत्त्वेष्वात्मांतर्भूतो न वा नाद्य इत्युक्त्वा द्वितीये दोषमाह॥ अर्थांतरेति
॥ तथाकाशं विकल्प्य दूषयति॥ तथेति॥ उक्तो दोषः संख्याधिक्यं पंचविंशतिजना आत्माकाशौ चेति सप्तविंशतिसंख्या स्यादित्यर्थः न च सत्वरज
तत्र चोक्तो दोषः तस्मात्पंच पंचजना इति न पंचविंशतितत्त्वाभिप्रायं॥ अतिरेकाच्च न पंचविंशतितत्त्वाभिप्रायं अति
रेको हि भवत्यात्माकाशाभ्यां पंचविंशतिसंख्यायाः आत्मा तावदिह प्रतिष्ठां प्रत्याधारत्वेन निर्दिष्टः यस्मिन्निति सप्त
मीसूचितस्य तमेव मन्य आत्मानमित्यात्मत्वेनानुकर्षणात् आत्मा च चेतनः पुरुषः स च पंचविंशतावंतर्गत एवे
ति न तस्यैवाधारत्वमाधेयत्वं युज्यते॥ अर्थांतरपरिग्रहे च तत्त्वसंख्यातिरेकः सिद्धांतविरुद्धः प्रसज्येत॥ तथाका
शस्य प्रतिष्ठितत्वम् इत्याकाशस्यापि पंचविंशतावंतर्गतस्य न पृथगुपादानं न्याय्यं अर्थांतरपरिग्रहे चोक्तं दूषणं॥ कथं
च संख्यामात्रश्रवणे सत्यश्रुतानां पंचविंशतितत्त्वानामुपसंग्रहः प्रतीयेत जनशब्दस्य तत्त्वेष्वरूढत्वात्॥ अर्थांत
रोपसंग्रहेऽपि संख्योपपत्तेः॥ कथं तर्हि पंच पंचजना इत्युच्यते दिक्संख्ये संज्ञायामिति विशेषस्मरणात् संज्ञायामेव
पंचशब्दस्य जनशब्देन समासः ततश्च रूढत्वाभिप्रायेणैव केचित्पंचजना नाम विवक्ष्यंते न सांख्यतत्त्वाभिप्राये
ण केनचित्समाकांक्षायां पुनः पंचेति प्रयुज्यते पंचजना नाम ये केचित्ते च पंचैवेत्यर्थः सप्तर्षयः सप्तेति यथा॥ ११
त्तमसां पृथग्गणनया सैवेति वाच्यं आकाशस्य पृथगुक्तिवैयर्थ्यात् यस्मिन्नित्यात्मनि तत्त्वानां प्रतिष्ठोक्तिविरोधात्तव मते स्वतंत्रप्रधानस्यैवा
नाधारत्वान्नेह नास्तीति वाकाशेऽपि विरोधाच्च न वसत्यद्वैतवादित्वात् किं च पंचविंशतिसंख्याप्रतीतावपि न सांख्यतत्त्वानां ग्रहणमित्याह॥ कथं
चेति॥ किं जनशब्दात्तत्त्व— ग्रहः उत संख्ययेति कथं शब्दार्थः॥ नाद्य इत्याह॥ जनेति॥ न द्वितीय इत्याह॥ अर्थांतरेति॥ किं तदर्थांतरं यदर्थक

मितवाक्यानिप्रकृति॥ कठमिति॥

शा॰ भा॰ टी॰ र॰ म॰ १४५

पंचवचनेजनाश्चेतिकर्मधारयादिसमासांतरात्संज्ञासमासस्यान्तरंगत्वाबलवत्वंतावदाह ॥ उच्यतइति दिग्वाचिनः संख्यावाचिनश्च
व्दाः संज्ञायांगम्यमानायांसुवंतेनोत्तरपदेनसमस्यंतेयथादक्षिणाग्निः सप्तर्षयइत्यादि अयंचसमासस्तत्पुरुषभेदः ॥ ११ ॥ पंचजन
शब्दस्यसंज्ञात्वमुक्त्वासंज्ञिकथनार्थंसूत्रंगृण्हाति ॥ केपुनस्तइतिसूत्रेतौउक्तशब्दोप्यर्थः येप्राणादिभिरेकंतत्साक्षिणमात्मानंविदुस्तेप्र
ह्मविदइत्यर्थः पंचजनशब्दस्यप्राणादिषुकयावृत्याप्रयोगइतिशंकते ॥ कथंपुनरिति ॥ यथानवतन्वेषुजनशब्दस्यलक्षणयाप्रयो
गस्तथाममप्राणादिषुपंचजनशब्दस्यलक्षणयेत्याह ॥ नन्वेषुवेति ॥ नहिरूढमतिक्रमसाम्यान्नत्वान्येवग्राह्याणीत्यतआह ॥ समानेति

केपुनस्तेपंचजनानामेतितदुच्यते ॥ प्राणादयोवाक्यशेषात् ॥ १२ ॥ यस्मिन्पंचपंचजनाइत्यतउत्तरस्मिन्मं
त्रेब्रह्मस्वरूपनिरूपणायप्राणादयः पंचनिर्दिष्टाः प्राणस्यप्राणमुतचक्षुषश्चक्षुरुतश्रोत्रस्यश्रोत्रमन्नस्यान्नं
मनसोयेमनोविदुरितितेत्रवाक्यशेषगताः सन्निधानात्पंचजनाः इतिविवक्ष्यंते कथंपुनः प्राणादिषुजनशब्दप्रयो
गः ॥ नन्वेषुवाकथंजनशब्दप्रयोगः समानेतुप्रसिद्ध्यतिक्रमेवाक्यशेषवशात्प्राणादयएवग्रहीतव्याभवंति जा
नसंबंधाच्चप्राणादयोजनशब्दभाजोभवंतिजनवचनश्चपुरुषशब्दः प्राणेषुप्रयुक्तः तेवाएतेपंचब्रह्मपुरुषा
इत्यत्रप्राणोहपिताप्राणोमातेत्यादिचब्राह्मणं ॥ समासबलाच्चसमुदायस्यरूढत्वमविरुद्धंकथंपुनरसतिप्रथ
(मप्रयोगेरूढिः शक्याआश्रयितुं ॥

ति ॥ सन्निहितसजातीयानपेक्षश्रुतिस्थाएवग्राह्याः नतुव्यवहितविजातीयसापेक्षस्मृ
तिस्थाइत्यर्थः लक्षणाबीजंसंबंधमाह ॥ जनेति ॥ जनः पंचजनइतिपर्यायः पुरुषपित्रादिशब्दवच्चपंचजनशब्दस्यप्राणादिलक्षक
त्वंयुक्तमित्याह ॥ जनवचनश्चेति ॥ ननुजायतइतिजनाः महदादयः जनकत्वाज्जनः प्रधानमितियोगसंभवेकिमितिरूढिमाश्रित्य
लक्षणावृत्याप्रयासइत्यतआह ॥ समासेति ॥ यथाश्वकर्णशब्दस्यवर्णसमुदायस्यवृक्षेरूढिरेवंपंचजनशब्दस्यरूढिरेवनावयवशक्त्या

स्युः पुमांसः पंचजना इत्यमरकोशादौ प्रयोगोस्त्येव तत्र भावमंगीकृत्याप्याह ॥ शक्येति ॥ जनसंबंधाच्चेति पूर्वभाष्येन तेषु पंचजनश
ब्दस्य रूढिमाश्रित्य प्राणादिषु लक्षणोक्ता इह तु प्रौढिवादेन प्राणादिषु रूढिरुच्यत इति मंतव्यं संगृहीतं विवृणोति ॥ प्रसिद्धेत्यादिना ॥ उ
द्भिदा यजेत पशुकाम इत्यत्रोद्भित्पदं विधेयगुणार्थकं कर्मनामधेयं वेति संशये खनित्रादावुद्भित्पदस्य प्रसिद्धेर्योगनामत्वे प्रसिद्धिवि
रोधात् ज्योतिष्टोमे गुणविधिरिति प्राप्ते सिद्धांतः यजेतेत्यागेनेष्टं भावयेदित्यर्थः तत्रश्चोद्भिदेत्यप्रसिद्धस्य तृतीयांतस्य यागेनेत्यनेन प्र
सिद्धार्थकेन समानाधिकरण्येन तन्नामत्वं निश्चीयते उद्भिनत्ति पशून्साधयतीति प्रसिद्धेरविरोधादप्रकृतज्योतिष्टोमे गुणविध्ययो

शक्योद्भिदादिवदित्याह ॥ प्रसिद्धार्थसन्निधानेह्यप्रसिद्धार्थः शब्दः प्रयुज्यमानः समभिव्याहारात्तद्विष
यो नियम्यते यथोद्भिदा यजेत यूपं छिनत्ति वेदिं करोतीति ॥ तथायमपि पंचजनशब्दः समासान्वाख्या
नाद्वगतसंज्ञाभावः संख्याकांक्षी वाक्यशेषसमभिव्याहृतेषु प्राणादिषु वर्त्तिष्यते ॥ केचित्तु देवाः पित
रो गंधर्वा असुरा रक्षांसि च पंच पंचजना ख्याता अन्यैश्चत्वारो वर्णा निषादपंचमाः परिगृहीताः क
चिच्च यत्पांचजन्यया विशेति प्रजापरः प्रयोगः पंचजनशब्दस्य दृश्यते तत्परिग्रहेपीह न कश्चिद्विरोधः ॥

गात्तद्विधौ चोद्भिदाख्यगुणवता यागेनेति मत्वर्थसंबंधलक्षणाप्रसंगाच्चेति कर्मनामैवोद्भित्पदं तथा छिनत्तीति प्रसिद्धार्थच्छेदनयोग्या
र्थकशब्दसमभिव्याहाराद्दारुविशेषो यूपशब्दार्थः करोतीति समभिव्याहाराद्वेदिशब्दार्थः संस्कारयोग्यस्थंडिलविशेष इति गम्यते तथा
प्रसिद्धार्थकप्राणादिशब्दसमभिव्याहारात्पंचजनशब्दः प्राणाद्यर्थक इति निश्चीयत इत्यर्थः एकदेशिनां मतद्वयमाह ॥ केचिदित्यादिना ॥
शूद्रायां ब्राह्मणाज्जातो निषादः अन्या पंचजनशब्दस्यार्थांतरमाह ॥ क्वचिच्चेति ॥ पांचजन्यया प्रजया विशतीति विट् तया विशा पुरुषरूप
येंद्रस्याह्वानार्थं घोषाः सृष्टा इति यजुःश्रुतं घोषानिति केचित् ब्राह्मणाद्या योगादिति श्रुत्यनुसारेण प्रजामात्रग्रहेपि न विरोध इत्यर्थः ॥ ६ ॥

सूत्रविरोधइत्याशंक्याह॥ आचार्यस्त्विति॥ अतः सांख्यनत्यानिमित्तयत्किंचित्परतयापंचजनशब्दव्याख्यायामविरोधइतिभावः॥१२॥
शंकोत्तरत्वेनसूत्रांतरमुपादत्ते॥ भवेयुरिति॥ ज्योतिषांसूर्यादीनांज्योतिस्तद्ब्रह्मदेवाउपासनइत्यर्थः नन्विदंपक्षांतज्योतिःपदोक्तसूर्यादि
कंज्योतिः शाखाद्वयेप्यस्तितत्काण्वानांपंचत्वपूरणायगृह्यतेनान्येषामितिविकल्पोनयुक्तइतिशंकते॥ कथंपुनरिति ॥आकांक्षाविशे

आचार्यस्तुनपंचविंशतेस्तत्त्वानामिहप्रतीतिरस्तीत्येवंपरतयाप्राणादयोवाक्यशेषादितिजगाद॥१२॥
भवेयुस्तावत्प्राणादयः पंचजनामाध्यंदिनानांयेन्नंप्राणादिषामन्नंतिकाण्वानांतुकथंप्राणादयः पंचजना भ
वेयुर्येऽन्नंप्राणादिषुनामनंतीतिअतउत्तरंपठति॥ ज्योतिषैकेषामसत्यन्ने॥१३॥ असत्यपिकाण्वानामन्नेज्यो
तिषातेषांपंचसंख्यापूर्येतनेपिहियस्मिन्पंचपंचजनाइत्यतःपूर्वस्मिन्मंत्रेब्रह्मस्वरूपनिरूपणायैवज्योति
रधीयतेतेनहदेवाज्योतिषांज्योतिरिति॥ कथंपुनरुभयेषामपितुल्यवदिदंज्योतिःपठ्यमानंसमानमंत्रगततया
पंचसंख्ययाकेषांचिद्गृह्यतेकेषांचिन्नेति॥ अपेक्षाभेदादित्याह माध्यंदिनानांहिसमानमंत्रपठितप्राणादि
पंचजनलाभात्तास्मिन्मंत्रांतरपठितेज्योतिष्यपेक्षाभवतितदालाभात्तुकाण्वानांभवत्यपेक्षाअपेक्षाभेदाच्च
समानेपिमंत्रेज्योतिषोग्रहणाग्रहणेयथासमानेप्यतिरात्रेवचनभेदात्षोडशिनोग्रहणाग्रहणेतद्वत्॥ तदे
वंननावत्श्रुतिप्रसिद्धिःकाचित्प्रधानविषयास्ति॥ स्मृतिन्यायप्रसिद्धीतुपरिहरिष्येते॥१३॥

(१ षाद्विकल्पोयुक्तइ
त्याहसिद्धांतीअपेक्षेति यथातिरात्रेषोडशिनंगृण्हातिनगृण्हातीतिवाक्यभेदाद्विकल्पस्तद्वच्छाखाभेदेनान्नपाठापाठाभ्यांज्योतिषोविक
ल्पइत्यर्थः॥ ननुक्रियायांविकल्पोयुक्तःनवस्तुनीतिचेन्नत्वंअत्रापिशाखाभेदेनसान्नाज्योतिःसहितावाप्राणादयोयत्रप्रतिष्ठितास्तत्र
नसानुद्रष्टव्यमितिध्यानक्रियायांविकल्पोपपत्तिरित्यनवद्यं॥ उक्तंप्रधानस्याशब्दत्वमुपसंहरति॥ तदेवमिति॥ तथापिस्मृतियुक्तिभ्यांप्रधा

कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ पूर्वग्रंथेनास्य संगतिं वक्तुं वृत्तमनुवदति ॥ प्रतिपादितमिति ॥ अधिकरणत्रयेण प्रधान
स्याश्रौतत्वोक्त्या जगत्कारणत्वलक्षणेन ब्रह्मण एव बुद्धिस्थतात्तस्मिन्नेव बुद्धिस्थे निर्विशेषे ब्रह्मणि वेदांतानां समन्वय इति साधितं पूर्वसू
त्रसंदर्भेण तत्र लक्षणसमन्वययोरसिद्धिरेव श्रुतीनां विरोधदर्शनादित्याक्षेपरूपां तेनास्य संगतिमाह ॥ तत्रेति ॥ न चाविरोधचिंतायाः
द्वितीयाध्यायसंगतिर्नास्मिन्नध्याय इति वाच्यं सिद्धे समन्वये स्मृत्यादिमानांतरविरोधनिरासस्य द्वितीयाध्यायार्थत्वात्तत्र सदवाच्यजगत्का
रणवादिश्रुतीनां मिथो विरोधाद्वाच्यार्थानिर्णयेन लक्ष्ये समन्वयासिद्धौ प्राप्तायां तत्साधकाविरोधचिंता अत्रैव संगतत्वात् न चैवं सृष्टिश्रु
तीनामप्यविरोधोऽत्रैव चिंतनीय इति वाच्यं स्वप्नवत्कल्पितसृष्टौ विरोधस्यैवाभावात् किमर्थं तर्हि द्वितीये तच्चिंतनं स्थूलबुद्धिसमाधाना

कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥१४॥ प्रतिपादितं ब्रह्मणो लक्षणं प्रतिपादितं च ब्रह्मवि
षयं गतिसामान्यं वेदांतवाक्यानां प्रतिपादितं च प्रधानस्याशब्दत्वं ॥ तत्रेदमपरमाशंक्यते न जन्मादि
कारणत्वं ब्रह्मणो ब्रह्मविषयं वा गतिसामान्यं वेदांतवाक्यानां प्रतिपत्तुं शक्यं कस्माद्विगानदर्शनात् ॥
प्रतिवेदांतं ह्यन्यान्या सृष्टिरुपलभ्यते क्रमादिवैचित्र्यात् ॥ ९ यमिति ब्रूमः इह तु सूक्ष्मदृशां वाक्यार्थे समन्वयज्ञा

नायतत्पदार्थश्रुतिविरोधः परिह्रियते यद्यपि त्वंपदार्थश्रुतिविरोधोऽत्र परिहर्तव्यः तथापि प्रथमसूत्रेण बंधमिथ्यात्वसूचनाद
विरोधः सिद्धः प्रपंचस्तु स्थूलबुद्धिसमाधानप्रसंगेन भविष्यतीति मन्यते सूत्रकारः अत्र जगत्कारणश्रुतयो विषयास्ताः किं ब्र
ह्मणि मानं न वेति संशये अन्योन्यविरोधात् संख्यादृष्टिक्रियायां विकल्पेऽपि कारणे वस्तुन्यसद्वा सद्वा कारणमित्यादिविकल्पासंभवाद
प्रामाण्यमिति प्रत्युदाहरणेन पूर्वपक्षयन्नुक्ताक्षेपं विवृणोति ॥ प्रतिवेदांतमित्यादिना ॥ वेदांतानां समन्वयसाधनात् श्रुत्यध्याय सं
गतिः असदादिपदानां सत्कारणेन समन्वयोक्तेः पादसंगतिः पूर्वपक्षे समन्वयासिद्धिः फलं सिद्धांते तत्सिद्धिरिति विवेकः ॥ ६ ॥

शा.भा.दी र.प्र. २५१

क्रमाक्रमाभ्यां सृष्टिविरोधं तावद्दर्शयति तथाहि क्वचिदित्यादिना ॥ स परमात्मा लोकानसृजत अम्भ यशरीरमद्युरस्वर्गलोकोंभःशब्दा र्थः सूर्यरश्मिव्याप्तोऽन्तरिक्षलोको मरीचयः मरो मर्त्यलोकः अब्बहुलाः पातालल्लोकाः आप इति श्रुत्यर्थः सृष्टिविरोधमुक्त्वा कारणविरोधमा ह ॥ तथेति ॥ असदनभिव्यक्तनामरूपात्मकं कारणं ततः कारणात्सदभिव्यक्तमेतत्तुल्यार्थं छान्दोग्यवाक्यमाह ॥ असदेवेति किं शून्यमेव

अ.पा. १।४

तथाहि क्वचिदात्मन आकाशः संभूत इत्याकाशादिका सृष्टिराम्नायते क्वचित्तेज आदिका तत्तेजोऽसृजतेति क्वचित्प्राणादिका स प्राणमसृजत प्राणाच्छ्रद्धामिति क्वचिदक्रमेणैव लोकानामुत्पत्तिराम्नायते स इमां ल्लोकानसृजताम्भो मरीचीर्मरमाप इति ॥ तथा क्वचिदसत्पूर्विका सृष्टिः पठ्यते असद्वा इदमग्र आसीत्ततो वै सदजायतेति ॥ असदेवेदमग्र आसीत्तत्सदासीत्तत्समभवदिति च क्वचिदसद्वादनिराकरणेन सत्पूर्विका प्रक्रिया प्रतिज्ञायते तद्धैक आहुरसदेवेदमग्र आसीदित्युपक्रम्य कुतस्तु खलु सोम्यैवं स्यादिति होवाच ॥ कथमसतः सज्जायेतेति सदेव सोम्येदमग्र आसीदिति क्वचित्स्वयंकर्तृकैव प्रक्रिया जगतो निगद्यते तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियतेति ॥ एवमनेकधा विप्रतिपत्तेः वस्तुनि च विकल्पस्यानुपपत्तेर्न वेदान्तवाक्यानां जगत्कारणावधारणपरता न्याय्या स्मृतिन्यायप्रसिद्धिभ्यां तु कारणान्तरपरिग्रहो न्याय्यः ।

नेत्याह ॥ तत्सदिति ॥ अबाधितं ब्रह्मैवासीदित्यर्थः तद्ब्रह्मात्मनास्थितं जगत् सृष्टिकाले सम्यगभिव्यक्तं स्य इति एवं प्राप्ते ब्रूमः अभवत् प्रक्रियासृष्टिः तत्त्रकारण एकेवाह्याः तेषां मतं श्रुतिरेव दूषयति ॥ कुत इति कुतस्त्वेवं पदयोरर्थमाह कथमिति ॥ स्वमतमा ह ॥ सदिति ॥ तदिदं जगद्धि किल तर्हि प्राक्काले ऽव्याकृतं कारणात्मकमासीत् ॥ श्रुतीनां विरोधमुपसंहरति ॥ एवमिति ॥ किमत्र न्याय्यमित्याशङ्क्य मानान्तरसिद्धप्रधानलक्षकत्वं वेदान्तानां न्याय्यमित्याह ॥ स्मृतीति ॥ ०—० ॥

राम ४५१

तत्र सृष्टौ विरोधमंगीकृत्य स्रष्टरि विरोधं परिहरति सत्यपीति॥ आकाशादिषु ब्रह्मणः कारणत्वे विरोधो नास्तीति प्रतिज्ञायां हेतुमाह॥ कुत
त इति यथाभूतत्वमेवाह॥ सर्वज्ञ इति॥ कारणस्य सर्वज्ञत्वादिकं प्रतिवेदांतं दृश्यत इत्याह॥ तद्यथेत्यादिना॥ तद्विषयेण ब्रह्मविषयेण चे

सत्यपि प्रतिवेदांतं सृज्यमानेष्वाकाशादिषु क्रमादिद्वारके विगाने न स्रष्टरि किंचिद्विगानमस्ति कुतः यथा
व्यपदिष्टोक्तेः यथाभूतो ह्येकस्मिन्वेदांते सर्वज्ञः सर्वेश्वरः सर्वात्मैकोऽद्वितीयः कारणत्वेन व्यपदिष्टः तथाभू
त एव वेदांतांतरेष्वपि व्यपदिश्यते॥ तद्यथा सत्यं ज्ञानमनंतं ब्रह्मेति अत्र तावज्ज्ञानशब्देन परेण च तद्विष
येण कामयितृत्ववचनेन चेतनं ब्रह्म न्यरूपयदपरप्रयोज्यत्वेनेश्वरं कारणमब्रवीत् तद्विषयेणैव परेणा
त्मशब्देन शरीरादिकोशपरंपरया चांतरानुप्रवेशनेन सर्वेषामंतःप्रत्यगात्मानं निरधारयत्॥ बहु स्यां प्रजा—
—येयेति चात्मविषयेण बहुभवनानुशंसनेन सृज्यमानानां विकाराणां स्रष्टुरभेदमभाषत तथेदं सर्वम
सृजत यदिदं किंचेति समस्तजगत्सृष्टिनिर्देशेन प्राक्सृष्टेरद्वितीयं स्रष्टारमाचष्ट॥ तदत्र यल्लक्षणं ब्रह्म का
रणत्वेन विज्ञातं तल्लक्षणमेवान्यत्रापि विज्ञायते सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां
प्रजायेयेति तत्तेजोऽसृजतेति॥ तथात्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्स ईक्षत लोकान्नु सृजा
इति चैवंजातीयकस्य कारणस्वरूपनिरूपणपरस्य वाक्यजातस्य प्रतिवेदांतमगीतार्थत्वात्॥ ७ ॥

तनं सर्वज्ञं तदात्मानं स्वयमकुरुतेति श्रुतेरपरप्रयोज्यत्वं तस्माद्वा एतस्मादात्मन इति प्रत्यगात्मत्वं स्वस्य बहुरूपत्वकामनया स्थितिका
लेऽप्यद्वितीयत्वं यथा तैत्तिरीयके सर्वज्ञत्वादिकं कारणस्य तथा छांदोग्यादावपि दृश्यत इत्याह॥ तदत्र यल्लक्षणमिति॥ मिषत्सव्यापा
रं अविगीतार्थत्वा दविरुद्धार्थकत्वात् कारणे नास्ति विप्रतिपत्तिरिति शेषः॥

शा.भा. टी. र.प्र. १५२

तथापि कार्ये विरोधात्कारणेपि विरोधः स्यादित्याशंकां निषेधति कार्यविषयत्वमित्यादिना ॥ स्वप्नसृष्टीनां प्रत्यहमन्यथात्वेन सोहमिति। प्रत्यभिज्ञायमाने द्रष्टर्यपि नानात्वं प्रसज्येतेत्याह ॥ अतिप्रसंगादिति ॥ सृष्टिविरोधमंगीकृत्य स्रष्टरि न विरोध इत्युक्तं अधुनांगीकारं त्यजति ॥ समाधास्यति चेति ॥ किमर्थं तर्हि श्रुतयः सृष्टिमन्यथान्यथा वदंतीत्याशंक्य सृष्टावतात्पर्यज्ञापनायेत्याह ॥ भवेदित्यादिना ॥ अतात्पर्यार्थे विरोधो न दोषायेत्यर्थं साधयति ॥ नहीति फलवद्ब्रह्मवाक्यशेषत्वेन सृष्टिवाक्यानामर्थवत्त्वसंभवात्स्वार्थे पृथक्फलं।

कार्यविषयं तु विगानं दृश्यते क्वचिदाकाशादिका सृष्टिः क्वचित्तेजआदिके त्येवंजातीयकं न च कार्यविषयेण विगानेन कारणमपि ब्रह्म सर्ववेदांतेष्वविगीतमधिगम्यमानमविवक्षितं भवितुमर्हतीति शक्यते वक्तुं अतिप्रसंगात्समाधास्यति चाचार्यः कार्यविषयमपि विगानं न वियदश्रुतेरित्यारभ्य भवेदपि कार्यस्य विगीतत्वं अप्रतिपाद्यत्वात् नह्ययं सृष्ट्यादिप्रपंचः प्रतिपिपादयिषितः ॥ नहि तत्प्रतिबद्धः कश्चित्पुरुषार्थो दृश्यते श्रूयते वा न च कल्पयितुं शक्यते उपक्रमोपसंहाराभ्यां तत्र तत्र ब्रह्मविषयैर्वाक्यैः साकमेकवाक्यताया गम्यमानत्वात् ॥ दर्शयति च सृष्ट्यादिप्रपंचस्य ब्रह्मप्रतिपत्त्यर्थतां अन्नेन सोम्य शुंगेनापो मूलमन्विच्छाद्भिः सोम्य शुंगेन तेजो मूलमन्विच्छ तेजसा सोम्य शुंगेन सन्मूलमन्विच्छेति ॥ मृदादिदृष्टांतैश्च कार्यस्य कारणेनाभेदं वदितुं सृष्ट्यादिप्रपंचः श्राव्यत इति गम्यते तथा च संप्रदायविदो वदंति मृल्लोहविस्फुलिंगाद्यैः सृष्टिर्या चोदितान्यथा उपायः सोवताराय नास्ति भेदः कथंचनेति ॥ ९. कल्प्यं वाक्यभेदापत्तेरित्याह ॥

न च कल्पयितुमिति ॥ न्यायादेकवाक्यत्वं सिद्धं श्रुतिरपि दर्शयतीत्याह ॥ दर्शयति चेति ॥ शुंगेन कार्येण लिंगेन कारणब्रह्मज्ञानार्थत्वं सृष्टिश्रुतीनामुक्त्वा कारणस्याद्वयत्वज्ञानं फलांतरमाह ॥ मृदादीति ॥ एवं निष्फलायामन्यार्थायां सृष्टौ नान्यथाभावाद्विरोधो न दोष इत्यत्र वृद्धसंमतिमाह ॥ तथा चेति ॥ अन्यथान्यथेति वीप्सा द्रष्टव्या अवताराय ब्रह्मधीजन्मने अतस्तदन्यथात्वेपि ब्रह्मणि न भेदः द्वैतेन वि

अ.पा. १.४

राम १५२

ब्रह्मज्ञानस्य सृष्टिशेषित्वमुक्त्वा तन्निर्वाहाय तस्य फलमाह ॥ ब्रह्मेति ॥ मृत्युमत्येतीत्यन्वयः ॥१४॥ एवं सृष्टिद्वारकं विरोधमुत्सूत्रं समाधा-
यकारणस्य सदसत्त्वादिना साक्षाच्छ्रुतविरोधनिरासार्थं सूत्रमादत्ते ॥ यत्पुनरिति ॥ यतोऽस्तित्वलक्षणं ब्रह्म निर्धार्यते तस्मिन्नेव श्लोकमु-
दाहरति अतोऽत्र श्लोके निरात्मकमसत्त्वं श्राव्यत इति योजना न तत्र सदात्मनि श्लोको मंत्रो भवति ॥ सदात्मसमाकर्षादतींद्रियार्थकास ॥

ब्रह्मप्रतिपत्तिसंबद्धं तु फलं श्रूयते ब्रह्मविदाप्नोति परं तरति शोकमात्मवित् तमेव विदित्वातिमृत्युमेतीति
प्रत्यक्षावगमं चेदं फलं तत्त्वमसीत्यसंसार्यात्मत्वप्रतिपत्तौ सत्यां संसार्यात्मत्वव्यावृत्तेः ॥१४॥ यत्पुनः का-
रणविषयं विगानं दर्शितम् असद्वा इदमग्र आसीदित्यादि तत्परिहर्तव्यम् अत्रोच्यते समाकर्षात् ॥१५॥ असद्वा
इदमग्र आसीदिति नात्रासन्निरात्मकं कारणत्वेन श्राव्यते यतोऽसन्नेव स भवत्यसद्ब्रह्मेति वेद चेदस्ति ब्रह्मे-
ति चेद्वेद सन्तमेनं ततो विदुरित्यसद्वादापवादेनास्तित्वलक्षणं ब्रह्मान्नमयादिकोशपरंपरया प्रत्यगात्मानं निर्धा-
र्य सोऽकामयतेति तमेव प्रकृतं समाकृष्य सप्रपंचां सृष्टिं तस्माच्छ्रावयित्वा तत्सत्यमित्याचक्षत इति चोपसं-
हृत्य तदप्येष श्लोको भवतीति तस्मिन्नेव प्रकृतेऽर्थे श्लोकमिममुदाहरत्यसद्वा इदमग्र आसीदिति यदि त्वा-
सन्निरात्मकमस्मिन् श्लोकेऽभिप्रेयेत ततोऽन्यसमाकर्षणेऽन्यस्योदाहरणादसंबद्धं वाक्यमापद्येत ॥ तस्मा-
न्नामरूपव्याकृतवस्तुविषयः प्रायेण सच्छब्दः प्रसिद्ध इति तद्व्याकरणाभावापेक्षया प्रागुत्पत्तेः सदेव
ब्रह्मासदिवासीदित्युपचर्यते ॥ एषैवासदेवेदमग्र आसीदित्यत्रापि योजना तदसदासीदिति समाकर्षणात् ॥ अत्य-

त्यदेन ब्रह्मलक्षणत इत्याह ॥ तस्मादिति ॥ न च प्रधानमेव लक्ष्यतामिति वाच्यं चेतनार्थकश्रुत्यादि( नाभावाभ्युपगमे हि तत्सद-
च्छब्दानामनेकेषां लक्षणागौरवादिति भावः ॥ तित्तिरिश्रुतौ सूत्रं योजयित्वा छांदोग्यादौ योजयति ॥ एषैवेति ॥ सदेकार्थकतत्परत्वेन पूर्वो

नन्वसत्पक्षलक्षणानुपयुक्ता श्रुतिभिरेवसत्पक्षमतभेदेनोदितानुदितहोमवद्विकल्पस्य दर्शितत्वादित्यत आह ॥ तद्धैक इति ॥ एकमेवाद्वितीयं इत्य
र्थो न भवति किं त्वनादि संसारस्वरूपस्यावेदनार्था इत्यर्थः ॥ श्रुत्यन्तरनिरासेन श्रुतिभिः सद्वादस्यैवेष्टत्वात्तासां विरोधस्फूर्तिनिरासाय लक्ष
णायुक्तेति भावः यदुक्तं क्वचिदकर्तृका सृष्टिः कथितेति तत्रेत्याह ॥ तद्धेदमिति ॥ अध्यक्षः कर्तानुकर्त्रभाव एव परामृश्यत इत्यत आ



तद्धैके आहुरसदेवेदमग्र आसीदित्यत्रापि नञ्त्यन्तराभिप्रायेणायमेकीयमतोपन्यासः क्रियायामिव
वस्तुनि विकल्पस्यासंभवात् तस्माच्छ्रुतिपरिगृहीतसत्पक्षस्य दार्ढ्यायैवायं मंदमतिपरिकल्पितस्यासत्प
क्षस्योपन्यस्य निरासः क्रियत इति द्रष्टव्यं तद्धेदं तर्ह्यव्याकृतमासीदित्यत्रापि तन्निरध्यक्षस्य जगतो व्याक
रणं कथ्यते स एष इह प्रविष्ट आनखाग्रेभ्य इत्यध्यक्षस्याव्याकृतकार्यानुप्रवेशित्वेन समाकर्षात् निरध्य
क्षे व्याकरणाभ्युपगमे ह्यनंतरेण प्रकृतावलंबिना स इत्यनेन सर्वनाम्नाकः कार्यानुप्रवेशित्वेन समाकृ
ष्येत चेतनस्य चायमात्मनः शरीरेऽनुप्रवेशः श्रूयते प्रविष्टस्य चेतनत्वश्रवणात् पश्यंश्चक्षुः शृण्वन् श्रो
त्रं मन्वानो मन इति अपि च यादृशमिदमद्यत्वे नामरूपाभ्यां व्याक्रियमाणं जगत्साध्यक्षं व्याक्रियत एव
मादिसर्गेऽपीति गम्यते दृष्टविपरीतकल्पनानुपपत्तेः श्रुत्यंतरमप्यनेन जीवेनात्मनानुप्रविश्य नामरूपे ।
व्याकरवाणीति साध्यक्षामेव जगतो व्याक्रियां दर्शयति व्याक्रियत इत्यपि कर्मकर्तरि लकारः सत्येव परमे

ह ॥ चेतनस्य चायमिति ॥ चक्षुर्द्रष्टा श्रोत्रं श्रोता मनो मंतेत्युच्यत इत्यर्थः ॥ आद्यकार्यं (( श्वरे व्याकर्तरि सौकर्यमपेक्ष्य
सकर्तृकं कार्यत्वात् घटादिवदित्याह अपि चेति ॥ अद्यत्व इदानीं तनु कर्मकारकादन्यस्य कर्तुः सत्त्वे कर्मण एव कर्तृत्वाविल
कारो विरुद्ध इत्यत आह ॥ व्याक्रियत इति अनायासेन सिद्धिमपेक्ष्य कर्मणः कर्तृत्वमुपचर्यत इत्यर्थः ॥

व्याक्रियतेजगत्स्वयमेवनिष्पन्नमितिव्याख्यायकेनचिद्व्याकृतमितिव्याचष्टे॥ यद्वेति॥ अतःश्रुतीनामविरोधात्कारणद्वारा
समन्वयइतिसिद्धम्॥१५॥ जगद्वाचित्वात्विषयमाह॥ कौषीनकीति॥ बलाकाया अपत्यंबालाकिर्ब्राह्मणस्तंप्रतिराजोवाच॥ योवा
इतिनकेवलमादित्यादीनांकर्ताकिंतुसर्वस्यजगतइत्याह॥ यस्येति॥ एतज्जगद्यस्यकर्मक्रियतइतिश्रुत्यन्याकार्यमित्यर्थः॥ क
र्मेतिशब्दस्ययोगरूढिभ्यांसंशयमाह॥ तत्रेति॥ पूर्वत्रैकवाक्यस्थसदादिशब्दबलादसन्त्वश्रुतीनीतःइहतुवाक्यभेदाद्ब्रह्मेतिग्रु॰।

यथात्वहयनेकेद्वारःस्वयमेवेतिसत्येवपूर्णकेलविनरियद्वाकर्मण्येवैषलकारःअर्थासिद्धंकर्तारमपेक्ष्यद्
ष्टव्यःयथागम्यतेग्रामइति॥१५॥ जगद्वाचित्वात्॥१६॥ कौषीतकिब्राह्मणेबालाकजातशत्रुसंवादेश्रूयते॥
योवैबालाकेएतेषांपुरुषाणांकर्तायस्यवैतत्कर्मसवैवेदितव्यइति॥ तत्रकिंजीवोवेदितव्यत्वेनोपदिश्यते
उतमुख्यःप्राणउतपरमात्मेतिविशयः किंतावत्प्राप्तंप्राणइतिकुतःयस्यवैतत्कर्मेतिश्रवणात्परिस्पंदलक्ष
णस्यचकर्मणःप्राणाश्रयत्वाद्वाक्यशेषेचाथास्मिन्प्राणएवैकधाभवतीतिप्राणशब्ददर्शनात्प्राणशब्दस्य
चमुख्येप्राणेप्रसिद्धत्वात्॥ येचैतेपुरस्ताद्बालाकिनादित्येपुरुषश्चन्द्रमसिपुरुषइत्येवमादयःपुरुषाः
निर्दिष्टास्तेषामपिभवतिप्राणःकर्ताप्राणावस्थाविशेषत्वादादित्यादिदेवतात्मनांकतमएकोदेवइति
प्राणइतिसब्रह्मत्यदित्याचक्षतेइतिश्रुत्यंतरप्रसिद्धेः॥ ११णीतिबालाकिवाक्यस्यब्रह्मशब्देनप्राणादिशब्दोब्रह्म

परत्वेननेतुमशक्यइतिप्रत्युदाहरणेनपूर्वपक्षमाह॥ किंतावदिति॥ पूर्वपक्षेवाक्यस्यप्राणाद्युपास्तिपरत्वाद्ब्रह्मणिसमन्वयासि
द्धिःसिद्धांतेत्वेयेसमन्वयसिद्धिरितिफलंअथसुपुनोदृष्टेतिशेषः॥ श्रुतेपुरुषकर्तृत्वंप्राणस्यकथमित्यतआह॥ येचैतेइतिसूत्रा
त्मकप्राणस्यविकाराःसूर्योदयइत्यत्रमानमाह॥ कतमइति॥ यस्य महिमानःसर्वेदेवाइतिपूर्ववाक्यदर्शितेअतःसर्वदेवात्मक

ब्र॰भा॰ टी॰ र॰प्र॰ १५४

पूर्वपक्षान्तरमाह॥ जीवो वेति॥ यत्कारणं यस्माज्जीवं बोधयति तस्माद्धेतोः सुप्तोत्थापनं जीवलिंगमिति योजना॥ तौ ह सुप्तं पुरुषं सुप्तमाज-
ग्मतुः तं राजा हे बृहन्पाण्डुरवासः सोमराजन्निति आमन्त्र्य संबोध्य संबोधनानभिज्ञत्वात्प्राणादेरनात्मत्वमुक्त्वा यष्ट्याघातेनोत्थाप्य जीवं बोधि-
तवानित्यर्थः॥ श्रेष्ठी प्रधानः स्वैर्भृत्यैर्ज्ञातिभिरुपहृतं भुङ्क्ते स्वाः ज्ञातयश्च तमुपजीवन्ति एवं जीवोप्यादित्यादिभिः प्रकाशादिना भोगोपकरणै

जीवो वायमिह वेदितव्यतयोपदिश्यते तस्यापि धर्माधर्मलक्षणं कर्म शक्यते श्रावयितुं यस्य वैतत्कर्मेति
सोपि भोक्तृत्वाद्भोगोपकरणभूतानामेतेषां पुरुषाणां कर्तोपपद्यते वाक्यशेषे च जीवलिंगमवगम्यते यत्कार-
णं वेदितव्यतयोपन्यस्तस्य पुरुषाणां कर्तुर्वेदनायोपेतं बालाकिं प्रति बुबोधयिषुरजातशत्रुः सुप्तं पुरुषमाम-
न्त्र्यामन्त्रणशब्दाश्रवणात्प्राणादीनामभोक्तृत्वं प्रतिबोध्य यष्टिघातोत्थानात्प्राणादिव्यतिरिक्तं जीवं भोक्तारं प्रति-
बोधयति तथा परस्तादपि जीवलिंगमवगम्यते तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्राज्ञा-
त्मैतैरात्मभिर्भुङ्क्ते एवमेवैत आत्मान एतमात्मानं भुञ्जन्तीति॥ प्राणभृत्त्वाच्च जीवस्योपपन्नं प्राणशब्दत्वं तस्मा-
ज्जीवमुख्यप्राणयोरन्यतर इह ग्रहणीयो न परमेश्वरः तल्लिंगानवगमादिति एवं प्राप्ते ब्रूमः परमेश्वर ए-
वायमेतेषां पुरुषाणां कर्ता स्यात् कस्मात् उपक्रमसामर्थ्यात् इह हि बालाकिरजातशत्रुणा ब्रह्म ते ब्रवाणीति संव-
दितुमुपचक्रमे स च कतिचिदादित्याद्यधिकरणान्पुरुषानमुख्यब्रह्मदृष्टिभाज उक्त्वा तूष्णीं बभूव तमजातश-
त्रुर्मृषा वै खलु मा संवदिष्ठा ब्रह्म ते ब्रवाणीत्यमुख्यब्रह्मवादितयापोद्य तत्कर्तारमन्यं वेदितव्यतयोपचि-

भुङ्क्ते तेच हविर्ग्रहणादिना जीवमुपजीवन्तीत्युक्तं भोक्तृत्वं जीवलिंगं॥ ननु प्राण एवैकधा भवतीति श्रुतेः प्राणशब्दो जीवे कथमि-
त्यत आह प्राणभृत्त्वाच्चेति॥ सूत्राद्बहिरेव सिद्धान्तयति एवमिति॥ स च बालाकिर्ब्रह्मत्वभ्रान्त्या व्यष्टिलिंगरूपान्पुरुषाननुक्त्वा राज्ञा

अ॰१ पा॰४
१।४

जीवमुख्यप्राणलिंगान्नेति चेत्तद्व्याख्यातम्॥

राम
५५४

तदुक्तं ब्रह्म मृषेत्युक्त्वा राज्ञोच्यमानं ब्रह्मैवेति वक्तव्यम् अन्यथा राज्ञोपि मृषावादित्वप्रसंगादित्याह॥ यदि सोपीति वेदितव्योपीत्यर्थः मुख्यं पुरुषकर्तृत्वं ब्रह्मण एव लिंगं प्राणजीवयोस्तन्नियम्यत्वेनास्वातंत्र्यादित्याह कर्तृत्वं चेति यदुक्तं चलनादृष्टयोर्वाचकः कर्मशब्दः प्राणजीवयोरुपस्थापक इति तन्नेत्याह॥ यस्येति॥ अनेकार्थकात्कर्मशब्दादन्यतरार्थस्य प्रकरणादुपपदाद्वा ग्रहणं न्याय्यं अत्र प्रकरणोपपदयोरसत्वात्कस्य ग्रहणमिति संशये पुरुषकर्तृपदसान्निध्यात्क्रियत इति योगाज्जगद्ग्रहणमित्यर्थः॥ एतत्कर्मेति

यदि सोप्यमुख्यब्रह्मदृष्टिभाक् स्यादुपक्रमो बाध्येत तस्मात्परमेश्वर एवायं भवितुमर्हति कर्तृत्वं चैतेषां पुरुषाणां न परमेश्वरादन्यस्य स्वातंत्र्येणावकल्पते यस्य वैतत्कर्मेत्यपि नायं परिस्पंदलक्षणस्य धर्माधर्मलक्षणस्य वा कर्मणो निर्देशः तयोरन्यतरस्याप्यप्रकृतत्वात् असंशब्दितत्वाच्च नापि पुरुषाणामयं निर्देशः एतेषां पुरुषाणां कर्तेत्येव तेषां निर्दिष्टत्वाल्लिंगवचनविगानाच्च॥ नापि पुरुषविषयस्य करोत्यर्थस्य क्रियाफलस्य वायं निर्देशः कर्तृशब्देनैव तयोरुपात्तत्वात्परिशेषात्प्रत्यक्षसन्निहितं जगत्सर्वनाम्नैतच्छब्देन निर्दिश्यते क्रियत इति चैतदेव जगत्कर्म ननु जगदप्यप्रकृतमसंशब्दितं च सत्यमेतत् तथाप्यसति विशेषोपादाने साधारणेनार्थेन सन्निधानेन सन्निहितवस्तुमात्रस्यायं निर्देश इति गम्यते न विशिष्टस्य कस्यचिद्विशेषसन्निधानाभावात्॥

ऽऽ प्रकृतपरामर्शात्पुरुषाः पूर्वोक्ताः कर्मशब्देन निर्दिश्यंतामित्यत आह॥ नापीति॥ पौनरुक्त्यापातात्पुरुषाणां नपुंसकैकवचनपरामर्शायोगाच्चेत्यर्थः॥ ननु पुरुषोत्पादकस्य कर्तुर्व्यापारः करोत्यर्थ उत्पादनं तस्य फलं पुरुषजन्म तदन्यतरवाची कर्मशब्दोस्त्वित्यत आह॥ नापीति॥ कर्तृशब्देनेति क्रियाफलाभ्यां विना कर्तृत्वायोगात्कर्तृशब्देनैव तयोर्ग्रहणमित्यर्थः॥ जगतोपि प्रकरणोपपदे न स्त इत्युक्तमंगीकरोति॥ सत्यमिति॥ प्रकरणादिकं हि सर्वनाम्नः संकोचकं तस्मिन्नसति सामान्येन बुद्धिस्थं सर्वमेव गृह्यते अत्र संकोचकासत्वात्सर्वार्थकेन सर्वनाम्ना बुद्धिस्थस्य कार्यमात्रस्य कर्मशब्दो वाचक इत्याह तथापीति॥ ६॥ ~ ॥ ६॥

किंचजगदेकदेशोत्पादानांस्वक्तृत्वमित्याह ॥ पूर्वत्रेति ॥ जगद्वदे पुरुषाणामपि ग्रहात् यथायुक्तिर्व्यर्थेत्यत आह ॥ एतदुक्तमिति ॥ सर्वे दितव्यइतिसंबंधः पुरुषमात्रनिरूपितंकर्तृत्वमितिभ्रांतिनिरासार्थोवाशब्दः ब्राह्मणाभोजयितव्याःपरिव्राजकाश्चेत्यत्रयथाब्रा ह्मणशब्दः परिव्राजकान्यविषयः तथात्रकर्मशब्दः पुरुषान्यजगद्वाचीत्याह ॥ एवमिति ॥ अस्तुजगत्कर्त्तावेदितव्यःपरमेश्वर

पूर्वत्रचजगदेकदेशभूतानांपुरुषाणांविशेषोपादानादविशेषितंजगदेवेहोपादीयतइतिगम्यते ॥ ए तदुक्तंभवतियएतेषांपुरुषाणांजगदेकदेशभूतानांकर्त्ताकिमनेनविशेषेणयस्यवाकृत्स्नमेवजगदविशेषितंक र्मेतिवाशब्दएकदेशावच्छिन्नकर्तृत्वव्यावृत्त्यर्थःयेवालाकिनाब्रह्मत्वाभिमताःपुरुषाःकीर्तितास्तेषामब्रह्म त्वख्यापनायविशेषोपादानंएवंब्राह्मणपरिव्राजकन्यायेनसामान्यविशेषाभ्यांजगतःकर्त्तावेदितव्य तयोपदिश्यतेपरमेश्वरःसर्वजगतःकर्त्तासर्ववेदांतेष्ववधारितः ॥ १६ ॥ जीवमुख्यप्राणलिंगान्नेतिचेत्त द्व्याख्यातं ॥ १७ ॥ अथयदुक्तंवाक्यशेषगतात्जीवलिंगान्मुख्यप्राणलिंगाच्चतयोरेवान्यतरस्येहग्रह णंन्याय्यंनपरमेश्वरस्येतितत्परिहर्तव्यंअत्रोच्यतेपरिहृतंचैतत्नोपासात्रैविध्यादाश्रितत्वादिहतद्यो गादित्यत्र ॥ त्रिविधंह्यत्रोपासनमेवंसतिप्रसज्येतजीवोपासनंमुख्यप्राणोपासनंब्रह्मोपासनंचेतिन चैतन्न्याय्यंउपक्रमोपसंहाराभ्यांहिब्रह्मविषयत्वमस्यवाक्यस्यावगम्यतेतत्रोपक्रमस्तावद्ब्रह्मवि षयत्वंदर्शितंउपसंहारस्यापिनिरतिशयफलश्रवणात्ब्रह्मविषयत्वंदृश्यतेसर्वान्पाप्मनोपहत्यसर्वे



स्यकिमायातमित्यतआह ॥ परमेश्वरेति ॥ १६ ॥ सिद्धांतमुक्त्वापू (र्वोक्त)षांचभूतानांश्रैष्ठ्यंस्वाराज्यमाधिपत्यंपर्यैतियएवं वेदेति यए वंपक्षमनूद्यदूषयति ॥ जीवमुख्यप्राणलिंगादिति ॥ उक्तमेवस्मारयति ॥ त्रिविधमिति ॥ श्रैष्ठ्यंगुणाधिकं ॥ आधिपत्यंनियंतृत्वं ॥

संभवत्येकवाक्यत्वे वाक्यभेदो हि नेष्यते इत्युक्तं चेत्पुनरुक्तिः स्यादिति शंकते ॥ नन्वेवमिति ॥ कर्मपदस्य रूढ्यापूर्वपक्षप्राप्तौ तन्निरा
सार्थमस्यारंभो युक्त इत्याह ॥ नेत्यादिना ॥ प्राणशब्दजीवलिंगयोर्गतिमाह ॥ प्राणशब्दोपीति ॥ मनोजीवः ॥ १७ ॥ जीवलिंगेन ब्र
ह्मैव लक्ष्यत इत्युक्तं इदानीं तल्लिंगेन जीवोक्तिद्वारा ब्रह्म ग्राह्यमित्याह अन्यार्थमिति ॥ जीवपरामर्शस्य जीवाधिकरणब्रह्मज्ञा

नन्वेवं सति प्रतर्दनवाक्यनिर्णयेनैवेदमपि वाक्यं निर्णीयेत न निर्णीयते यस्य वैतत्कर्मेत्यस्य ब्रह्मविषयत्वे
न तत्रानिर्द्धारितत्वात् तस्मादत्र जीवमुख्यप्राणशंका पुनरुत्पद्यमाना निवर्त्यते प्राणशब्दोपि ब्रह्मविष
यो दृष्टः प्राणबंधनं हि सोम्य मन इत्यत्र जीवलिंगमप्युपक्रमोपसंहारयोर्ब्रह्मविषयत्वादभेदाभिप्राये
ण योजयितव्यं ॥ १७ ॥ अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १८ ॥ अपि च नैवात्र विव
दितव्यं जीवप्रधानं वेदं वाक्यं स्याद्ब्रह्मप्रधानं वेति यतोन्यार्थं जीवपरामर्शं ब्रह्मप्रतिपत्त्यर्थं अस्मिन्वाक्ये
जैमिनिराचार्यो मन्यते कस्मात्प्रश्नव्याख्यानाभ्यां प्रश्नस्तावत्सुप्तपुरुषप्रतिबोधनेन प्राणादिव्यतिरिक्ते
जीवे प्रतिबोधिते पुनर्जीवव्यतिरिक्तविषयो दृश्यते क्वैष एतद्बालाके पुरुषोशयिष्ट क्व वा एतदभूत्कुत एत
तदागादिति ॥ प्रतिवचनमपि यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवतीत्यादि ॥ ७ ॥

नार्थे प्रश्नमाह ॥ क्वैष इति ॥ हे बालाके एतच्छयनं विशेषज्ञानाभावरूपं यथा स्यात्तथैष पुरुषः क्वाशयिष्ट कस्मिन्नधिकरणे श
यनं कृतवानित्यर्थः ॥ एकीभावाश्रयत्ता नार्थं पृच्छति ॥ क्व वा इति ॥ एतद्भवनमेकीभावरूपं यथा स्यात्तथा एष पुरुषः क्वाभूत्सु
प्तः केनैक्यं प्राप्नोतीति यावत् उत्थानापादानं पृच्छति ॥ कुत इति ॥ एतदागमनमैक्याभ्रंशरूपं यथा स्यात्तथा पुरुषः कुत आगत इत्यर्थः
प्रश्नमुक्त्वा व्याख्यानमाह ॥ प्रतिवचनमिति ॥ शयनभवनयोराधार उत्थानापादानं च प्राणशब्दितं ब्रह्मैवेत्यर्थः ॥ ॥

उत्तरे प्राणोक्तेः प्रश्नोपि प्राणविषय इत्यत आह ॥ सुषुप्तिकाले चेति ॥ जगद्धेतुत्वजीवैक्याभ्यां प्राणो ब्रह्मेत्यर्थः ॥ जीवोक्तेरन्यार्थत्वमु
पसंहरति तस्मादिति निःसंबोधताविशेषधीशून्यतास्वच्छताविक्षेपमलशून्यता भेदभ्रान्तिशून्यतास्वरूपैकमाह ॥ उपाधीति ॥ प्रश्न
व्याख्यानयोर्ब्रह्मविषयत्वे शाखान्तरसंवादमाह ॥ अपि चैवमेके शाखिन इति ॥ ननु तत्राकाशः सुषुप्तिस्थानमुक्तं न ब्रह्मेत्यत आह ॥

एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोका इति च सुषुप्तिकाले च परेण ब्रह्म
णा जीव एकतां गच्छति परस्माच्च ब्रह्मणः प्राणादिकं जगज्जायत इति वेदान्तमर्यादा तस्माद्यत्रास्य जीवस्य
निःसंबोधतास्वच्छतारूपः स्वाप उपाधिजनितविशेषविज्ञानरहितं स्वरूपं यतस्तद्भ्रंशरूपमागमनं सोऽत्र
परमात्मा वेदितव्य इति गम्यते अपि चैवमेके शाखिनो वाजसनेयिनोऽस्मिन्नेव बालाक्यजा
तशत्रुसंवादे स्पष्टं विज्ञानमयशब्देन जीवमाम्नाय तद्व्यतिरिक्तं परमात्मानमामनन्ति य एष विज्ञानमयः पु
रुषः क्वैष तदाभूत्कुत एतदागादिति प्रश्ने प्रतिवचने य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेत इति आकाशश
ब्दश्च परमात्मनि प्रयुक्तो दहरोऽस्मिन्नन्तराकाश इत्यत्र सर्व एत आत्मानो व्युच्चरन्तीति चोपाधिमतामात्मना
मन्यतो व्युच्चरणमामनन्तः परमात्मानमेव कारणत्वेनामनन्तीति गम्यते प्राणनिराकरणस्यापि सुषुप्तपु
रुषोत्थापनेन प्राणादिव्यतिरिक्तोपदेशोऽभ्युच्चयः ॥ १८ ॥

११ आकाशेति ॥ उपाधिद्वारा प्रमात्रात्मजन्महेतुत्वाच्चाका
शो ब्रह्मेत्याह ॥ सर्व इति ॥ एवं जीवनिरासार्थकत्वेन सूत्रं व्याख्याय प्राणनिरासपरत्वेनापि व्याचष्टे ॥ प्राणेति अस्मिन्वाक्ये प्राणोप
देशं ब्रह्मज्ञानार्थं मन्यते जैमिनिः उक्तप्रश्नव्याख्यानाभ्यां वाक्यस्य ब्रह्मपरत्वावगमादपि चैके शाखिनः एवमेव प्राणातिरिक्तं जीवात्मा
नमामनन्तः प्राणस्य वाक्यार्थत्वं वारयन्तीति सूत्रयोजना अतिरिक्तजीवोपदेशः प्राणनिराकरणस्याप्यभ्युच्चयः हेत्वन्तरमिति भाष्यार्थः ॥

वाक्यान्वयात् ॥ विषयवाक्यमाह ॥ वृहदिति ॥ पत्यादेरात्मशेषत्वेनप्रियत्वादात्मैवसर्वशेषीप्रियतमोतोन्यत्परित्यज्यात्मैवद्रष्टव्यः
दर्शनार्थंश्रवणादिकंकार्यमित्यर्थः ॥ प्रियसंसूचितेनेति पतिजायादिभिःप्रियैर्भोग्यैर्जीवनयानुमितेनेत्यर्थः ॥ यथात्रब्रह्मनेष्टुवाणी
त्युपक्रमवलाद्वाक्यस्यब्रह्मपरत्वंतथात्रजीवोपक्रमादस्यवाक्यस्यजीवपरत्वमितिदृष्टांतेनपूर्वपक्षयति ॥ किंतावदिति पूर्वपक्षे

वाक्यान्वयात् ॥ १९ ॥ वृहदारण्यकेमैत्रेयीब्राह्मणेधीयतेनवाअरेपत्युः कामायेत्युपक्रम्यनवाअरेसर्व
स्यकामायसर्वंप्रियंभवत्यात्मनस्तुकामायसर्वंप्रियंभवत्यात्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासित
व्योमैत्रेय्यात्मनोवाअरेदर्शनेनश्रवणेनमत्याविज्ञानेनेदंसर्वंविदितमितितत्रैतद्विचिकित्स्यतेकिंविज्ञाना
त्मैवायंद्रष्टव्यश्रोतव्यत्वादिरूपेणोपदिश्यते आहोस्वित्परमात्मेतिकुतःपुनरेषाविचिकित्साप्रियसंसूचितेना
त्मनाभोक्त्रोपक्रमाद्विज्ञानात्मोपदेशइतिप्रतिभातितथात्मविज्ञानेनसर्वविज्ञानोपदेशात्परमात्मोपदे
शइति किंतावत्प्राप्तंविज्ञानात्मोपदेशइति कस्मादुपक्रमसामर्थ्यात्पतिजायापुत्रवित्तादिकंहिभोग्यभू
तंसर्वंजगदात्मार्थेनप्रियंभवतिप्रियसूचितेभोक्तारमात्मानमुपक्रम्यानंतरमिदमात्मनोदर्शनाद्युपदि
श्यमानंकस्यान्यस्यात्मनःस्यात्मध्येपीदंमहद्भूतमनंतमपारंविज्ञानघनएवैतेभ्योभूतेभ्यःसमुत्थाय
तान्येवानुविनश्यतिनप्रेत्यसंज्ञास्तीतिप्रकृतस्यैवमहतोभूतस्यद्रष्टव्यस्यभूतेभ्यःसमुत्थानंविज्ञानात्मभा
वेनब्रुवन्विज्ञानात्मनएवेदंद्रष्टव्यत्वंदर्शयतितथाविज्ञातारमरेकेनविजानीयादितिकर्तृवचनेनशब्दा

वाक्यस्यजीवोपास्तिपरत्वंसिद्धांतेज्ञेयेप्रत्यग्ब्रह्मणिसमन्वयइतिफ ॰ नोपसंहरन्विज्ञानात्मानमेवेहोपदिष्टंदर्शयति
लंइदंप्रत्यक्तमहदपरिच्छिन्नंभूतंसत्यमनंतंनित्यमपारंसर्वगतंचिदेकरसंएतेभ्यःकार्यकारणात्मनाजायमानेभ्योभूतेभ्यःसाक्षे

यभूतोपाधिकं जन्मानुभूयतान्येव भूतानि लीयमानान्यनुमृत्य विनश्यति औपाधिकमरणानंतरं विशेषधीर्नास्तीति श्रुत्यर्थः॥ वि
ज्ञानादेर्विज्ञानकर्तारं भोक्तृविज्ञाने भोग्यं ज्ञानमित्युपचारः मोक्षसाधनज्ञानगम्यत्वादिलिंगैर्वाक्यस्यान्वयाद्ब्रह्मण्येव तात्पर्यावा
गमाद्ब्रह्मप्रमापकत्वमिति सिद्धांतयति ॥ एवमिति॥ न वित्तेन तत्साध्येन कर्मणेत्यर्थः॥ भेदनिंदापूर्वकमभेदसाधनेनैकवि



तस्मादात्मविज्ञानेन सर्वविज्ञानवचनं भोक्त्रर्थत्वाद्भोग्यजातस्योपचारिकं द्रष्टव्यमित्येवं प्राप्ते ब्रूमः पर।
मात्मोपदेश एवायं कस्मात् वाक्यान्वयात् वाक्यं हीदं पौर्वापर्येणावेक्ष्यमाणं परमात्मानं प्रत्यन्वितावय
वं लक्ष्यते कथमिति तदुपपाद्यते अमृतत्वस्य तु नाशास्ति वित्तेनेति याज्ञवल्क्यादुपश्रुत्य येनाहं नामृ
तास्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति अमृतत्वमाशासानाया मैत्रेय्या याज्ञवल्क्य।
आत्मविज्ञानमिदमुपदिशति न चान्यत्र परमात्मविज्ञानादमृतत्वमस्तीति श्रुतिस्मृतिवादा वदंति तथा चा
त्मविज्ञानेन सर्वविज्ञानमुच्यमानं नान्यत्र परमकारणविज्ञानान्मुख्यमवकल्पते न चैतदौपचारिकमा
श्रयितुं शक्यं यत्कारणमात्मविज्ञानेन सर्वविज्ञानं प्रतिज्ञायानंतरेण ग्रंथेन तदेवोपपादयति ब्रह्म तं परा
दाद्योन्यत्रात्मनो ब्रह्म वेदेत्यादिना यो हि ब्रह्मक्षत्रादिकं जगदात्मनोन्यत्र स्वातंत्र्येण लब्धसद्भावं पश्य
ति तं मिथ्यादर्शिनं तदेव मिथ्यादृष्टं ब्रह्मक्षत्रादिकं जगत्पराकरोतीति भेददृष्टिमपोद्येदं सर्वं यदयमा
त्मेति सर्वस्य वस्तुजातस्यात्माव्यतिरेकमवतारयति॥ ९. ज्ञानात्सर्वविज्ञानस्य समर्थनादौपचारिकत्वं न युक्तमि



त्याह॥ न चैतदौपचारिकमित्यादिना॥ पराकरोतीत्यत्रे यो मार्गोऽङ्क्ष्यति यथा दुंदुभिशंखवीणाशब्दसामान्यग्रहणेनैव गृह्यमा
णास्तद्वांतरविशेषाः श्रुतिग्रहणग्राह्यास्तत्र तत्सामान्यकल्पिताः ततो भिद्यंत एवमात्मभानभास्यं सर्वमात्ममात्रमिति मिस्थित

दुंदुभ्यादीनि ॥ एवमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञायास्तुत्यत्वाद्ब्रह्मनिश्चयः सर्वस्वरूपत्वलिंगादपीत्याह ॥ अस्य महत इति ॥ ऋग्वे
दादिकं नाम इष्टं हुतमिति कर्म अयं च लोकः परश्च लोक इति रूपं ॥ किंच स यथा सर्वासामपां समुद्र एकायनमिति खंडिकया सर्वप्रपं

दुंदुभ्यादिदृष्टांतैश्चात्मनमेवात्यतिरेकं द्रढयति अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेद इत्यादिना च प्रकृ
तस्यात्मनो नामरूपकर्मप्रपंचकारणतां व्याचक्षाणः परमात्मानमेनं गमयति तथैवैकायनप्रक्रि
यायामपि सविषयस्य सेंद्रियस्य सांतःकरणस्य प्रपंचस्यैकायनमनंतरमबाह्यं कृत्स्नं प्रज्ञानघनं
व्याचक्षाणः परमात्मानमेनं गमयति तस्मात्परमात्मन एवायं दर्शनाद्युपदेश इति गम्यते यत्तूक्तं
प्रियसंसूचितोपक्रमाद्विज्ञानात्मन एवायं दर्शनाद्युपदेश इति अत्र ब्रूमः ॥ १९ ॥ प्रतिज्ञासिद्धेर्लिंगमा
श्मरथ्यः ॥ २० ॥ अस्त्यत्र प्रतिज्ञा आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवतीदं सर्वं यदयमात्मेति च तस्याः
प्रतिज्ञायाः सिद्धिं सूचयत्येतल्लिंगं यत्प्रियसंसूचितस्यात्मनो द्रष्टव्यत्वादिसंकीर्तनं यदि हि विज्ञाना
त्मा परमात्मनोन्यः स्यात् ततः परमात्मविज्ञानेपि विज्ञानात्मा न विज्ञात इत्येकविज्ञानेन सर्वविज्ञानं यत्प्रति
ज्ञातं तद्धीयेत तस्मात्प्रतिज्ञासिद्ध्यर्थं विज्ञानात्मपरमात्मनोरभेदांशेनोपक्रमणमित्याश्मरथ्य आचार्यो म
न्यते ॥ २० ॥ उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ २१ ॥ विज्ञानात्मन एव देहेंद्रियमनोबुद्धिसंघातोपाधिसं
पर्कात्कलुषीभूतस्य ज्ञानध्यानादिसाधनानुष्ठानात्संप्रसन्नस्य देहादिसंघातादुत्क्रमिष्यतः परमात्मैक्यो
पपत्तेरिदमभेदेनोपक्रमणमित्यौडुलोमिराचार्यो मन्यते ॥ ९, समुत्थलया धारत्वमात्मनो ब्रह्मत्वे लिंगमित्याह ॥
तथैवैकायनेति जीवब्रह्मणो भेदाभेदसत्वाद्भेदांशेनेदं जीवोपक्रमणं प्रतिज्ञासाधकमित्याश्मरथ्यमतं ॥ २० ॥ सत्यसंसारदशा ॥

यांभेद एव सुक्त्यावेवाभेद इत्यौडुलोमिमतं तन्मतमाह ॥ मुक्तिरुत्क्रमिष्यत इति ॥ समुत्थानसुत्क्रान्तिः ननु संसारस्यौपाधिकत्वात्सर्वदैवा॰
भेद इत्याशङ्क्य दृष्टान्तबलेन संसारस्य स्वाभाविकत्वमित्याह ॥ क्वचिच्चेति ॥ यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाये॰
ति नदीनिदर्शनं व्याचष्टे ॥ यथा लोक इति ॥ २० ॥ सिद्धान्तमाह ॥ अवस्थितेरिति ॥ अन्यन्ताभेदज्ञापनार्थं जीवमुपक्रम्य द्रष्टव्यत्वाद॰
ब्रह्मधर्मा उक्ता इत्यर्थः एतेन जीवलिङ्गानां ब्रह्मपरत्वकथनार्थमिदमधिकरणं न भवति प्रतर्दनाधिकरणे कथितत्वात् त्वापि जी॰
क्तिरुत्क्रमिष्यत एवं भवति एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत
इति क्वचित्त्वं जीवाश्रयमपि नामरूपं नदीनिदर्शनेन ज्ञापयति यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति
नामरूपे विहाय तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यमिति ॥ यथा लोके नद्यः स्वा॰
श्रयमेव नामरूपं विहाय समुद्रमुपयन्ति एवं जीवोऽपि स्वाश्रयमेव नामरूपं विहाय परं पुरुषमुपैतीति।
हि मन्त्रार्थः प्रतीयते दृष्टान्तदार्ष्टान्तिकयोस्तुल्यत्वाय ॥ २१ ॥ अवस्थितेरिति काशकृत्स्नः ॥ २२ ॥ अस्यै॰
व परमात्मनोऽनेनापि विज्ञानात्मभावेनावस्थानादुपपन्नमिदमभेदेनोपक्रमणमिति काशकृत्स्न आ॰
चार्यो मन्यते ॥ तथा च ब्राह्मणमनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति एवंजातीयकं प॰
रस्यैवात्मनो जीवभावेनावस्थानं दर्शयति ॥ ९ वाक्यान्वयाधिकरणम् ॥ वानुवादेन ब्रह्मप्रतिपादनार्थं सुषुप्त्युत्क्रान्त्योरित्यत्र गतत्वाद॰
तोऽव्यर्थमिदमधिकरणमिति निरस्तं जीवोद्देशेन ब्रह्मत्वप्रतिपादने भेदोऽप्यावश्यक इति भेदाभेदशङ्काप्राप्तौ कल्पितभेदेनोद्दे॰
श्यतादिकं स्वतोऽत्यन्ताभेद इति ज्ञापनार्थमस्यारम्भात् ज्ञापने चात्र लिङ्गं आत्मशब्देनोपक्रान्तस्य जीवस्य धर्मिणो ब्रह्मणो धर्म्यन्त॰
रस्य ग्रहणं विनैव ब्रह्मधर्मकथनं भेदाभेदे धर्मिद्वयग्रहः स्यादिति मन्तव्यम् ॥ ६ ॥ ७ ॥ ६ ॥ ७ ॥ ६ ॥ ९

धीरःसर्वज्ञःसर्वाणिरूपाणिकार्याणिविचित्यसृष्ट्वातेषांनामानिचकृत्वातेषुबुद्ध्यादिषुप्रविश्याभिवदनादिकंकुर्वन्योवर्ततेतेनहिद्वानि
हैवामृतोभवतीतिमंत्रोजीवपरयोरैक्यंदर्शयतीत्याह॥मंत्रेति॥जीवस्यब्रह्मविकारत्वान्नैक्यमित्यतआह॥नचतेजइति॥मतत्रयंवि-
भज्यदर्शयति॥कार्येत्यादिना॥कियानपीतिअभेदवद्भेदोपीत्यर्थः॥तत्रांत्यस्यमतस्योपादेयत्वमाह॥तत्रकार्येतिसोयंदेवदत्तइति।

मंत्रवर्णश्चसर्वाणिरूपाणिविचित्यधीरोनामानिकृत्वाभिवदन्यदास्तइत्येवंजातीयकः नचतेजःप्रभृती
नांसृष्टौजीवस्यपृथक्सृष्टिःश्रुतायेनपरस्मादात्मनोन्यस्तद्विकारोजीवःस्यात् काशकृत्स्नस्य त्वाचार्यस्यावि
कृतःपरमेश्वरोजीवोनान्यइतिमतं आश्मरथ्यस्यतु यद्यपिजीवस्यपरस्मादनन्यत्वमभिप्रेतंतथापिप्र
तिज्ञासिद्धेरितिसापेक्षत्वाभिधानात्कार्यकारणभावःकियानप्यभिप्रेतइतिगम्यते औडुलोमिपक्षेपुनः
स्पष्टमेवावस्थांतरापेक्षौभेदाभेदौगम्येते॥ तत्रकाशकृत्स्नीयंमतंश्रुत्यनुसारीतिगम्यते प्रतिपिपादयि
षितार्थानुसारात् तत्त्वमसीत्यादिश्रुतिभ्यः एवंचसतितत्तज्ज्ञानादमृतत्वमवकल्पते विकारात्मकत्वे हिजीव
स्याभ्युपगम्यमानेविकारस्यप्रकृतिसंबंधेप्रलयप्रसंगात्तज्ज्ञानादमृतत्वमवकल्पेत अतश्चस्वाश्रयस्य
नामरूपस्यासंभवात् उपाध्याश्रयनामरूपंजीवउपचर्यते॥अतएवोत्पत्तिरपिजीवस्यक्वचिदग्निवि-
स्फुलिंगोदाहरणेनश्राव्यमाणोपाध्याश्रयैववेदितव्या॥ ११ वतत्त्वमस्यादिवाक्येभ्यःपरापरयोरत्यंताभेदःप्रतिपाद-

यितुमिष्टोर्थः तदनुसारित्वादित्यर्थः॥ ज्ञानान्मुक्तिश्रुत्यन्यथानुपपत्त्याप्ययमेवपक्षआदेयइत्याह॥एवंचेति॥अत्यंताभेदेसतीत्यर्थः
कल्पितस्यभेदस्यज्ञानान्निवृत्तिःसंभवतितत्सत्यस्येत्यपिदुर्घटंयदुक्तंनदीदृष्टांतात्संसारःस्वाभाविकइतितत्रेत्याह॥अतश्चेति॥
अनामरूपब्रह्मत्वाज्जीवस्येत्यर्थः॥उत्पत्तिश्रुत्याजीवस्यब्रह्मणाभेदाभेदाविनत्यतआह॥अतएवेति॥उत्पत्तेःस्वाभाविकत्वेमुक्त्ययो

अत्र पूर्वपक्षे बीजत्रयमुक्तं जीवेनोपक्रमः परस्यैव समुत्थानश्रुत्या जीवाभेदाभिधानं विज्ञातृशब्दश्चेति तत्राद्यं बीजं त्रिसूत्र्या
निरस्तं संप्रति द्वितीयमनूद्य तदेव निराचष्टे॥ यदप्युक्तमित्यादिना॥ आत्मज्ञाना सर्वविज्ञानं यत्प्रतिज्ञानं तत्र हेतुरिदं सर्वं यदयमा

यदप्युक्तं प्रकृतस्यैव महतो भूतस्य द्रष्टव्यस्य भूतेभ्यः समुत्थानं विज्ञानात्मभावेन दर्शयन् विज्ञानात्मन
एवेदं द्रष्टव्यत्वं दर्शयतीति तत्रापीयमेव त्रिसूत्री योजयितव्या प्रतिज्ञासिद्धेर्लिंगमाश्मरथ्यः इदमत्र प्रति
ज्ञातमात्मनि विदिते सर्वं विदितं भवतीदं सर्वं यदयमात्मेति च उपपादितं च सर्वस्य नामरूपकर्मप्रपंचस्यै
कप्रसवत्वादेकप्रलयत्वाच्च दुंदुभ्यादिदृष्टांतैश्च कार्यकारणयोरव्यतिरेकप्रतिपादनात् तस्या एव प्रतिज्ञा
याः सिद्धिं सूचयत्येतल्लिंगं यन्महतो भूतस्य द्रष्टव्यस्य भूतेभ्यः समुत्थानं विज्ञानात्मभावेन कथितमित्याश्म
रथ्य आचार्यो मन्यते अभेदे हि सत्येकविज्ञानेन सर्वविज्ञानप्रतिज्ञानमवकल्पत इति उत्क्रमिष्यत एवंभा
वादित्यौडुलोमिः उत्क्रमिष्यतो विज्ञानात्मनो ज्ञानध्यानादिसामर्थ्यात्संप्रसन्नस्य परेणात्मनैक्यसंभवा।
दिदमभेदाभिधानमित्यौडुलोमिराचार्यो मन्यते॥ अवस्थितेरिति काशकृत्स्नः अस्यैव परमात्मनोनेनापि
विज्ञानात्मभावेनावस्थानादुपपन्नमिदमभेदाभिधानमिति काशकृत्स्न आचार्यो मन्यते॥ ननूच्छेदाभिधा
नमेतत् एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीति कथमेतदभेदाभिधानं नैष दो
षः विशेषविज्ञानविनाशाभिप्रायमेतद्विनाशाभिधानं नात्मोच्छेदाभिप्रायं अत्रैव मा भगवानमूमुहत्प्रे
त्य संज्ञास्तीति पर्यनुयुज्य स्वयमेव श्रुत्यार्थांतरस्य दर्शितत्वात्॥ ९ त्विमत्यव्यतिरेक उक्तस्तस्य प्रतिपादनात्तदेव प्रति

ज्ञातमुपपादितमिति योजना एकस्मात्प्रसवो यस्य एकस्मिन्प्रलयो यस्य तत्ता वा तदित्यर्थः समुत्थानमभेदाभिधानमिति यावत् जन्मनाशा

मृतस्य संज्ञा नास्तीति वाक्ये नैव मां मोहितवानसि विज्ञानरूपस्यात्मनो ज्ञानाभावेन नाशप्रसंगादिति मैत्रेय्योक्तो मुनिराह ॥ न वा अर
इति ॥ मोहं मोहकरवाक्यं अविनाशी नाशहेतुशून्यः अत उच्छित्तिधर्मा नाशवान्न भवतीत्यनुच्छित्तिधर्मेत्यर्थः ॥ तृतीयं बीजं तृती
येन मतेनैव निरसनीयमित्याह ॥ यद्यपीत्यादिना ॥ आद्यमतद्वयेऽपि सत्यभेदांगीकारात्केनेत्याक्षेपो न युक्तः काशकृत्स्नस्य मते तु ।

न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अयमात्मानुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवतीति । एतदुक्तं भवति
कूटस्थनित्य एवायं विज्ञानघन आत्मा नास्योच्छेदप्रसंगोऽस्ति मात्राभिस्त्वस्य भूतेन्द्रियलक्षणाभिर-
विद्याकृताभिः संसर्गो विद्यया भवति संसर्गाभावे च तत्कृतस्य विशेषज्ञानस्याभावान्न प्रेत्य संज्ञास्ती-
त्युक्तमिति ॥ यदप्युक्तं विज्ञातारमरे केन विजानीयादिति कर्तृवचनेन शब्देनोपसंहाराद्विज्ञातात्मन एव
वेदं द्रष्टव्यत्वमिति तदपि काशकृत्स्नीयेनैव दर्शनेन परिहरणीयं ॥ अपि च यत्र हि द्वैतमिव भवति तदि-
तर इतरं पश्यतीत्यारभ्याविद्याविषये तस्यैव दर्शनादिलक्षणं विशेषविज्ञानं प्रपंच्य यत्र त्वस्य सर्वमा-
त्मैवाभूत्तत्केन कं पश्येदित्यादिना विद्याविषये तस्यैव दर्शनादिलक्षणस्य विज्ञानस्याभावमभिदधाति पुन-
श्च विषयाभावेऽप्यात्मानं विजानीयादित्याशंक्य विज्ञातारमरे केन विजानीयादित्याह ततश्च विशेषविज्ञा-
नाभावोपपादनपरत्वाद्वाक्यस्य विज्ञानधातुरेव केवलः सन्भूतपूर्वगत्या कर्तृवचनेन तृचा निर्दिष्ट इति ।

त्यत्र भेदाद्विज्ञानस्य कारकाभावात्संयुक्त इति भृक्त्यनुसारित्वात्तन्मते मनः कल्पितं विज्ञातृत्वं मुक्ते ब्रह्मात्मनि [illegible]गास्यते ॥
भूतपूर्वगत्योक्तमिति परिहरणीयमित्यर्थः ॥ किंच पूर्वापरपर्यालोचनया वाक्यस्य मुक्तात्मपरत्वावगमाद्विज्ञातृत्वं कल्पितमसे-
वानूद्यत इति न तल्लिंगेन जीवपरत्वमित्याह ॥ अपि चेति ॥

आर्षेषु पक्षेषु काशकृत्स्नपक्षस्यैवादेयत्वे किं बीजं तदाह दर्शितमिति ॥ अतश्चेति श्रुतिमत्त्वाच्च पुनरपि श्रुतिस्मृतिमत्त्वमाह ॥ सदेवेत्यादि
ना हि नूनं भेदो न पारमार्थिक इति प्रतिज्ञया संबंधः भेदाभेदपक्षे जीवस्य जन्मादिविकारवत्त्वात्तन्निषेधो न स्यादित्याह ॥ सबाधपट इति भेद
स्य सत्यत्वेन त्वमयाबाधादहं ब्रह्मेति निर्बाधज्ञानं न स्यादित्याह ॥ अन्यथा चेति ॥ अभेदस्यापि सत्वात्त्वमेवेत्याशंक्य भेदाभेदयोर्विरोधात्संश

दर्शितं तु पुरस्तात्काशकृत्स्नीयस्य पक्षस्य श्रुतिमत्त्वं अतश्च विज्ञानात्मपरमात्मनोरविद्याप्रत्युपस्थापित
नामरूपरचितदेहाद्युपाधिनिमित्तो भेदो न पारमार्थिक इत्येषोऽर्थः सर्वैर्वेदांतवादिभिरभ्युपगंतव्यः सदेव
सोम्येदमग्र आसीदेकमेवाद्वितीयं आत्मैवेदं सर्वं ब्रह्मैवेदं सर्वं इदं सर्वं यदयमात्मा नान्योऽतोऽस्ति द्रष्टेत्येवंरूपा
भ्यः श्रुतिभ्यः स्मृतिभ्यश्च वासुदेवः सर्वमिति क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत समं सर्वेषु भूतेषु तिष्ठंतं प
रमेश्वरमित्येवंरूपाभ्यः भेददर्शनापवादाच्चान्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः मृत्योः स मृत्युमाप्नोति
य इह नानेव पश्यतीत्येवंजातीयकात् स वा एष महानज आत्माजरोऽमरोऽमृतोऽभयो ब्रह्मेति चात्मनि सर्वक्रि
याप्रतिषेधात् अन्यथा च मुमुक्षूणां निरपवादविज्ञानानुपपत्तेः सुनिश्चितार्थत्वानुपपत्तेश्च निरपवादं हि वि
ज्ञानं सर्वाकांक्षानिवर्तकमात्मविषयमिष्यते वेदांतविज्ञानसुनिश्चितार्था इति च श्रुतेः तत्र को मोहः कः शो
क एकत्वमनुपश्यत इति च स्थितप्रज्ञलक्षणस्मृतेश्च स्थिते च क्षेत्रज्ञपरमात्मैकत्वविषये सम्यग्दर्शने
क्षेत्रज्ञः परमात्मेति नाममात्रभेदात्क्षेत्रज्ञोऽयं परमात्मनो भिन्नः परमात्मायं क्षेत्रज्ञाद्भिन्न इत्येवंजातीय

यः स्यादित्याह ॥ सुनिश्चितेति ॥ मास्तु निर्बाधज्ञानमित्यत आह ॥ निरपवादमिति ॥ अहं ब्रह्मेत्यबाधितनिश्च ((कआत्मभेदवि
यस्यैव शोकादिनिवर्तकत्वमित्यत्र स्मृतिमप्याह ॥ स्थितेति ॥ अयं निकैकत्वे हि प्रज्ञा प्रतिष्ठिता भवति न भेदाभेदयोरिति भावः ननु जीव

कथंतर्ह्येकपर्यायनामभेदइत्याशंक्यजीवत्वेश्वरत्वादिनिमित्तभेदादित्याह ॥ एकोहीति ॥ किंचाविद्यातत्कार्यबुद्धिरूपायांगुहायांस्थितोजीवो भवतितस्यामेवब्रह्मनिहितमितिश्रुतेःस्यान्नैक्यंजीवब्रह्मणोरित्याह ॥ नहीति ॥ कांचिदेवैकामितिजीवस्यानादित्वमित्यर्थः ॥ नन्वे कस्यांगुहायांद्वौनकिंस्यातामित्यतआह ॥ नचेति ॥ स्रष्टुरेवप्रवेशेनजीवत्वान्नभेदः ननुत्वंनाभेदेजीवस्यस्रष्टभावाद्ब्रह्मापिस्रष्टंस्या दतःस्रष्टत्वास्रष्टत्वाभ्यांनयोर्भेदइतिचेन्नदर्पणप्रतिबिंबस्यस्फुटत्वेपिबिंबस्यास्फुटत्ववत्कल्पितभेदेनविरुद्धधर्मव्यवस्थोपप।

एकोह्ययमात्मानाममात्रभेदेनबहुधाभिधीयतइतिनहि सत्यंज्ञानमनंतंब्रह्मयोवेदनिहितंगुहायामि तिकांश्चिदेवैकांगुहामधिकृत्येतदुक्तं ॥ नचब्रह्मणोन्यागुहायांनिहितोस्तितत्सृष्ट्वातदेवानुप्राविशदितिस्र ष्टुरेवप्रवेशश्रवणात् येतुनिर्बन्धंकुर्वन्तितेवेदानार्थंबाधमानाः श्रेयोद्वारंसम्यग्दर्शनमेवबाधंतेकृतकम नित्यंचमोक्षंकल्पयंतिन्यायेनचनसंगच्छंतइति ॥ २२ ॥ प्रकृतिश्चप्रतिज्ञादृष्टांतानुपरोधात् ॥ २३ ॥ यथा भ्युदयहेतुत्वाद्धर्मोजिज्ञास्यएवंनिःश्रेयसहेतुत्वाद्ब्रह्मजिज्ञास्यमित्युक्तंब्रह्मचजन्माद्यस्ययतइतिलक्षि तंतच्चलक्षणंघटरुचकादीनांमृत्सुवर्णादिवत्प्रकृतित्वेकुलालसुवर्णकारादिवन्निमित्तत्वेचसमानमित्य तोभवतिविमर्शःकिमात्मकंपुनर्ब्रह्मणःकारणत्वंस्यादिति ॥

११ ते: सत्यभेदेयेषामाग्रहः तेषांदोषमाह ॥ येति ति ॥ सोयमितिवत्तत्त्वमसीत्यकार्यकारणद्रव्यसामानाधिकरण्यादत्यंताभेदोवेदानार्थस्तद्बोधएवनिःश्रेयससाधनंतत्रबा धोनयुक्तइत्यर्थः किंचभेदाभेदवादिनोज्ञानकर्मभ्यांकृतकंमोक्षंकल्पयंतितत्रानित्यत्वदोषः यत्तुकृतकमपिनित्यमितित त्वयत्क्रियासाध्यंतदनित्यमितिन्यायबाधितंअस्माकंत्वनर्थध्वंसस्यज्ञानसाध्यत्वान्नित्यमुक्तात्ममात्रत्वाच्चनानित्यत्वदोषइति भावः तस्मान्मैत्रेयीब्राह्मणंप्रत्यग्ब्रह्मणिसमन्वितमितिसिद्धं ॥ २२ ॥ प्रकृतिश्चेतिलक्षणसूत्रेणास्यसंगतिंवक्तुंवृत्तंस्मारयति ॥ य

शां·भा·
टी·
र·म·
१६२

तत्र हि ब्रह्मणो बुद्धिस्थत्वार्थं सामान्यतो जगत्कारणत्वं लक्षणमुक्तं तेन बुद्धिस्थे ब्रह्मणि कृत्स्नवेदान्तसमन्वयं प्रतिपाद्य तत्कारणत्वं किं
कर्तृत्वमात्रमुत प्रकृतित्वकर्तृत्वोभयरूपमिति विशेषजिज्ञासायामिदमारभ्यते तथा च सामान्यज्ञानस्य विशेषचिंताहेतुत्वात्तेनास्य सं
गतिः यद्यपि तद्दानं तदर्थमस्य युक्तं तथापि निश्चितं नान्यथैवं वेदान्तैः कर्तृमात्रेश्वरमतनिरासः सुकर इति समन्वयात् इदं लिखितं तल्लक्षण
सूत्रस्याध्यायादिसंगतत्वादस्याप्यध्यायादिसंगतिः॥ पूर्वत्र सर्वविज्ञानप्रतिज्ञायामुक्तत्वाद्ब्रह्मणः स जीवपरत्वं निरस्तं तदयुक्तं कर्त्रुपा

तत्र निमित्तकारणमेव तावत्केवलं स्यादिति प्रतिभाति कस्मात् ईक्षापूर्वककर्तृत्वश्रवणात् ईक्षापूर्वकं
हि ब्रह्मणः कर्तृत्वमवगम्यते स ईक्षांचक्रे स प्राणमसृजतेत्यादिश्रुतिभ्यः ईक्षापूर्वकं च कर्तृत्वं निमित्त-
कारणेष्वेव कुलालादिषु दृष्टं अनेककारकपूर्विका च क्रियाफलसिद्धिर्लोके दृष्टा स च न्याय आदिकर्तर्य-
पि युक्तः संक्रमयितुं ईश्वरत्वप्रसिद्धेश्च ईश्वराणां हि राजवैवस्वतादीनां निमित्तकारणत्वमेव केवलं प्रती-
यते तद्वत्परमेश्वरस्यापि निमित्तकारणत्वमेव युक्तं प्रतिपत्तुं कार्यं चेदं जगत्सावयवमचेतनमशुद्धं च
दृश्यते कारणेनापि तस्य तादृशेनैव भवितव्यं कार्यकारणयोः सारूप्यदर्शनात् ब्रह्म च नैवं लक्षणमवग-
म्यते निष्कलं निष्क्रियं शान्तं निरवद्यं निरंजनमित्यादिश्रुतिभ्यः॥ १ दानयोर्भेदेन प्रतिज्ञाया गौणत्वादित्याक्षिपति॥

तत्र निमित्त इत्यादिना॥ पूर्वोत्तरपक्षयोर्द्वैताद्वैतसिद्धिः फलं ईक्षापूर्वकेति ईक्षणश्रुत्या कर्तृत्वं निश्चितं तथा च ब्रह्म न प्रकृतिः कर्तृ-
त्वाद्यो यत्कर्ता स तत्प्रकृतिर्न यथा घटकर्ता कुलाल इत्यर्थः जगद्भिन्नकर्त्रुपादानकं कार्यत्वाद्घटवदित्याह अनेकेति॥ ब्रह्म नोपादा-
नमीश्वरत्वाद्राजादिवदित्याह॥ ईश्वरेति जगन्न ब्रह्मप्रकृतिकं तद्विलक्षणत्वात् यदित्थं न तत्तथा कुलालविलक्षणघटवदित्याह॥ का-
र्यं चेति॥ निष्कलं निरवयवं निष्क्रियमचलं शान्तमपरिणामि निरवद्यं निरस्तसमस्तदोषं तत्र हेतुर्निरंजनमिति अंजनतुल्यतमः शून्य

अ·पा·
२।४

राम·
१६२

तर्हि जगतः सदृशोपादानं किमित्यत आह ॥ पारिशेष्यादिति ॥ ब्रह्मनिषेधप्रधानं परिशिष्यत इत्यभिमानः सिद्धांतयति प्रकृतिश्चेति चकारा
न्निमित्तत्वग्रहः एवमुभयरूपे कारणत्वे तयोरबाधो भवतीत्याह ॥ एवमिति ॥ कर्तृज्ञानादपि सर्वकार्यज्ञानं किं न स्यादित्यत आह ॥ निमि
त्तकारणाव्यतिरेकस्त्विति मृदादीनामुपादानानां दृष्टांतत्वाद्दार्ष्टांतिकस्य ब्रह्मण उपादानत्वं वाच्यमित्याह दृष्टांतोपीति वाचारंभणं नामम

पारिशेष्याद्ब्रह्मणोन्यदुपादानकारणमशुद्ध्यादिगुणकं स्मृतिप्रसिद्धमभ्युपगंतव्यं ब्रह्मकारणत्वश्रुतेर्निमित्त
त्वमात्रे पर्यवसानादित्येवं प्राप्ते ब्रूमः प्रकृतिश्च उपादानकारणं च ब्रह्माभ्युपगंतव्यं निमित्तकारणं च न केवलं नि
मित्तकारणमेव कस्मात्प्रतिज्ञादृष्टांतानुपरोधात् ॥ एवं प्रतिज्ञादृष्टांतौ श्रौतौ नोपरुध्येते प्रतिज्ञा तावत् उत तमा
देशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति तत्र चैकेन विज्ञातेन सर्वमन्यदविज्ञात
मपि विज्ञातं भवतीति प्रतीयते तच्चोपादानकारणविज्ञाने सर्वविज्ञानं संभवति उपादानकारणाव्यतिरेकात्का
र्यस्य निमित्तकारणाव्यतिरेकस्तु कार्यस्य नास्ति लोके तक्ष्णः प्रासादव्यतिरेकदर्शनात् दृष्टांतोपि यथा सो
म्यैकेन मृत्पिंडेन सर्वं मृण्मयं विज्ञातं स्याद्वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यमित्युपादानकारण
गोचर एवाम्नायते तथैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यादेकेन नखनिकृंतनेन सर्वं कार्ष्णायसं वि
ज्ञातं स्यादिति च तथान्यत्रापि कस्मिन्नु भगवो विज्ञाते सर्वमिदं विदितं भवतीति प्रतिज्ञाय यथा पृथिव्यामोष
धयः संभवंतीति दृष्टांतः तथा आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितमिति प्रतिज्ञा ॥ (( तत्र विकारो न

वस्तुतोस्तीति सत्यकारणज्ञानाद्विकारज्ञानं युक्तमित्यर्थः गतिसामान्यार्थं मुंडकेपि प्रतिज्ञादृष्टांतावाह ॥ तथान्यत्रापीति बृहदारण्य
केपि ताबाह ॥ तथात्मनीति ॥ घटः स्फुरतीत्यनुगतस्फुरणं प्रकृतिस्तदतिरेकेण विकारा न संतीति सोयमर्थो यथा स्फुटः स्यात्तथा दृष्टांतः

शा.भा. टी. र.प्र. १६२

स उच्यते हन्यमानदुंदुभिजन्यात् शब्दसामान्याद्ग्राह्यान्विशेषशब्दान्सामान्यग्रहणातिरेकेण पृथग्गृहीतुं श्रोता न शक्नुयात्सामान्यस्य तु ग्र-
हणेन दुंदुभ्याघातजशब्दविशेषो गृहीतो भवतीति तस्य वा ग्रहणेन तद्वांतरविशेषशब्दो गृहीतो भवति अतः शब्दसामान्यग्रहणग्राह्याः ।
विशेषाः सामान्ये कल्पिताः तद्वदात्मभानभास्या घटादय आत्मनि कल्पिता इत्यर्थः ॥ प्रतिज्ञादृष्टांतानुपरोधाल्लिंगाद्ब्रह्मणः प्रकृतित्वमु-
क्त्वा पंचमीश्रुत्याप्याह ॥ यत इति ॥ यतो वा इत्यत्र श्रुतौ यत इति पंचमी प्रकृतौ द्रष्टव्येत्यन्वयः जनिकर्तुर्जायमानस्य कार्यस्य प्रकृतिर-

अ.पा. १४

स यथा दुंदुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय दुंदुभेस्तु ग्रहणेन दुंदुभ्याघातस्य वा श-
ब्दो गृहीत इति दृष्टांतः एवं यथासंभवं प्रतिवेदांतं प्रतिज्ञादृष्टांतौ प्रकृतित्वसाधनौ प्रत्येतव्यौ ॥ यत इतीयं
पंचमी यतो वा इमानि भूतानि जायंत इत्यत्र जनिकर्तुः प्रकृतिरिति विशेषस्मरणात्प्रकृतिलक्षण एवापादा-
ने द्रष्टव्या निमित्तत्वं त्वधिष्ठात्रंतराभावादधिगंतव्यं यथा हि लोके मृत्सुवर्णादिकमुपादानकारणं कुलाल-
सुवर्णकारादीनधिष्ठातॄनपेक्ष्य प्रवर्त्तते नैवं ब्रह्मण उपादानकारणस्य सतोऽन्योऽधिष्ठातापेक्ष्योऽस्ति ॥ प्रागुत्प-
त्तेरेकमेवाद्वितीयमित्यवधारणादधिष्ठात्रंतराभावोऽपि प्रतिज्ञादृष्टांतानुपरोधादेवोदितो वेदितव्यः ॥ अधि-
ष्ठातर्युपादानादन्यस्मिन्नभ्युपगम्यमाने पुनरप्येकविज्ञानेन सर्वविज्ञानस्यासंभवात्प्रतिज्ञादृष्टांतोपरो-
ध एव स्यात् तस्मादधिष्ठात्रंतराभावादात्मनः कर्तृत्वमुपादानांतराभावाच्च प्रकृतित्वं ॥ २३ ॥ कुतश्चात्मनः कर्तृ-

साम. १६२

पादानसंज्ञिका भवतीति सूत्रार्थः संज्ञायाः फलं अपादाने पंचमीति सूत्रात्प्रकृतौ पंचमीलाभः एवं ब्रह्मणः प्रकृतित्वं प्रसाध्य कर्तृत्वं प्र-
साधयति ॥ निमित्तत्वमिति ॥ ब्रह्मस्वातिरिक्तकर्त्रधिष्ठेयं प्रकृतित्वान्मृदादिवदित्याद्यनुमानानां आगमबाधकमाह ॥ प्रागुत्पत्तेरिति ॥
जगत्कर्तृ ब्रह्मैवेत्यत्रापि सूत्रं योजयति अधिष्ठातरीति ॥ २३ ॥ एकस्योभयरूपं कारणत्वमविरुद्धमिति सूत्रचतुष्टयेन साधयति कुत-

अभिध्या सृष्टिसंकल्पः ॥ २४ ॥ अभ्युच्चयो हेत्वंतरं आकाशादेवेत्येवकारसूचितमुपादानांतरानुपादानमग्रहणं साक्षादितिपदेन सू
त्रकारो दर्शयतीति योजना ॥ २५ ॥ आत्मसंबंधिनी कृतिरात्मकृतिः संबंधश्चात्मनः कृतिं प्रति विषयत्वमाश्रयत्वं चेत्यनुकृतेराश्रयः सिद्धो

अभिध्योपदेशाच्च ॥ २४ ॥ अभिध्योपदेशश्चात्मनः कर्तृत्वप्रकृतित्वे गमयति सोकामयत बहु स्यां प्रजायेये
ति तदैक्षत बहु स्यां प्रजायेयेति च तत्राभिध्यानपूर्विकायाः स्वातंत्र्यप्रवृत्तेः कर्तेति गम्यते बहु स्यामिति प्रत्य
गात्मविषयत्वाद्बहुभवनाभिध्यानस्य प्रकृतिरित्यपि गम्यते ॥ २४ ॥ साक्षाच्चोभयाम्नानात् ॥ २५ ॥ प्रकृतित्व
स्यायमभ्युच्चयः इतश्च प्रकृतिर्ब्रह्म यत्कारणं साक्षाद्ब्रह्मैव कारणमुपादायोभौ प्रभवप्रलयावाम्नायेते सर्वा
णि ह वा इमानि भूतान्याकाशादेव समुत्पद्यंते आकाशं प्रत्यस्तं यंतीति च यद्धि यस्मात्प्रभवति यस्मिंश्च प्रलीयते
तत्तस्योपादानं प्रसिद्धं यथा व्रीहियवादीनां पृथिवी साक्षादिति चोपादानांतरानुपादानं दर्शयत्याकाशादेवे
ति प्रत्यस्तमयश्च नोपादानादन्यत्र कार्यस्य दृष्टः ॥ २५ ॥ आत्मकृतेः परिणामात् ॥ २६ ॥ इतश्च प्रकृतिर्ब्रह्म यत्
कारणं ब्रह्मप्रक्रियायां तदात्मानं स्वयमकुरुतेत्यात्मनः कर्मत्वं कर्तृत्वं च दर्शयति आत्मानमिति कर्मत्वं स्वय
मकुरुतेति कर्तृत्वं कथं पुनः पूर्वसिद्धस्य सतः कर्तृत्वेन व्यवस्थितस्य क्रियमाणत्वं शक्यं संपादयितुं ॥ परि
णामादिति ब्रूमः पूर्वसिद्धोपि सन्नात्मा विशेषेण विकारात्मना परिणमयामासात्मानमिति विकारात्मना च
परिणामो मृदाद्यासु प्रकृतिषूपलब्धः स्वयमिति च विशेषणान्निमित्तांतरानपेक्षत्वमपि प्रतीयते ॥ ६ ॥

भवति विषयस्तु साध्यइत्येकस्योभयं विरुद्धमित्याशंकते ॥ कथं पुनइति ॥ यथा मृदः साध्यपरिणामाभेदेन कृतिविषयत्वं तद्वदात्मनइ
त्याह ॥ परिणामादिति आत्मानमित्यविरोधइ विशेषः सिद्धस्यापि साध्यत्वे दृष्टांतमाह ॥ विकारात्मनेति ननु ब्रह्मण आत्मानमिति द्वितीयया

ब्रह्मणः कृतिकर्मत्वोपपादनार्थं परिणामादिति पदं व्याख्यायान्यथापि व्याचष्टे पृथक्सूत्रमिति मृद्घट इतिवद्ब्रह्मसत्त्वत्यत्त्वे इति परि
णामसामानाधिकरण्यस्मृतेः ब्रह्मणः प्रकृतित्वमित्यर्थः सत्त्वं त्यत्संभूतत्वयं त्यत्परोक्षंभूतद्वयं निरुक्तं वंकुंशकंघटादिः अनिरुक्तं वकुं
मशक्यंकपोतरूपादिकं ब्रह्मैवाभवदित्यर्थः ॥२६॥ अत्र सूत्रे परिणामशब्दः कार्यमात्रपरः न तु सत्यकार्यात्मकपरिणामपरः तदन
न्यत्वमिति विवर्त्तवादस्य वक्ष्यमाणत्वात् योनिशब्दाच्च प्रकृतित्वमित्याह ॥ योनिश्चेति ॥ कर्त्तारं क्रियाशक्तिमंतं ईशं नियंतारं पुरुषं।



परिणामादिति वा पृथक्सूत्रं न स्येषोर्थः इतश्च प्रकृतिर्ब्रह्म यत्कारणं ब्रह्मण एव विकारात्मना परिणामः सा
मानाधिकरण्येनाम्नायते सत्त्वत्यत्त्वाभवन्निरुक्तं चानिरुक्तं चेत्यादिनेति ॥ २६ ॥ योनिश्च हि गीयते ॥ २७ ॥
इतश्च प्रकृतिर्ब्रह्म यत्कारणं ब्रह्मयोनिरित्यपि पठ्यते वेदांतेषु कर्त्तारमीशं पुरुषं ब्रह्मयोनिमिति यद्भूतयोनिं
परिपश्यंति धीरा इति च योनिशब्दश्च प्रकृतिवचनः समधिगतो लोके पृथिवी योनिरोषधिवनस्पतीनामिति
स्त्रीयोनेरप्यस्त्येवावयवद्वारेण गर्भं प्रत्युपादानकारणत्वं क्वचित्स्थानवचनोपि योनिशब्दो दृष्टः योनिष्ट
इंद्र निषदे अकारीमिति वाक्यशेषात् अत्र तु प्रकृतिवचनता परिगृह्यते यथोर्णनाभिः सृजते गृह्णते चे।
त्येवंजातीयकात् सर्वं प्रकृतित्वं ब्रह्मणः प्रसिद्धं ॥ यत्पुनरिदमुक्तं ईक्षापूर्वकं कर्तृत्वं निमित्तकारणेष्वेव कु
लालादिषु लोके दृष्टं नोपादानेष्वित्यादि तत्प्रत्युच्यते न लोकवदिह भवितव्यं ॥ ९९ प्रत्यं च ब्रह्मपूर्णयोनिं प्रकृतिं



ध्यानेन पश्यंतीत्यर्थः ॥ नन्वनुपादानेपि स्त्रीयोनौ योनिशब्दो दृष्ट इत्यत आह ॥ स्त्रीयोनेरिति शोणितमवयवशब्दार्थः ॥ योनि
शब्दस्य स्थानमप्यर्थो भवति सोत्र भूतयोन्यादिशब्देन ग्राह्यः ऊर्णनाभ्यादिप्रकृतदृष्टांतवाक्यशेषविरोधादित्याह ॥ क्वचिदिति ॥
हे इंद्र ते न वनिषदे उपवेशनाय योनिः स्थानं मया अकारि कृतमित्यर्थः पूर्वपक्षोक्तानुमानान्यनूद्यागमवाधमाह यत्पुनरित्यादिना ॥

नन्वनुमानस्यश्रुत्यनपेक्षत्वान्नतयाबाधइत्यतआह॥ नहीतिजगत्कर्त्तोपक्षः श्रुत्यैवसिध्यतियाप्रकृतिः साशरीरजन्येतिव्याप्तिविरो
धेननित्यप्रकृतिमतोनुमानासंभवादतः श्रौतमीश्वरंपक्षीकृत्यानुपादानत्वसाधनेभवत्येवोपजीव्ययाप्रकृतित्वबोधकश्रुत्या
बाधइत्यर्थः यदुक्तंविलक्षणत्वाद्ब्रह्मणोनजगदुपादानत्वमितितत्राह पुनश्चेति॥ नविलक्षणत्वादित्यारभ्येत्यर्थः। अतःउ
भयरूपंकारणत्वंब्रह्मणोलक्षणमितिसिद्धं॥ एतेनसर्वेव्याख्याताः अस्मातिदेशाधिकरणस्यतात्पर्यंवक्तुंवृत्तमनुवदति॥ ईक्षते

नह्ययमनुमानगम्योर्थः शब्दगम्यत्वात्त्वस्यार्थस्ययथाशब्दमिहभवितव्यंशब्दश्चेक्षितुरीश्वरस्य
प्रकृतित्वंप्रतिपादयतीत्यवोचाम पुनश्चैतत्सर्वंविस्तरेणप्रतिपादयिष्यामः॥ २७॥ एतेनसर्वेव्या
ख्याताव्याख्याताः॥ २८॥ ईक्षतेर्नाशब्दमित्यारभ्यप्रधानकारणवादःसूत्रैरेवपुनःपुनराशंक्यनिरा
कृतः तस्यहिपक्षस्योपोद्बलकानिकानिचिल्लिंगाभासानिवेदांतेष्वापातेनमंदमतीन् प्रतिभासंतीतिस
चकार्यकारणानन्यत्वाभ्युपगमात्प्रत्यासन्नोवेदांतवादस्यदेवलप्रभृतिभिश्चकैश्चिद्धर्मसूत्रकारैःस्व
ग्रन्थेष्वाश्रितः तेनतत्प्रतिषेधेयत्नोतीवकृतोनाण्वादिकारणवादप्रतिषेधे तेपितुब्रह्मकारणवादपक्ष
स्यप्रतिपक्षत्वात्प्रतिषेद्धव्याः॥ तेषामप्युपोद्बलकंवैदिकंकिंचिल्लिंगमापातेनमंदमतीन्प्रतिभायादित्य
तःप्रधानमल्लनिबर्हणन्यायेनातिदिशति॥ ११. इति॥ प्रधानवादस्यप्राधान्येननिराकरणेहेतुमाह॥ तस्यही

त्यादिना॥ तर्ह्यणुवादिवादाउपेक्षणीयादुर्बलत्वादित्यतआह॥ तेपितिति॥ निर्मूलास्तेकथंप्रतिपक्षाइत्यतआह॥ तेषामिति न
यादिछांदोग्येजगत्कारणत्वज्ञापनार्थंपितापुत्रमुवाच आसांवटधानानांमध्येएकांभिंद्धीतिभिन्नाभगवइत्युवाचपुत्रःपुनःपित्रा
किमत्रपश्यसीत्युक्तेनकिंचनभगवइत्याह तत्रपित्राणिमानंनपश्यसीत्युक्तंतथाचनकिंचनशब्दाच्छून्यस्यभाववादोप्रतीयेते॥

शा·भा· टी·

अणुशब्दात्परमाणुवाद इति एवमसदेवेदमग्र आसीदणोरणीयानित्यादिलिंगं द्रष्टव्यं अत्राण्वादिवादाः श्रौतानन्वेतिसंगते सन्त्यसदण्वादिशब्दबलाच्छ्रौता इति प्राप्तेऽतिदिशति ॥ एतेनेति ॥ अस्यातिदेशत्वान्न पृथक्संगत्याद्यपेक्षा न किंचनासच्छब्द:प्रत्यक्षायोग्यवस्तुपरत्वादणुशब्दस्य सूक्ष्माभिप्रायत्वादशब्दत्वं तेषां वादानां प्रधानवादवदश्रौतत्वं ब्रह्मकारणश्रुतिबाधितं।

अ·पा· १।४

एतेन प्रधानकारणवादप्रतिषेधन्यायकलापेन सर्वेऽण्वादिकारणवादा अपि प्रतिषिद्धतया व्याख्याता वेदितव्याः तेषामपि प्रधानवदशब्दत्वाच्छब्दविरोधित्वाच्चेति व्याख्याता व्याख्याता इति पदाभ्यासोऽध्यायपरिसमाप्तिं द्योतयति ॥ १ ॥ इति श्रीशारीरकमीमांसाभाष्ये शंकरभगवत्पादकृतौ प्रथमस्याध्यायस्य चतुर्थः पादः समाप्तः प्रथमोऽध्यायः ॥

राम· १६४

तच्च न स्यात् ब्रह्मैव परमकारणं तस्मिन्नेव सर्वेषां वेदान्तानां समन्वय इति सिद्धम् ॥ ७ ॥ इति श्रीपरमहंसपरिव्राजकाचार्यश्रीगोविंदानंदभगवत्कृतौ शारीरमीमांसाव्याख्यायां भाष्यरत्नप्रभायां प्रथमस्याध्यायस्य चतुर्थः पादः समाप्तः प्रथमोऽध्यायः ॥ ~~ ॥ ~~ ॥ ॥ श्रीरामचंद्रार्पणमस्तु ॥ शुभम्भवतु ॥ ग्रंथसंख्या ॥ १३०० ॥ प्रथमअध्यायसंख्या ॥ ७७६५ ॥

